श्रीपरमात्मने नमः

शाब्दिकचूडामणिश्रीशाकटायनाचार्यविरचितं

# शब्दानुशासनम्

अर्थात्

श्रीमदभयचन्द्रसूरिप्रणीतप्रक्रियासंग्रहसहितं

# शाकटायनं व्याकरणम्

अध्यापककुलोत्पन्नबालान्तर्वाणिना

संशोधितम्

प्रकाशकौ

मुम्बयीस्थ- पं० ज्येष्ठाराममुकुन्दजीशर्म्मा

पन्नालालजैनश्च

कोल्हापूरनगरस्थ 'जैनेन्द्र' मुद्रणालये मुद्रितम्

वीरनि० सं० २४३३ । ईस्वीसन १९०७ ।

मूल्यं सपादं रूप्यकत्रयम् ।



# प्रस्तावना.

महाशयाः ! अस्मिन् खलु भारते वर्षे सुप्रसिद्धसंस्कृतशब्दानुशासनप्रणेतृपाणिनिमुनेः पूर्वमपि महान्तोऽनेके शाब्दिका* आचार्या बभूवुरित्यसंशयम् ॥ तेषु जैना बौद्धाश्च शाब्दिकाः प्रधाना इति महान्तः पण्डिता मन्यन्ते । तदन्तर्गत एवायं महामुनिः श्रीशाकटायनाचार्यो यत्प्रणीतमिदं चतुरध्यायात्मकं शब्दानुशासनमिदानीमप्यस्मिन् भारतवर्षे चकास्ति । एतच्छब्दानुशासनगतसूत्रार्थप्रकाशका बहवः टीकाग्रन्था उपलभ्यन्ते । तेन च सर्वेषामकलुषितधियां पण्डितप्रवराणां बहुषु शब्दानुशासनेषु वर्तमानेष्वप्येतस्मिन्नेव निरंकुशा प्रवृत्तिरासीदित्यनुमीयते । इदानीं चावाभ्यां श्रीमदभयचन्द्रसूरिप्रणीतप्रक्रियासङ्ग्रहाख्यवृत्त्यलङ्कृतमिदं शब्दानुशासनमङ्कयित्वा संस्कृतसाहित्यानुरागिणां विदुषामग्र उपायनीक्रियते । आशासे च दृष्ट्वैवैतददृष्टपूर्वं रत्नमुपलभ्य च गुणदोषविवेकपेशलप्रज्ञा उदाराशया विचक्षणा अवश्यं प्रसादमधिगच्छेयुरिति ।

एतच्छशब्दानुशासनं सूत्रपाठ–धातुपाठ–गणपाठ–लिङ्गानुशासन–सूत्रपाठोणादिसूत्रपाठभेदेन पञ्चधा विभक्तमतिक्लेशेन सम्पाद्यास्माभिर्यथावका-

---

* पाणिनिप्रणीताष्टाध्याय्यपराभिधसूत्रपाठे येषां नामान्युपलभ्यन्ते ते च यथा––
"व्योर्लघुप्रयत्नतरः शाकटायनस्य" (८।३।१८।) इत्यत्र शाकटायनः
"इक चाक्रवर्मणस्य" ६।१।१३०। इत्यत्र चाक्रवर्मणः
"वा सुप्यापिशलेः" ६।१।९२। इत्यत्र आपिशलिः
"लोपः शाकल्यस्य" ८।३।१९। इत्यत्र शाकल्यः ।
"अनङ् स्फोटायनस्य" (६।१।१२३।) इत्यत्र स्फोटायनः इत्यादि

श्रमाभियुक्तजनप्रमोदार्थमध्येतृजनानुग्रहार्थं च तेभ्यो व्ययीकृतद्रव्यमात्रसंग्रहद्वारा तेषां सन्निधौ समर्प्य ग्रन्थकर्तृश्रमः सफलीक्रियते ।

अयं प्रक्रियासङ्ग्रहो रामनन्दवस्विन्दुमितखिस्ताब्दे (१८९३)गुस्तव आपर्ट इत्यभिधानेनांग्लपण्डितेन प्राचीनविद्यानुरागिणाऽनल्पव्ययेन मद्रदेशे मुद्रापयित्वा प्रकाशितः । अत एव मद्रशार्मण्यादिसुदूरविषयेष्वपि लब्धप्रचारोऽयं ग्रन्थः पाणिनीयशब्दानुशासनतोऽपि शाकटायनप्रणीतशब्दानुशासनस्याधिकोपयोगितां प्रख्यापयंस्तत्रत्यसंख्यावद्भ्यो भूयसीं प्रशंसामलभतेति सुप्रसिद्धमेव । एतत्सूत्रोपरि चिन्तामण्यभिधां वृत्तिं विदधता विद्वत्प्रवरेण महात्मना यक्षवर्माचार्येण श्रीशाकटायनाचार्य एवमुपस्थीयते—

स्वस्ति श्रीसकलज्ञानसाम्राज्यपदमाप्तवान् ॥
महाश्रमणसङ्घाधिपतिर्यः शाकटायनः ॥ १ ॥
एकः शब्दाम्बुधिं बुद्धिमन्दरेण प्रमथ्य यः ॥
सयशःश्रि समुद्दध्रे विश्वं व्याकरणामृतम् ॥ २ ॥
स्वल्पग्रन्थं सुखोपायं सम्पूर्णं यदुपक्रमम् ॥
शब्दानुशासनं सार्वमर्हच्छासनवत्परम् ॥ ३ ॥
इष्टिर्नेष्टा न वक्तव्यं वक्तव्यं सूत्रतः पृथक् ॥
संख्यातं नोपसंख्यातं यस्य शब्दानुशासने ॥ ४ ॥
तस्यातिमहतीं वृत्तिं संहृत्येयं लघीयसी ॥
सम्पूर्णलक्षणा वृत्तिर्वक्ष्यते यक्षवर्मणा ॥ ५ ॥
इन्द्रचन्द्रादिभिः शाब्दैर्यदुक्तं शब्दलक्षणम् ॥
तदिहास्ति समस्तं च यन्नेहास्ति न तत्क्वचित् ॥ ६ ॥

श्रीमता पाणिन्याचार्येण स्वीयसूत्रपाठे स्वस्मात्पूर्वं प्रादुर्भूतानामनेकेषामाचार्याणां मतानि तत्तदाचार्यनामनिर्देशपूर्वकं संगृहीतानि । तत्रैतस्य शाब्दिकचूडामणेः श्रीशाकटायनस्य मतं प्रसङ्गानुप्रसङ्गतः क्वचित् नामनिर्देशपूर्वकं क्वचिन्नामानिर्दिश्य च बहुषु सूत्रेषु संगृहीतं तद्यथा— पाणिनिप्रणीताष्टाध्यायीगततृतीयाध्यायगतचतुर्थपादे "लङः शाकटायनस्यैव"

इति एकादशोत्तरशततमं सूत्रं शाकटायनीयशब्दानुशासनांतर्गतप्रथमाध्याया-न्तर्भूतचतुर्थपादस्य पञ्चाधिकशततमस्य "आह्विषो झेर्जुरवा" इत्येतत्सूत्रस्य विषयमनुवदति। तथा अष्टाध्यायीगताष्टमाध्यायस्य तृतीयपादे "व्योर्लघुप्रयत्नतरः शाकटायनस्य" इत्यष्टादशतमं सूत्रं शाकटायनीयशब्दानुशासनगतप्रथमाध्यायीयप्रथमपादस्थस्य पञ्चपञ्चाशदधिकैकशततमस्य "वा नुव्यात्" इत्येतत्सूत्रस्य विषयमनुवदति। दिङ्मात्रप्रदर्शनमेतत् यतः सुधीभिर्न दुरूहमिति। एतेन श्रीशाकटायनाचार्यस्य पाणिन्याचार्यात् प्राक्तनत्वं शाब्दिकाग्रणीत्वं च सुस्पष्टं प्रतीयत इति चिन्तामणिकृद्यक्षवर्माचार्यस्तुतिर्नानन्वर्थेति विदांकुर्वन्तु कृतधियः।

अन्यच्च— ऋग्यजुर्वेदयोः प्रातिशाख्ये तथा यास्कमुनिप्रणीते निरुक्ते च श्रीमतः शाकटायनाचार्यस्य नामसंकीर्तनमुपलभ्यते। तथा व्याकरण-महाभाष्यप्रणेत्रा महामुनिना भगवता पतञ्जलिनाऽपि अष्टाध्यायीयतृतीयाध्यायान्तर्गतचतुर्थपादस्यैकादशोत्तरैकशततमसूत्रस्य तथा तृतीयाध्यायीयतृतीयपादगतस्य 'उणादयो बहुलम्' इति प्रथमसूत्रस्य च भाष्यावसरे इदमुक्तं,—

नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्॥
वैयाकरणानां च शाकटायन आह धातुजं नाम॥ १॥ इति

अपरं च श्रीमच्छाकटायनाचार्यप्रणीतान्युणादिसूत्राणि सर्वैरपि प्राचीनैः शाब्दिकप्रवरैरङ्गीकृतानि तथा पाणिनिनाऽपि तान्येवोररीकृतानि नान्यानि निबद्धानीत्येतदपि शाकटायनाचार्यस्य शाब्दिकधौरेयत्वं प्रख्यापयतीति नाविज्ञेयं सुधियाम्। शाकटायनाचार्यप्रणीतोणादिसूत्राणां व्याख्यानानि तूज्ज्वलदत्तमाधवाचार्यादिभिर्व्यरच्यन्तेति सुप्रसिद्धम्॥

अथ बोपदेवकृतकविकल्पद्रुमे—

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः॥
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः॥ १॥

इत्यष्टादिशाब्दिकजयघोषणायामिन्द्रादीनां शाकटायनाचार्यात्प्राक्कालि-

कत्वं सुस्पष्टम् । परं श्रीशाकटायनाचार्यप्रणीतसूत्रेषु अष्टादिशाब्दिकान्त-र्गतस्य केवलमेकस्येन्द्रस्य नाम, तथा सिद्धनन्द्यार्यवज्रेति द्वे नामनी इति पूर्वाचार्यनामत्रयमुपलभ्यते । तेन चन्द्रादिषु केषाञ्चित् श्रीशाकटायना-चार्यात्पूर्वमप्रादुर्भावः केषाञ्चिदजैनत्वं चानुमीयते । यतो निसर्ग एवायं दिगम्बरजैनाचार्याणामन्यमतावलम्बिनां वचः प्रमाणत्वेन नोपन्यस्यते, तत्कृतग्रन्थानां व्याख्यानमपि नोट्टङ्क्यत इति । एतेन श्रीशाक-टायनाचार्यस्य वैदिकधर्मानुवर्तित्वमवगच्छतां केषाञ्चिन्मतं न कथमपि स्थैर्यमवलम्बत इत्यवयन्तु विवेकिनः ।

एतस्य शाकटायनव्याकरणस्य निम्नलिखितानि व्याख्यानानीदानी-मुपलभ्यन्ते,—

१ **अमोघवृत्तिः**—एतत् पाणिनिव्याकरणव्याख्यानभूतां काशि-कावृत्तिमनुकरोति । इदं व्याख्यानमतिविस्तृतं सुस्पष्टं च वर्तते ।

२ **न्यासः**— इदं त्वमोघवृत्तिव्याख्यानं श्रीप्रभाचन्द्राचार्य-विरचितम् ।

३ **चिन्तामणिः अथवा लघुवृत्तिः**— यक्षवर्मप्रणीतं व्याख्यानम् । इदं गणपाठादिपञ्चकसमवेतं शीघ्रमेवाङ्कयित्वा प्रकाशयिष्यावः ।

४ **मणिप्रकाशिका**— चिन्तामणेरियं टीका, अजितसेनाचा-र्यप्रणीता ।

५ **प्रक्रियासंग्रहः**— श्रीमदभयचन्द्राचार्यविरचितः । ग्रन्थोऽयं सिद्धान्तकौमुदीसदृशो विद्यार्थिनामतीवोपकारकः । अत एव प्रथममयं मुद्रापितः ।

६ **शाकटायनव्याकरणस्य टीका**— श्रीभावसेनत्रि-विद्यदेवकृता ।

७ **रूपसिद्धिः**— इयं लघुकौमुदीतुल्या स्वल्पप्रमाणेति ।

श्रीशाकटायनाचार्येण स्वकीये शब्दानुशासने वैदिकी स्वरप्रक्रिया यद्यप्युपेक्षिता तथापि वैदिकशब्दास्तत्रतत्र सुप्रपञ्चं साधिता एवेति पाणिनितो न लवमात्रमपि न्यूनताऽऽचार्यवर्यस्य। ईदृशमपि शब्दानुशासनमिदं वैदिकैर्विद्वद्भिस्सर्वथोपेक्षितमित्यत्रापीदमेकं कारणं यत् स्वरप्रक्रियाभावः। इदमपि प्रमाणं महामुनेरस्य जैनत्वमवगमयति। तथा न्यासादीन्येतच्छब्दानुशासनव्याख्यानानि जैनपण्डितैरेव विरचितानीत्येतन्मानमपि चास्य जैनत्वं साधयति॥ महामुनेः श्रीशाकटायनाचार्यस्य कालनिर्णयादिकं सर्वं यक्षवर्माचार्यकृतचिन्तामणिप्रकाशनावसरे सविस्तरं निरूपयिष्यावः॥

एतस्य प्रक्रियासंग्रहस्य मुद्रापणसमये ये ये महाशयाः पुस्तकवितरणादिनोपचक्रुः तेषां नामान्यग्रे प्रदर्श्यन्ते—

१ श्रीयुतैः गौरीलालविद्वद्भिरेकं पूर्वार्धमात्रस्य पुस्तकं प्रेषितं तत्प्रायः शुद्धम्।

२ स्वस्ति श्रीभट्टारकलक्ष्मीसेनमहास्वामिनां सरस्वतीभंडारस्थं कार्णाटलिप्यलंकृतमेकं सटिप्पणं ताडपत्रपुस्तकं तैरेव कृपया दत्तम्

३ श्रीयुतैः जैनसिद्धान्तकोविदैर्दोर्बलिजिनदासशास्त्रिभिः श्रवणबेळगोळक्षेत्रनिवासिभिरेकं ताडपत्रोपरि कार्णाटलिप्या सटिप्पणमालिखितं पुस्तकं प्राचीनविद्यासमुद्दिधीर्षया प्रेषितम्।

४ महाशयैर्हूणपण्डितैरापर्टाभिधैर्मद्रनगरे मुद्रितमेकं पुस्तकं सूत्रपाठसंवलितमस्मत्समीपस्थम्। एतेषां सुगृहीतनामधेयानां महाशयानां विद्याभिवृद्धिमभीप्सतां त्रयाणामप्युपकारं न विस्मरिष्यावः। तथा एतत्पुस्तकमुद्रापणसमये तच्छोधनादिविषये करवीरनिवासिभिरध्यापककुलोत्पन्नैर्बालशर्मान्तर्वाणिभिरपि बहूपकृतमिति कृतज्ञतामाविष्कृत्य विरम्यते।

प्रकाशकौ—

मुम्बयी — **पं. ज्येष्ठाराममुकुंदजीशर्मा**

१०–१–०७ — **पन्नालालजैनश्च.**



# हिंदीप्रस्तावना.

विदित हो कि इस भारतवर्षमें सुप्रसिद्ध शब्दानुशासनप्रणेता पाणिनि मुनिसे पहिले अनेक वैयाकरणाचार्य हो गये हैं। उनमेंसे जैन और बौद्ध मतके आचार्य मुख्य और प्रथम गिने जाते हैं. उनमेंसे महामुनि **शाकटायनाचार्य** भी एक प्रसिद्ध वैयाकरणी हैं जिनका बनाया हुवा चार अध्यायका "**शब्दानुशासनग्रन्थ**" अब भी इस भारतभूमिपर विद्यमान है, जिसपर भाष्य और टीका भी अनेक प्रकारकी विद्यमान हैं. अतएव जाना जाता है कि पूर्वकालमें निर्मल बुद्धिवाले विद्वानोंकी अनेक व्याकरणोंके विद्यमान होते हुये भी इसमें निरंकुश प्रवृत्ति हुई है। उन टीकाओंमेंसे आज हम श्रीमदभयचन्द्रसूरिविरचित '**प्रक्रियासंग्रह**' नामकी टीका सहित उक्त शब्दानुशासनको प्रकाशित करके संस्कृत साहित्यानुरागी विद्वानोंके सम्मुख

---

१ पाणिनिमुनिका प्रादुर्भाव ईस्वीसनसे पूर्व ८०० वा ७०० के बीचमें हुवा मानते हैं।

२ पाणिनिप्रणीताष्टाध्यायीमें निम्नलिखित प्राचीन वैयाकरणाचार्योंके नाम मिलते हैं।

| | |
|---|---|
| १ व्योर्लघुप्रयत्नतरः शाकटायनस्य ८।३।१३०। | शाकटायन। |
| २ ई३ चाक्रवर्मणस्य ६।१।१३०। | चाक्रवर्मण। |
| ३ वा सुप्यापिशलेः ६।१।९२। | आपिशलि। |
| ४ लोपः शाकल्यस्य ८।३।१९। | शाकल्य। |
| ५ अवङ् स्फोटायनस्य ६।१।१२३। | स्फोटायन। इत्यादि। |

रखते हैं। आशा है कि इस अदृष्टपूर्वरत्नको देखकर विद्वज्जन अवश्य ही प्रसन्न होंगे।

इस शब्दानुशासनग्रन्थके सूत्रपाठ, धातुपाठ, गणपाठ, लिङ्गानुशासन और उणादि पाठ ऐसें पांच भाग हैं. ये पांचो ही पाठ मय टीकाओंके प्राप्त हैं और जहांतक हमसे बनैगा साहित्यानुरागी विद्वानोंके प्रमोदार्थ व सर्व साधारणके हितार्थ इन सब ही ग्रन्थोंके प्रकाशित करनेका प्रयत्न करेंगे।

यह प्रक्रियासंग्रह ग्रन्थ मय सूत्रपाठके ईस्वीसन १८९३ मैं प्राचीनविद्यानुरागी आंग्लपंडित गुस्तव आपर्ट साहबके द्वारा मद्रासमें मुद्रित हो चुका है। जिससे मद्रासप्रान्त और जर्मन आदि दूरदूरके देशोंमें इसका प्रचार होकर इसकी सुख्याति भी हो चुकी है. अर्थात् जिन २ विद्वानोंने इसे देखा है उन्होंनें मुक्तकंठसे भूयसी प्रशंसा कियी है। तथा पाणिनीयव्याकरणकी अपेक्षा इसको अधिक उपयोगी बतलाया है। इसके सिवाय इस ग्रन्थपर यक्षवर्माचार्य महाशयनें चिन्तामणि नामकी टीका बनाते समय मङ्गलाचरणके अनन्तर इस ग्रन्थकी प्रशंसामें जो कुछ कहा है वह हम यहां उद्धृत कर देते हैं.—

स्वस्ति श्रीसकलज्ञानसाम्राज्यपदमाप्तवान् ॥
महाश्रमणसंघाधिपतिर्यः शाकटायनः ॥ १ ॥
एकः शब्दाम्बुधिं बुद्धिमन्दरेण प्रमथ्य यः ॥
सयशःश्रिं समुद्दध्रे विश्वं व्याकरणामृतम् ॥ २ ॥
स्वल्पग्रन्थं सुखोपायं संपूर्णं यदुपक्रमम् ॥
शब्दानुशासनं सार्वमर्हच्छासनवत्परम् ॥ ३ ॥
इष्टिर्नेष्टा न वक्तव्यं वक्तव्यं सूत्रतः पृथक् ॥
संख्यातं नोपसंख्यातं यस्य शब्दानुशासने ॥ ४ ॥
तस्यातिमहतीं वृत्तिं संहृत्येयं लघीयसी ।
सम्पूर्णलक्षणा वृत्तिर्वक्ष्यते यक्षवर्मणा ॥ ५ ॥

इन्द्रचन्द्रादिभिः शाब्दैर्यदुक्तं शब्दलक्षणम् ॥
तदिहास्ति समस्तं च यन्नेहास्ति न तत्क्वचित् ॥ ६ ॥

इनका अर्थ— जो समस्त प्रकारके ज्ञानरूपी साम्राज्यपदको प्राप्त हुये और जो महामुनियोंके संघके अधिपति हैं ऐसे शाकटायनाचार्य कल्याणके कर्ता हो ॥ १ ॥

जिसने शब्दशास्त्ररूपी समुद्रको अपनी बुद्धिरूपी मंदराचलसे मन्थनकरके यश और श्रीसहित सर्वांगसुदर व्याकरणरूपी अमृतको निकाला वह एक ये ही आचार्य हैं ॥ २ ॥

यह शब्दानुशासन अर्हत् शासनके समान उत्कृष्ट है. बहुत विस्तारवाला नहीं है थोड़ेमेंसे ही सब कुछ वर्णन कर दिया है ऐसा है तथा सुखोपाय है अर्थात् व्याकरणके सब अंग पूरे २ हैं और समस्त व्याकरणोंसे पहिलेका है ॥ अर्हत् शासनके पक्षमें स्वल्पग्रन्थ थोड़ी परिग्रहका रखनेवाला, सुखोपाय अर्थात् परमसुखका एकमात्र उपायभूत, सम्पूर्ण, समस्त अंगोंसे परिपूर्ण, उपक्रम कहिये समस्तमतोंसे पहिलेका आदिभूत है ॥ ३ ॥

शाकटायनाचार्य ऐसे पूर्ण वैयाकरण हैं कि जिनके शब्दानुशासनमें पाणिनीयव्याकरणकी समान सूत्रोंमें कोई भी त्रुटि नहीं है अर्थात् सूत्रोंसे पृथक् पातंजलिकृत इष्टिकी इष्टता नहीं होती, कात्यायनीके 'वा वाच्यं' 'वक्तव्यं' की भी आवश्यकता नहीं है। तथा उपसंख्यानोंकी भी आवश्यकता नहीं हैं ॥ ४ ॥

उसही शब्दानुशासनकी महावृत्तिको संक्षिप्त करके यह समस्तलक्षणविशिष्ट लघुवृत्ति मुझ यक्षवर्माचार्यद्वारा कही जायगी ॥ ५ ॥

इन्द्रचन्द्रादि शाब्दिकोंने ( वैयाकरणाचार्योंने ) जो कुछ शब्दशास्त्र कहे हैं अथवा शब्दोंका स्वरूप वर्णन किया है वह सब इस शब्दानुशासनमें सम्पूर्णतया विद्यमान है और जो कुछ शब्दलक्षण इसमें नहीं है वह किसी अन्यव्याकरणमें भी नहीं है ॥ ६ ॥

पाणिनिमुनिनें अपनें अष्टाध्यायी सूत्रपाठमें पहिले होनेवाले अनेक शाब्दिकोंका मत ग्रहण किया है उनमें शाब्दिकचूडामणि शाकटायनाचार्यके शब्दानुशासनका मत भी शाकटायनाचार्यका नाम देकर तथा कहीं २ विना नाम दिये ही ग्रहण किया है. जैसें,—

पाणिनीयव्याकरणकी अष्टाध्यायीके तीसरे अध्यायके चौथे पादमें १११ वाँ सूत्र '**लङः शाकटायनस्यैव**' सूत्र है सो इस शब्दानुशासनके प्रथम अध्याय चौथे पादके १०५ वें '**आद्विषोऽर्जुस्वा**' सूत्रका मत लिया है। तथा पाणिनिके आठवें अध्याय तीसरे पादका १८ वाँ सूत्र '**व्योर्लघुप्रयत्नतरः शाकटायनस्य**' है सो इस शब्दानुशासनके प्रथम अध्याय प्रथमपादके १५५ वें सूत्र '**वा लुप्यात्**' का मत लिया है । इसीप्रकार अनेक जगहँ इस शब्दानुशासनका मत ग्रहण किया है सो विद्वानोंसे कुछ छिपा हुवा नहीं है। इसपरसे ये शाकटायनाचार्य पाणिनिसे पहिले और शाब्दिकोंके अग्रणी हैं सो स्पष्टतया सिद्ध है। और चिन्तामणिटीकाके कर्त्ता यक्षवर्माचार्यनें जो कुछ प्रशंसा कियी है वह किसी प्रकार भी असंगत नहीं है।

इसके अतिरिक्त ऋग्वेद और शुक्लयजुर्वेदके प्रातिशाख्यमें तथा यास्काचार्यके निरुक्तमें भी इस शाकटायनाचार्यका नाम मिलता है तथा पाणिनीय व्याकरणपर भाष्य बनानेवाले पतञ्जलिमहाराजने भी अष्टाध्यायी ३।४।१११। और ३।३।१। के **उणादिबहुलं** इस सूत्रका भाष्य रचते समय कहा है कि—

नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम् ।
वैयाकरणानां च शाकटायन आह धातुजं नाम इति ॥

---

१ अनेक विद्वान् कहते हैं कि प्रातिशाख्यमें जिसका नाम आया है वह शाकटायन 'जैन नहीं' वेदानुयायी है परन्तु अभीतक कोई पुष्ट प्रमाण प्रकट नहिं हुवा है कि जिससे ऐसा माना जाय ॥

इसके अतिरिक्त महामुनि श्रीशाकटायनाचार्यके बनाये हुये उणादि सूत्रका अधिकार तो सब ही वैयाकरणोंने स्वीकार किया है। पाणिनिमहाराजने भी 'उणादिबहुलं' एतावन्मात्र सूत्र बनाकर शाकटायनके उणादिसूत्रपाठको स्वीकार किया है अर्थात् उन्होंनें कोई नया उणादिसूत्रपाठ नहिं रचा। इससे विद्वज्जनोंको शाकटायनाचार्यका शाब्दिकाग्रगण्यत्व स्पष्टतया ज्ञात होगा। इस उणादिसूत्रपाठपर उज्वलदत्त, माधवाचार्य आदिनें टीका भी रची हैं।

बोपदेवनें कविकल्पद्रुममें भी इन्द्र, चन्द्र, काशकृत्स्न, आपिशलि, शाकटायन, पाणिनि अमर और जैनेंद्र[1] इन आठ आचार्योंको वैयाकरणोंमें प्रधान मानकर इनका जय मनाया है यथा—

**इन्द्रश्चन्द्रः काशकृत्स्नापिशलिः शाकटायनः।**
**पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः[2]॥**

परन्तु शाकटायन व्याकरणमें केवलमात्र 'इन्द्र, सिद्धनन्दी' और आर्यवज्र इन तीन ही आचार्योंका नामोल्लेख हुवा है जो कि ये तीनों ही आचार्य जैन थे। क्योंकि दिगंबरजैनाचार्योंका नियम है कि वे अपने ग्रन्थकी पुष्टिकेलिये भिन्नधर्मावलम्बीके ग्रन्थका प्रमाण कदापि नहिं लेते और न भिन्नधर्मावलम्बीके ग्रन्थपर टीका ही करते हैं॥ इसपरसे इन श्रीशाकटायनाचार्यको वैदिक मानना निर्मूल है सो विद्वानोंको विचारना चाहिये।

इस शब्दानुशासनपर निम्नलिखित टीकायें मिलती हैं॥

**१ अमोघवृत्तिः—** यह पाणिनीयव्याकरणकी काशिकावृत्तिकी समान विस्तृत और विशद महावृत्ति है

---

१ जैनेन्द्रस्वामीके अपरनाम देवनंदी, और पूज्यपाद, अधिक प्रसिद्ध हैं। इनका बनाया हुवा व्याकरण भी अनेक टीकाओं सहित विद्यमान है॥

२ इन आठों वैयाकरणोंमेंसे पाणिनिके अतिरिक्त शेष वैयाकरणाचार्य जैन और बौद्ध ही सिद्ध होते हैं॥

२ **न्यास**— यह अमोघवृत्तिटीकापर श्रीप्रभाचन्द्राचार्य-विरचित न्यास है ।

३ **चिन्तामणि टीका** अथवा **लघुवृत्ति**— यह टीका यक्षवर्माचार्यकृत है इसको हम शीघ्र ही पांचों पाठोंसहित छपावैंगे ।

४ **मणिप्रकाशिका टीका**— चिन्तामणि टीकापर श्रीअ-जितसेनाचार्यकृत टीका है ।

५ **प्रक्रियासंग्रह**— श्रीअभयचन्द्राचार्यविरचित यह सिद्धा-न्तकौमुदीकी तरहँ प्रक्रियाटीका है ॥ यह विद्यार्थियोंको अतिशय उपयोगी है इस कारण ही हमने सबसे पहिले इसीको ही छपाया है ।

६ **शाकटायनव्याकरणस्य टीका**—भावसेन त्रैविद्यदेव-विरचित ।

७ **रूपसिद्धि**— यह लघुकौमुदीकी समान छोटी प्रक्रिया है ।

इस शब्दानुशासनमें विशेष लक्ष देने योग्य बात यह है कि इसमें पाणिनीयकी समान स्वरवैदिकीके वर्णनकी उपेक्षा की है तथापि इस व्याकरणमें वैदिक शब्दोंका विवेचन जगहँ २ पर किया है अतएव इस विषयमें भी इस ग्रन्थकी योग्यता पाणिनीयसे कम नहीं है ॥

शाकटायनाचार्य महाराजनें स्वरवैदिकी प्रक्रियापर लक्ष्य नहिं दिया इसीकारणसे ही वैदिक विद्वानोंने ऐसे अद्वितीय शब्दानुशासनको सर्वथा भुला दिया परन्तु इसपरसे यह स्पष्ट सिद्ध होगया कि यह शाकटायनाचार्य जैन थे और इसीकारण ही जैनाचार्योंनें इसपर टीका और न्यासादि रचे हैं और इसी कारण ही जैनग्रन्थोंकी टीकाओंमें प्रमाण भी शाकटायन और जैनेन्द्रव्याकरणका ही ग्रहण किये गये हैं ।

शाकटायनाचार्य कैसे वैयाकरण थे और कब हुये और यह व्याकरण कैसा उपयोगी है इत्यादि विषयोंकी आलोचना हम यक्षवर्मा-

कृत चिन्तामणिटीकाके छपाते समय विस्तारसे लिखनेकी इच्छा रखकर इस प्रस्तावनाको यहींपर पूरी करते हैं ।

इस प्रक्रियाको छपाते समय हमको १ प्रति पूर्वार्द्ध मात्र श्रीयुत पंडित गौरीलालजी जैनसे प्राप्त हुई सो प्रायः शुद्ध है ।

**दूसरी प्रति**— कर्णाटकीय लिपीमें सटिप्पण ताडपत्र पुस्तक कोल्हापूर जैनमठके भट्टारक श्रीलक्ष्मीसेन महाराजसे प्राप्त हुई ।

**तीसरी प्रति**— जैनसिद्धान्तकोविद श्रवणबेळगुळ–निवासी श्रीदोर्बलिजिनदास शास्त्रीसे ताडपत्रपर कर्णाटकी लिपीकी सटिप्पण प्राप्त हुई ।

**चौथी प्रति**— हूणपंडित गुस्तव आपर्ट साहबकी छपायी हुई हमारे पास थी ।

इन चारों पुस्तकोंपरसे शुद्ध करके मय टिप्पणीके इसे छपाया है । इसकारण उक्त चारों महाशयोंका हृदयसे आभार मानकर इस पुस्तकके शुद्ध करनेमें अध्यापककुलोत्पन्न बालशर्मान्तर्वाणि महाशयसे अतिशय सहायता प्राप्त हुई है इस कारण इनका भी कोटिशः धन्यवादपूर्वक आभार मानते हैं ।

प्रकाशक,

मुम्बयी
१०–१–०७

पंडित ज्येष्ठाराम मुकुंदजी
और
पन्नालाल बाकलीवाल.



पंडित ज्येष्ठाराम मुकुंदजी पुस्तकालयका

संस्कृत तथा भाषापुस्तकका

# सूचीपत्रम्.

संस्कृत, तथा भाषाटीका, और केवल भाषापुस्तक.

| | | |
|---|---|---|
| श्रीमद्भागवत बालप्रबोधिनी टीकासहित (द्वितीयावृत्ति) | | |
| चिकणा कागज | १६ | रु. |
| अणुभाष्यम् (व्याससूत्रभाष्यम्) प्रकाशसमेतम् | | |
| अपूर्णम् (यंत्रस्थ) | १२ | रु. |
| पूर्वमीमांसादर्शनम् (सविषयाधिकरणम्) | ॥। | |
| वैशेषिकदर्शनम् (विषयानुक्रमयुतम्) | ८= | |
| बृहत् सांख्यदर्शनम् (लघु) सांख्यदर्शनम् | ८= | |
| पातञ्जलयोगदर्शनम् | ८- | |
| वेदांतदर्शनम् (मतांतरीयपाठान्तरादियुतम्) | ८= | |
| न्यायदर्शनं टिप्पणसहितम् (विषयानुक्रमयुतम्) | ८= | |
| षट्दर्शनानि | १॥ | |
| त्रिंशच्छ्लोकी सव्याख्या-(धर्मशास्त्रं) [विषयसूचीसहिता] | | |
| दशश्लोकी (त्रिंशच्छ्लोकीपरिशिष्टभूता) चतुःश्लोकी | | |
| (त्रिंशच्छ्लोकीपरिशिष्टभूता) | ।= | |
| तर्कसंग्रहः सिद्धान्तचन्द्रोदयटीकासमेतः-(न्यायः) | ॥ | |
| कारिकावलिः-(भाषापरिच्छेदः) सिद्धान्तमुक्तावली- | | |
| सहितः (,,) | ॥ | |
| श्रीसूक्तं सभाष्यम् | । | |
| पुरुषसूक्तं सभाष्यम् | ८= | |

| | |
|---|---|
| षट्चक्रनिरूपणं सटीकम् | ॥ |
| दक्षिणामूर्तिस्तोत्रम् सटीकम् | १ |
| विधिस्वरूपविचारः (पूर्वमीमांसा) | ।= |
| पारस्करगृह्यसूत्रम् (यजुर्वेदीयम्) | ।= |
| आश्वलायनगृह्यसूत्रं सटीकम् (ऋग्वेदीयम्) | २ |
| संध्याप्रयोगः ( „ ) | ६-॥ |
| संध्याप्रयोगः (यजुर्वेदीयः) | ६- |
| रुद्री यजुर्वेदीयाष्टाध्यायी | ६≡ |
| रुद्री सामवेदीयलघुन्याससहिता | । |
| वेदान्तसंज्ञाप्रकरणं सटीकम् | । |
| दीनता आश्रयके पद | ॥ |
| कुण्डसिद्धिः--सटीका | ।= |
| आशौचनिर्णयः--(धर्मशास्त्रं) | ६- |
| तर्कभाषा--(न्यायः) | । |
| लक्षणावली--(न्यायः) | ६= |
| विवेकचूडामणिः मूलम्--(वेदान्तः) | । |
| वेदान्तशास्त्रम् (पंचस्तोत्रं अभिलाषाष्टकं च) | ६- |
| तत्त्वोपदेशः (वेदान्त) | ६- |
| शिवानंदलहरी | ६≡ |
| धातुमंजरी--(व्याकरणम्) | १ |
| पंचदशी सटीका--अन्वयांकसहिता | २ |
| जातकचन्द्रिका („) | ।= |
| कुंडलिकल्पतरुः („) | । |
| यंत्रचिन्तामणिः (तंत्रम्) | ।= |



श्रीसरस्वत्यै नमः

# शाकटायनप्रक्रियासंग्रहः



। सञ्ज्ञाप्रकरणम् ।

मुनीन्द्रमभिवन्द्याहं पाल्यकीर्तिं जिनेश्वरम् ।
मन्दबुद्ध्यनुरोधेन प्रक्रियासंग्रहं ब्रुवे ॥ १ ॥

तत्रादौ शास्त्रे[1] संव्यवहारार्थं संज्ञासंग्रहः कथ्यते। **अइउण्[2] १ ऋक्[3] २ एओङ् ३ ऐऔच् ४ हयवरलञ् ५ ञमङणनम् ६ जबगडदश् ७ झभघढधष् ८ खफछठथट् ९ चटतव् १० कपय् ११ शषस अं अः ×क ×प[4] र् १२ हल् १३ ।** इति वर्णसमाम्नायः अणादिप्रत्याहारार्थः । तत्राणित्येतत्प्रत्याहार[5]विधिरुच्यते ।

१ **अप्रयोगीत्** । १।१।५। इहोपदिष्टो वर्णः समुदायो वा यो लौकिकशब्दप्रयोगे न दृश्यते स इत्संज्ञो भवति । अइउणित्यत्र णकारस्येत्संज्ञायाम् ।

---

१ प्रकृतिप्रत्ययविभागेन प्रयोगार्हशब्दप्रतिपादनम् ॥ २ अचामिह तु सर्वेषां निपातत्वोपदर्शनात् ॥ सन्देहजनकत्वाच्च सन्धिस्तु न विधीयते ॥ १ ॥ इति जैनेन्द्रे. ३ लकारस्य ग्रहणं दीर्घऋकारस्यैव भवत्यतो न पृथक्कृतम् । अन्यैरपि "ऋऌवर्णयोर्मिथः सावर्ण्यं वाच्यम्" इत्युक्तत्वात् ॥ ४ अनुस्वारविसर्गजिह्वामूलीयोपध्मानीया अपि गृह्यन्ते । अन्यैरगृहीतत्वात्तत्रामव्याभिः ॥ ५ प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा अनेनेति प्रत्याहारः । प्रस्तुतानां वर्णानामेकमुखीकरणं वा प्रत्याहारः ॥ प्रत्याहारो हि वर्णैकमुखीकरणमिष्यते ॥ इति जैनेन्द्रे ॥

२ सात्मेतेत्[1] ।१।१।१। इता सहोपदिष्टो वर्णः समुदायो वा आत्मनः प्रभृत्या तस्मादितो व्यवस्थितानामात्मनश्च संज्ञा भवति । अणिति अकारेकारोकारा उच्यन्ते । एवं एङ् इट् छव् इञ् यञ् जश् बश् अक् इक् उक् मय् जय् खय् अच् इच् एच् ऐच् अम् यम् ञम् ङम् जर् खर् चर् शर् अष् हष् वष् जष् झष् भष् अल् हल् वल् रल् जल् शल् इत्यादयः प्रत्याहारा नेयाः ॥

एको णङटवाद्रा्हो द्वौ अशात्कयतस्त्रयः ॥
चत्वारश्चमरात् षट् स्युः यथायोगं षलाद्बुधैः ॥ २ ॥

णकाराद्यनुबन्धानामणादिप्रत्याहारग्रहणेष्वग्रहणं कार्यार्थमुपदिष्टत्वात् ॥ जात्याश्रयणाद्दीर्घादीनां ग्रहणम् ॥ यथा हि कश्चिदेकं कृष्णकुब्जत्वादिगुणविशिष्टं सर्वस्वव्यक्तिगतमनुष्यत्वजातिनिष्ठं मनुष्यं पुरः प्रदर्श्यायं मनुष्य इति सङ्केते आहिते अन्यत्रान्येषामपि प्रांशुधवलत्वादिगुणविशिष्टानां मनुष्याणां प्रतिपत्तिः । तथाऽत्राप्येकस्मिन् ह्रस्वनिरनुनासिकत्वादिगुणविशिष्टे सर्वस्वव्यक्तिगतावर्णत्वजातिनिष्ठेऽकारे उपदिष्टेऽन्येषां दीर्घानुनासिकत्वादिगुणविशिष्टानामप्यवर्णभेदानां ग्रहणं सिद्धम् । एवमिवर्णादिष्वपि योज्यम् । तत्र ह्रस्वसञ्ज्ञोऽकार उदात्तोऽनुदात्तः स्वरितश्चेति त्रिधा । ते च प्रत्येकमनुनासिको निरनुनासिकश्चेति द्विधा इति षोढा । एवं दीर्घः प्लुतश्चेत्यष्टादशभेदोऽवर्णः ॥ इत्थमिवर्णादयोऽपि । ऌ-

---

१ सात्मा इता आ ( इ् ) इत् इति च्छेदः, " इक्येङर् " इति " एत् " पुनः " ओमाङि परः " इति परोऽजादेशः ' इतेत् ' इति सिद्धम् । आत्मना सह वर्तमानः सात्मा । अथवा सह आत्मा येन सः सात्मा ॥ सात्मेति पदमात्मार्थमुत्तरार्थं च । सञ्ज्ञासञ्ज्ञिसम्प्रत्यायनपरं सञ्ज्ञासूत्रम् । तेनेह इतेति सञ्ज्ञानिर्देशः । इता च शास्त्रे वर्णसमुदायो निर्दिश्यते ॥ सात्मेदिति सञ्ज्ञिनिर्देशः । तत्र सञ्ज्ञिनमनूद्य सञ्ज्ञा विधीयते । यः सात्मेत् स इता सहोपात्तो भवति ॥ सञ्ज्ञा वा अनूद्य सञ्ज्ञी, य इता सहोपात्तः सः ॥ उभयथाऽपि सात्मेदिति सञ्ज्ञि न सञ्ज्ञेतीदं निश्चीयते ॥

वर्णस्यानुकरणादन्यत्र दीर्घो नास्ति । एचां च ह्रस्वाभावाद्द्वादश भेदाः ॥

ह्रस्वदीर्घप्लुतहलो ह्येकद्वित्र्यर्द्धमात्रिकाः ।
नासिकामनुयातश्च वर्णः स्यादनुनासिकः ॥ ३ ॥
उच्चैरुदात्तो नीचैः स्यादनुदात्तः स्वरस्तथा ।
व्यामिश्रः स्वरितो ज्ञेयः प्रत्येकं विबुधैरिह ॥ ४ ॥

ऋवर्णग्रहणे लृवर्णस्यापि ग्रहणं भवति । तयोरेकत्वप्रतिज्ञानात् । हकारस्य द्विर्ग्रहणमषादौ वलादौ च ग्रहणार्थम् । हकारादिष्वकारककशब्दपशब्दा उच्चारणार्थाः ।

३ उता स्वः ।१।१।२। इता उकारेण सहोक्तो वर्णः स्वस्य वर्गस्यात्मनश्च संज्ञा भवति । कु इति कवर्ग उच्यते । एवं चु इत्यादिभिश्चवर्गादयः ।

४ तेयान् ।१।१।३। इता तकारेण सहोक्तो वर्ण इयान् यावन्मात्र उपात्तस्तावन्मात्र एव ग्राह्यः । अत् इत् उत् ।

५ भाव्योऽण् ।१।१।४। अणकारानुबन्धो भाव्यो विधेयः प्रत्ययविकारागमरूपो यावन्मात्र उपात्तस्तावन्मात्र एव ग्राह्यः । नासिका अस्मै लविता इत्यादि ॥ अणिति किम् । अमू ॥ अतो नियमद्वयादन्यत्र जातिरासन्नता वाऽऽश्रीयते ।

६ स्वः स्थानास्यैक्ये ।१।१।६। वर्णोत्पत्तिप्रदेशः स्थानं कण्ठादि ॥ अकुहविसर्जनीयजिह्वामूलीयानां कण्ठः । हविसर्जनीययोरुरः । कोर्जिह्वामूलीयस्य च जिह्वामूलम् । सर्वमुखस्थानमवर्णमित्येके । इएऐचुयशा-

---

१ जानुं प्रदक्षिणीकृत्य न द्रुतं न विलम्बितम् ॥ अंगुलिस्फोटनं कुर्यात्सा मात्रेति प्रकीर्तिता ॥ १ ॥ चटको रौत्येकमात्रं द्विमात्रं रौति वायसः ॥ त्रिमात्रं तु शिखी रौति ह्रस्वदीर्घप्लुतक्रमात् ॥ २ ॥ २ स्वराति कथयति हलः स्वरूपमिति स्वरः ॥

३ ऋलृवर्णयोः । तथाच " दूरादामन्त्र्यस्य गुरुर्वैको ऽनृत् " २।३।२७॥ इत्यत्र अनृदिति ऋकारस्य प्लुते निषिद्धे लृकारस्यापि प्लुतनिषेधः प्राप्नोतीति मत्वा तन्माभूदित्याचार्येण लृग्रहणं कृतम् . तच्च ज्ञापयति ऋवर्णग्रहणे लृवर्णस्यापि ग्रहणमिति ।

४ अषादौ ग्रहणात् " व्योऽव्याघोभोभगोः " १।१।१५३। इति व्यलोपे वृक्ष हसतीत्यादि सिद्धम् ॥ वलादौ ग्रहणात् ' शल्यनुस्वारः ' ।१।१।११०। तूं हन्तीति सिद्धम् ॥

नां तालु । एदैतोः कण्ठताल्वेकेषाम् । उओऔपूपध्मानीयानामोष्ठौ । ओदौतोः कण्ठोष्ठमेकेषाम् । वस्य दन्तोष्ठम् । सृक्[1] वास्थानमेकेषाम् । ऋटुरषाणां मूर्धा । रेफस्य दन्तमूलमेकेषाम् । लृतुलसानां दन्ताः । नासिकाऽनुस्वारस्य । कण्ठनासिकमेकेषाम् ॥ आस्ये भवं आस्यम् । करणं प्रयत्नः । स्पृष्टं करणं स्पर्शानाम्[2] । ईषत्स्पृष्टं यत्राम् । विवृतमचाम् । विवृततरमेदोतोः । एदौतोर्विवृततमम् । अवर्णस्यातिविवृततमम् । संवृतमकारस्य । ईषद्विवृतं शषसहानाम् । तयोः स्थानास्ययोरैक्यमभेदस्तस्मिन् सति वर्णो वर्णस्य स्वसञ्ज्ञो भवति ॥ कस्य पुनः कः स्वः । अवर्णस्य ह्रस्वभेदाः षट् दीर्घप्लुतभेदाश्च द्वादश परस्परं स्वे भवन्ति । इवर्णादीनां त्वष्टादश भेदाः परस्परं स्वे भवन्ति । लृवर्णस्यैचां च द्वादश भेदाः परस्परं स्वे भवन्ति । कादयो मावसानाः पञ्च पञ्च वर्ग्याः परस्परं स्वे भवन्ति । यवलानामनुनासिको निरनुनासिकश्चेति द्वौ भेदौ परस्परं स्वौ भवतः । केवलनिरनुनासिकानां रेफोष्मणां स्वे न सन्ति ॥

**वर्गेष्वाद्या द्वितीयाश्च शषसा अप्यघोषकाः ।**
**द्वितीयतुर्यवर्णाः स्युर्महाप्राणा हसंयुताः ॥ ५ ॥**

वर्ग्याणामन्त्या अनुनासिकाः—

**कण्ठोष्ठमूर्धजिह्वादन्तोरस्तालुनासिका वर्णानाम् ।**
**स्थानान्यास्यं स्पृष्टेषत्स्पृष्टं विवृतसंवृतेषद्विवृतम् ॥ ६ ॥**

इति सञ्ज्ञासंग्रहः ।

## अथ सन्धिसंग्रहोऽभिधीयते[3].

॥ तत्राच्सन्धिप्रकरणम् ॥

पूर्वोत्तरवर्णानामविरामेणोच्चारणं सन्धानं सन्धिः । संहितेति यावत् ॥

---

१ ओष्ठयोरग्रभागः सृक् । २ वर्ग्याः पञ्चविंशतिवर्णाः स्पर्शाः ।

३ सञ्ज्ञास्वरप्रकृतिहल्जविसर्गजन्मा सन्धिस्तु पञ्चकमितीत्थमिहाहुरन्ये ॥
तत्र स्वरप्रकृतिहल्जविकल्पतोऽस्मिन् सन्धिं त्रिधा कथितवान्गुणकीर्तिसूरिः ॥ १ ॥

ने अनं । लो अनं । रै औ । नौ औ । इति स्थिते । " विरामेऽगिदनाङ्चाघण्वाऽनुनासिकः" ।१।१।६८। इत्यधिकृत्य ॥

**७ न** ।१।१।७०। यत्सन्धिकार्यमतो वक्ष्यते तद्विरामे न भवति । इत्यधिकारादविरामे सन्धिर्भवति ॥

**८ एचोऽच्ययवायाव्** ।१।१।६९। एचः स्थाने यथासंख्यं अय् अव् आय् आव् इत्येते आदेशा भवन्ति अचि परे ॥ अनच्कं शब्दरूपं परवर्णमाश्रयेत् इति सन्निकर्षः । नयनं । लवनं । रायौ । नावौ । समवचने याथासंख्यं शैलीयमाचार्यस्य ॥ दधि अत्र । शमी अत्र । मधु अपनय । वधू आननं । पितृ अर्थः । ऌ आकृतिः । इति स्थिते । " यत्रेवोदिकः " ।१।१।७२। इत्यधिकृत्य ॥

**९ अस्वे** ।१।१।७३। इकः स्थाने यञादेशो भवति अस्वेऽचि परे । स च अथवा इकः परो यञ् भवति अस्वेऽचि परे । तिरियङ् । भूवादयः ॥

**१० आसन्नः** ।१।१।७। इहासन्नानासन्नप्रसङ्गे स्थानगुणप्रमाणार्थैरासन्न एव भवति विधिः । अत्र स्थानेनासन्नो भवतीति सन्निकर्षः । दध्यत्र । शम्यत्र । मध्वपनय । वध्वाननं । पित्रर्थः । लाकृतिः ॥ दधि अत्र । नदी एषा । मधु अपनय । इति द्विःस्थिते ॥

**११ ह्रस्वो वाऽपदे** ।१।१।७४। इकः स्थाने तदासन्नो ह्रस्वो वा भवति अस्वेऽचि परे नैकस्मिन् पदे । ह्रस्वविधानात्पुनर्यञादेशो न भवति । पक्षे यञ् । दधि अत्र दध्यत्र । नदि एषा नद्येषा । मधु अपनय

---

१ विरतिर्विरामः। विरामे वर्तमानस्याणोऽगिदनाङ्चादिवर्जितस्य तदासन्नोऽनुनासिकादेशो वा भवति सामँ. साम। २ एचः स्थानेऽवर्णात्परो य इगादिष्टस्तस्य स्थानेऽचि परे यञेवादेशो भवति नान्यः। ३ ऋवर्णग्रहणे ऌवर्णस्यापि ग्रहणं भवतीत्युक्तत्वात् ऌकारो लिङ्गगात्रे च त्रिदिवेशे च नश्वरि ॥ इति कोशः ॥

४ यञोऽपवादः। नन्वनेन सूत्रेण दीर्घस्य ह्रस्वः कर्तव्यः। ह्रस्वस्य पुनर्ह्रस्वः किमर्थमिति न चोदनीयम् । पर्जन्यवल्लक्षणप्रवृत्तिर्जले स्थले च वर्षतीति न्यायात् ॥

५ सकृद्बाधितो विधिर्बाधित एव ।

मध्वपनय ॥ एकपदे यत्रैव । नद्यौ । वध्वौ । पित्रा ॥ महा ऋषिः । मुनि ऋषिः । वधू ऋतं । पितृ ऋषभः । इति द्विः स्थिते ॥

१२ ऋत्यकः ।१।१।७५। अकः स्थाने तदासन्नो ह्रस्वो वा भवति ऋकारे परे । पक्षे अरादि । महऋषिः मुनिऋषिः वधुऋतं पितृऋषभः महर्षिः मुन्यृषिः वध्वृतं पित्रर्षभः ॥ दण्ड अग्रं । सा आगता । मुनि इन्द्रः । नदी इयं । वधू उदरं । मधु उदकं । पितृ ऋषभः । इति स्थिते । "ऋॄश्चोः साचः" ।१।१।७६। इत्यधिकृत्य ॥

१३ दीर्घः ।१।१।७७। अकः स्थाने परेणाचा सहितस्य तदासन्नो दीर्घो नित्यं भवत्यचि परे । दण्डाग्रं । सागता । मुनीन्द्रः । नदीयं । मधूदकं । वधूदरं । पितॄषभः ॥ देव इन्द्रः । आ इहि । गन्ध उदकम् । आ उज्झति । माला ऊढा । अर्ध ऋचः । आ ऋश्यात् । महा ऋषिः । इति स्थिते । "सहिवहोऽस्यौः" ।१।१।८१। इत्यधिकृत्य ॥

१४ इक्येङर् ।१।१।८२। अवर्णस्य स्थाने परेणाचा सहितस्य क्रमेण एङ् अर् इत्यादेशा भवन्ति इकि परे । देवेन्द्रः । एहि । गन्धोदकम् । ओज्झति । मालोढा । अर्धर्चः । अर्श्यात् । महर्षिः ॥ तव एषा । खट्वा ऐन्द्री । तव ओदनम् । सा औपगवी । धा ऊतः इति स्थिते ॥

१५ एजूत्यैच् ।१।१।८३। अवर्णस्य स्थाने साचस्तदासन्न ऐच्

---

१ अत्र दीर्घेति बाध्यते । सावकाशनिरवकाशयोर्निरवकाशो बलीयानिति न्यायात् ॥

२ अत्र । इक्येङर् ।१।१।८२। इति सूत्रे प्राप्ते सति "ऋत्यकः" इत्यनेन बाध्यते. प्राप्तिपूर्वकत्वात्प्रतिषेधकत्वम् । पूर्वापरविधिभ्यः पूर्वविधिर्बलीयानिति न्यायात् ॥

३ उः ऋवर्णस्य लृवर्णस्य चाकस्स्थाने ऋति ऋकारे लृकारे चाचि परे परेणाचा सहितस्य ॠर् इत्यच्समुदायोऽज्व्यञ्जनसमुदायो वर्णान्तरं वा ईषत्स्पृष्टकरणमादेशो वा भवति । ऋति पितॄषभः पितृऋषभः पितृर्षभः लृति पितॄल्कारः पितृलृकारः ।

४ सहिवहोरवर्णस्य ढ्लुच्योकारो भवति । वोढा

५ एओङ् इति द्वौ अर् एवं त्रयोप्यादेशा (इक्) इ उ ण् ऋक् इति परे सति यथासंख्यं भवन्ति .

भवति एचि ऊजादेशे च परे। तवैषा। खट्वैन्द्री। तवौदनं। सौपगवी। धौतः॥ प्र ऊढः। प्र ऊढिः। प्र ऊहः। प्र एषः। प्र एष्यः। इति स्थिते॥

१६ प्रस्योढोढ्यूहैषैष्ये ।१।१।८४। प्रस्यावर्णस्य साच ऐच् भवति ऊढादिषु परतः। प्रौढः। प्रौढिः। प्रौहः। प्रैषः। प्रैष्यः। स्व ईरं। स्व ईरिणी। अक्ष ऊहिनी इति स्थिते।

१७ स्वैरस्वैर्यक्षौहिण्याम् ।१।१।८५। एष्वैच् निपात्यते। स्वैरं। स्वैरिणी। अक्षौहिणी॥ तव ओङ्कारः। उप एहि। प्र ओज्झति। अद्य अश्यात्। इति स्थिते॥

१८ ओमाङि परः ।१।१।८६। अवर्णस्य स्थाने साचः परोऽजादेशो भवति ओंशब्दे आङादेशे च परे। तवोंकारः। उपेहि। प्रोज्झति। अद्यश्यात्॥ बिम्ब ओष्ठी। स्थूल ओतुः। इति द्विः स्थिते॥

१९ वौष्ठौतो समासे ।१।१।८८। अवर्णस्य स्थाने साचः परोऽजादेशो वा भवति ओष्ठशब्दे ओतुशब्दे च परे समासे। बिम्बोष्ठी। बिम्बौष्ठी। स्थूलोतुः। स्थूलौतुः। समास इति किम्। राजपुत्र्योष्ठं पश्य। देवदत्तौतुविजृम्भितं पश्य॥ सुख ऋतः। दुःख ऋतः। इति स्थिते॥

२० आर्तृतीयाया ऋते ।१।१।८९। तृतीयान्तस्यावर्णस्य स्थाने

---

१ ईषतेर्ध्यणि ईष्य इति रूपं तस्याङ्पूर्वस्यापि आ ईष्य एष्यः प्र एष्य प्रैष्यः। इष् इच्छायाम्। ईष् उञ्छे इत्यादिधातुषु प्र एष्य इति स्थिते ' तथाऽनिणेष्येष्वेङ् ।१।१।९३। ' इति सूत्रे प्राप्ते तदपवादार्थं प्रस्येत्यादिसूत्रम्॥

२ अत्र यद्याङिति आङ् स्वयमेव गृह्यते तदा अवर्णस्याङि परे परीभवन्नाकार एव स्यात्। स च "दीर्घः" इत्यनेनैव सिद्ध इत्याङ्ग्रहणमनर्थकं स्यात्। अत उपचारादाङित्यादेशो गृह्यते। दीर्घापवादः॥

३ एवे नियोगे ।१।१।८७ अवर्णस्य स्थाने साचः परोऽजादेशो भवति एवशब्दे परे न तु निश्चयेऽर्थे। अद्येव इहेव। निश्चये तु अद्यैव गच्छ इति।

४ " विशेषणम् ।१।१।५८। " विशेषणं विशेष्यस्य समुदायस्यान्तो भवतीति सूत्रादत्र तृतीयाया इति विशेषणं विशेष्यस्य समुदायस्यान्तो भवति। तथाच तृतीयान्तस्येत्यायातम्॥

साच आरादेशो भवति ऋतशब्दे परे समासे । सुखार्तः । दुःखार्तः । समास इति किम् । सुखेनर्तः ॥ प्र ऋणं । दश ऋणं । ऋण ऋणं । वसन ऋणं । कम्बल ऋणं । वत्सतर ऋणम् । इति स्थिते ॥

२१ **प्रदशार्णवसनकम्बलवत्सतरस्यर्णे** ।१।१९०। प्रादीनामवर्णस्य साच आर् भवति ऋणशब्दे परे समासे । प्रार्णम् । दशार्णम् । ऋणार्णम् । वसनार्णम् । कम्बलार्णम् । वत्सतरार्णम् ॥ प्र ऋध्नोति इति स्थिते ॥

२२ **ऋत्यारुपसर्गस्य** ।१।१९१। उपसर्गस्य वर्णस्य स्थाने साच आर् भवति ऋकारादौ धातौ परे । प्रार्ध्नोति ॥ प्र एषयति । प्र ओखति । उप एलकीयति । इति स्थिते ॥

२३ **तथानिणेध्येङ्ग्येङ्** ।१।१९२। उपसर्गस्यावर्णस्य साच एङ् भवति एङादौ धातौ परे णेणेध्योः । तथा सुब्धातौ एङ् वा भवति । प्रेषयति । प्रोखति । उपेलकीयति उपैलकीयति ॥ अनिणेधीति किम् । उपैति । प्रैधते ॥ ते अत्र । इति स्थिते ॥

२४ **पदान्तेऽस्येङः** ।१।१।२४। पदान्ते एङः साचः एङ् भवति अकारे परे । तेऽत्र । पटोऽत्र । पदान्त इति किम् । नयनम् । लवनम् । गो+अग्रम् इति त्रिः स्थिते ॥

२५ **गोरोद्वा** ।१।१९५। गोशब्दस्य एङः ओकारो वा भवति

---

१ " तस्यादिः ।१।१।५८। " तस्य सप्तम्यर्थस्य विशेषणं तस्यादिरवयवो वेदितव्यः । इति ऋतीत्यस्य ऋकारादौ धातौ परे इत्यर्थो भवति । उपसर्गस्येति वचनाद्धातोरिति ज्ञायते । सर्वापवादोऽयम् । पूर्व आरादेशः ' इक्येङर् ' इत्यस्यैव बाधको न न्हस्वस्य । अयं तु न्हस्वस्यापि प्राप्नुवतो बाधक इत्यर्थः ॥ अ.तृतीयेत्यादि सूत्रात् आर् इत्यस्यानुवर्तनेऽपि पुनर्ग्रहणं परमप्यारं न्हस्वो बाधत इति ज्ञापनार्थम् ॥ प्रपरापसमन्ववनिर्दुरभिव्यधिसूदतिनिप्रतिपर्यपयः ॥ उप आङिति विंशतिरेष सखे उपसर्गगणः कथितः कविना ॥१॥ २ गोरोद्वचनं प्रकृतिभावार्थम् । हे चित्रगो अग्रमित्यत्र गोशब्दस्य लाक्षणिकत्वादोत्वं न भवति । कुतः लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्येति वचनात् प्रतिपदोक्तस्यैव ग्रहणम् । चित्रा गावो यस्य स चित्रगुः तस्य सम्बोधनं हे चित्रगो इति लाक्षणिकोऽत्र गोशब्द इति ओङ्कारो न भवति ॥

अकारे परे ॥ गोअग्रम् । पक्षे अवादि । गवाग्रं । गोऽग्रम् ॥ गो ईश्वरः । गो उत्तमः । इति द्विः स्थिते ॥

२६ अवोऽच्यनक्षे ।१।१।९६। गोशब्दस्य एङः अव इत्यादेशो वा भवति अचि परे नाक्षशब्दे ॥ पुनरिक्येङरित्येङ् । पक्षे अव् ॥ गवेश्वरः । गवीश्वरः ॥ गवोत्तमः । गवुत्तमः ॥ अनक्ष इति किम् । गो अक्षं गोऽक्षं ॥ गो इन्द्रः । इति स्थिते ॥

२७ इन्द्रे ।१।१।९७। गोशब्दस्य एङः अव इत्यादेशो भवति नित्यं इन्द्रशब्दे परे ॥ गवेन्द्रः ॥ गो अक्षम् । इति त्रिः स्थिते ॥

२८ वातायनेऽक्षे ।१।१।९८। गोशब्दस्य एङः अव इत्यादेशो भवति नित्यं अक्षशब्दे परे वातायनेऽर्थे ॥ गवाक्षः । पक्षे गोअक्षं । गोऽक्षम् ॥

इत्यच्सन्धिः ।

## अथ निषेधसन्धिरुच्यते ।

देवदत्ता३ अत्रान्वसि । जिनदत्ता३ इदमानय । इति स्थिते ॥

२९ न प्लुतस्यानितौ ।१।१।९९। प्लुतस्याचि परे यत्सन्धिकार्यं प्राप्तं तन्न भवति नेतिशब्दे ॥ इति दीर्घैङौ न भवतः ॥ अनिताविति किम् । सुश्लोका३ इति वक्ति सुश्लोकेति वक्ति ॥ मुनी इमौ । साधू एतौ । अमी अत्र । अमू आसाते । खट्वे अत्र । कुले इमे । पचेते अत्र । पचेथे अत्र । पचावहे अत्र । इति स्थिते ॥

३० गितः ।१।१।१००। गैकारानुबन्धस्य अचि परे यत्सन्धिकार्यं

---

१ पृथक् सूत्रविधानात् वेति निवृत्तम् ॥ २ पाणिनीये तु सर्वत्रैव 'गवाक्ष' इति सिध्यति तन्न सुवचम् । किंतु वातायनार्थ एव गवाक्षः । अन्यत्र गोअक्षम् ॥

३ "इदुतो गिग्वौतोऽक्षेः" इति औकारस्य सुपः स्थाने गिः गुः इत्यादेशौ भवतः । एवम् अमीप्रभृतिषु सर्वत्र गकारानुबन्धो ज्ञेयः ॥

प्राप्तं तन्न भवति ॥ इति दीर्घादिर्न भवति ॥ अ[1] अपेहि । इ इन्द्रं पश्य । उ उत्तिष्ठ । आ एवं मन्यसे । आ एवं किल तत् । इति स्थिते ॥

३१ चादेरचोऽनाङः ।१।१।१०१। अन्मात्रस्य चादेरचि परे यत्सान्धिकार्यं प्राप्तं तन्न भवति नाङः ॥ इति दीर्घैचौ न भवतः ॥ अनाङ इति किम् । आ उष्णम् ओष्णम् । आ इहि एहि । आ उदकान्तात् ओदकान्तात् । आ आर्येभ्य: आर्येभ्यो यशोगतं सामन्तभद्रीयम् ॥

ईषदर्थे क्रियायोगे मर्यादाभिविधौ[2] च यः ।
एतमातं ङितं विद्यात् वाक्यस्मरणयोरङित् ॥

अथ इति किम् । अथैति[3] ॥ अथो अस्मै । नो इन्द्रियम् । इति स्थिते ॥

३२ ओतः[4] ।१।१।१०२। ओकारान्तस्य चादेरचि परे यत्सन्धिकार्यं प्राप्तं तन्न भवति । इत्येङवौ[5] न भवतः ॥

इति निषिद्धकार्यसन्धिः

## अथ द्वित्वसन्धिरुच्यते ।

तीर् थं । स्वर् धुनी । चिद् नं । इति द्विः स्थिते ॥ ' शरोऽनु द्वे[6] १।१।११५। ' इत्यधिकृत्य

१ अ इ उ भर्त्सने । २ अभिविधिरभिव्याप्तिः साकल्येन सम्बन्धः । अवधिमता सम्बद्धोऽवधिरित्यर्थः । असम्बद्धोऽवधिर्मर्यादा ॥

३ मयोऽचि वोऽसन् ।१।१।१०५। मयः परस्य ङञो वो वा भवति अचि परे स च अविद्यमानवद्भवति । किम्वुक्तम् किमु उक्तम् ॥

४ अहो आहो हो उताहो च नो अंहो अथो इमे ॥ मो प्रयुक्ताश्च ओदन्ता अष्टावित्यागमे स्मृताः ॥ १ ॥

५ सौ वेतौ ।१।१।१०३। सुनिमित्तकस्यौकारस्य सन्धिनिषेधो वा भवति इतिशब्दे परे । साधो इति साध इति साधविति ॥ ऊँ चोञः ।१।१।१०४। उञः स्थाने ऊँ इत्यादेशो भवति सन्धिनिषेधश्च इतौ परे । उ इति, ऊँ इति, विति ॥

६ शरः परस्य खयः स्थाने अनु यदन्यत्प्राप्नोति तस्मिन्कृते पश्चात् द्वे रूपे भवतो वा ॥ कश्छादयति । कः छादयति । स्थाली स्थाली ॥

**३३ अचो ह्रोऽहृचः** ।१।१।११७। अचःपराभ्यां हकाररेफाभ्यां परस्य हकाररेफाज्वर्जितस्य वर्णस्य स्थाने द्वे रूपे भवतो वा ॥

**३४ चर्** ।१।१।१३५। जरः स्थाने चरादेशो भवति जरि परे ॥ आसन्नः । तीर्त्थं । तीर्थम् ॥

**३५ जषि जश्** ।१।१।१३६। जरःस्थाने जशादेशो भवति जषि परे ॥ स्वर्द्धुनी स्वर्धुनी । चिह्न्नं चिह्नम् ॥ अहृच इति किम् । अर्हन् । सुह्रादः । ह्रुरः ॥ मरु त् । नि ध्यातं । प्र च्युतं । देवदत्ता३ध्वस्तः इति द्विःस्थिते ॥

**३६ अदीर्घात्** ।१।१।११८। अदीर्घादचः परस्याहृचो वर्णस्य स्थाने द्वे रूपे भवतो वा विरामे हलि च परे ॥ जश्त्वं । मरुत्त् मरुत् । निद्ध्यातं निध्यातं। प्रच्च्युतं प्रच्युतं । देवदत्ता३द्ध्वस्तः देवदत्ता३ध्वस्तः ॥ अहृच इति किम् । जिह्वा । चर्या । जिनदत्ता३ इदमानय ॥ इन् द्रः इति स्थिते ॥

**३७ न संयोगे** ।१।१।११९। संयोगे परे प्रागुक्तं द्वित्वं न भवति ॥ हलोऽनन्तराः संयोगः । इन्द्रः ॥ दर् शनं । हर् षः । तर् षः । इति स्थिते । ‘ अचि ।१।१।१२१। ’ इत्यधिकृत्य ॥

**३८ शरः** ।१।१।१२२। शरः प्रागुक्तं द्वित्वं न भवति अचि परे ॥ संनिकर्षः ॥ दर्शनं । हर्षः । तर्षः ॥ अचीति किम् । अश्श्यात् ॥ कुङ् आस्ते । सुगण् अत्र । कृषन् इह । इति स्थिते ॥

**३९ ह्रस्वान् ङमः पदान्ते** ।१।१।१२३। ह्रस्वात्परस्य पदान्ते वर्तमानस्य ङमः स्थाने द्वे रूपे नित्यं भवतोऽचि परे ॥ कुङ्ङास्ते । सुगण्णत्र । कृषन्निह ॥ पदान्त इति किम् । प्रङ्क्वते । गणितं । कनकम् ॥ ह्रस्वा-

---

१ व्याकरणान्तरे तु धर्म इत्यादौ रकाराद्द्वित्वनिषेधको न दृश्यते । २ भो देवदत्ता३ द्ध्वस्तः सः इत्यत्र प्लुतात्परो द्वित्वविधिः दीर्घनिषेधात् ह्रस्वप्लुताभ्यां पर इत्यर्थोऽवसीयते ।

३ अदीर्घात्परस्याहचस्स्थानेऽचि परे द्वे रूपे न भवतः ॥ दधि मधुः ॥

४ उणादय इति निर्देशात् लक्षणवाक्येष्वस्यानित्यत्वं ज्ञायते ॥

५ कृषन्निहेत्यादौ णत्वे प्राप्ते सति ‘अन्तरङ्गबहिरङ्गयोरन्तरङ्गो विधिर्बलवानिति’ न्यायादत्र णत्वं न भवति ।

दिति किम् । प्राकास्ते । दाणत्र । भवानास्ते ॥ कन्या छत्रम् । इति द्विः स्थिते ॥

**४० दीर्घाच्छो वा** ।१।१।१२४। पदान्ते वर्तमानाद्दीर्घात्परस्य छकारस्य द्वे रूपे भवतो वा ॥ चर्त्वम् । कन्याच्छत्रं । कन्याछत्रम् ॥ देव-छत्रं । म्ले छति । आ छिनत्ति । मा छिदत् । इति स्थिते ॥

**४१ अजाङ्माङः** ।१।१।१२६। अच आङ्माङ्भ्यां च परस्य छकारस्य द्वे रूपे नित्यं भवतः ॥ चर्त्वम् । देवच्छत्रं । म्लेच्छति । आ-च्छिनत्ति । माच्छिदत् ॥

इति द्वित्वसन्धिः

## अथ हल्सन्धिरुच्यते ।

अच् मात्रं । ककुप् मण्डलं । वाक् मधुरा । षट् नयाः । तत् नय-नम् । इति द्विः स्थिते ॥

**४२ जलो जश्** ।१।२।७५। पदान्ते वर्तमानस्य जलो जश् भवति आसन्नः ॥

**४३ हलोऽनुनासिकेऽनुनासिकः स्वः** ।१।१।१०६। पदान्ते वर्तमानस्य हलः स्थाने स्थानिनः स्वोऽनुनासिक आदेशो भवति वाऽनु नासिके हलि परे ॥ अञ्मात्रं अज्मात्रं । ककुम्मण्डलं ककुब्मण्डलं । वाङ्मधुरा वाग्मधुरा । षण्णयाः षड्नयाः । तन्नयनं तद्नयनम् । पक्षे जश्त्वम् ॥ वाक् मयं । इति स्थिते । जश्त्वम् ॥

**४४ प्रत्यये** ।१।१।१०७। पदान्ते वर्तमानस्य हलः स्थाने स्थानिनः

---

१ अत्र आङ्माङोर्ग्रहणं 'दीर्घाच्छो वा' इति विकल्पबाधनार्थम् ।

२ नासिकामनुयातोऽनुनासिकः । अत्र सूत्रे हल इति किं दधि मधुरम् । अनुनासिके इति किं गुरुवाक् प्रमाणम् । स्व इति किं अन्तर्मधुग्न् । पदान्त इति किं यज्ञः । यत्नः ।

३ यस्य स्थाने आदेशो भवति स स्थानी । यथा अच् मात्रं इत्यत्र चकारस्य स्थाने ञकारादेशो भवति, अतस्तत्र चकारः स्थानीति ज्ञेयम् । अञ्मात्रम् ।

स्वोऽनुनासिक आदेशो नित्यं भवत्यनुनासिकादौ प्रत्यये परे ॥ वाङ्मयम् ॥[1] गम् ता । शम् किता । इति स्थिते ॥

४५ **नश्चापदान्तस्य झलि**[2] ।१।१।१०९। अपदान्ते मकारनकारयोः परस्वोऽनुनासिक आदेशो भवति जयि परे ॥ गन्ता शङ्किता । बहुवचनात् णत्वं बाधित्वाऽनुनासिकः । विस्रम्भः विस्रम्भः ॥ पुम् सि । दन् शः । शिन् षन्ति । शन् सान्ति । तृन् हन्ति । इति स्थिते ॥

४६ **शल्यनुस्वारः** ।१।१।११०। अपदान्ते मकारनकारयोरनुस्वारो भवति शलि परे ॥ पुंसि । दंशः । शिंषन्ति । शंसन्ति । तृंहन्ति ॥ चम् क-म्यते । अभ्रम् लिहः । त्वम् करोषि । त्वम् चरसि । त्वम् टीकसे । त्वम् तरसि । त्वम् पठसि । त्वम् पासि । त्वम् वहसि । त्वम् लुनासि । त्वम् शेषे । त्वम् षण्डे । त्वम् साधुः । त्वम् हससे । त्वम् रमसे । इति द्विः स्थिते ।

४७ **मम्मो हलि तौ**[3] ।१।१।१११। ममागमस्य पदान्तस्य च मकारस्य परस्वोऽनुनासिकोऽनुस्वारश्च पर्यायेण भवति हलि परे ॥ चङ्क्रम्यते चंक्रम्यते । अभ्रँलिँहः अभ्रंलिहः । त्वङ्करोषि त्वं करोषि । त्वञ्चरसि त्वं चरसि । त्वण्टीकसे त्वं टीकसे । त्वन्तरसि त्वं तरसि । त्वम्पठसि त्वं पठसि । त्वय्ँयासि त्वं यासि । त्वव्ँवहासि त्वं वहासि । त्वल्ँलुनासि त्वं-लुनासि । अस्वरसंज्ञकेष्वनुस्वार एव । त्वंशेषे । त्वंषण्डे । त्वंसाधुः । त्वंहससि । त्वंरमसे ॥ सम् राट् । इति स्थिते ॥

---

१ पदविद्यामथ छन्दोविचितिं वागलङ्कृतिम् ॥ त्रयीं समुदितामेनां वाङ्मयं वाग्विदो विदुः ॥१॥

२ अपदान्त इत्यनेनैव सिध्दे मम्ग्रहणमस्य विधेः पदान्तेऽपि सत्त्वद्योतनार्थम् ॥

३ हि ल्व्यम्नि । १।१।११२। लकारे वकारे यकारे मकारे नकारे च परे हकारे मस्य क्रमेण परस्वोऽनुनासिकोऽनुस्वारश्च पर्यायेण भवति । किल्ँह्लादयति किंह्लादयति । किव्ँह्वलयति किंह्वलयति । किय्ँह्यः किंह्यः । किम्ह्मलयति किंह्मलयति । किन्ह्नुते किंह्नुते ।

**४८ सम्राट्** ।१।१।११३। समो मकारो निपात्यते क्विबन्ते राजि परे । सम्राट् ॥ लिद् ढं । गुद् ढं । स्वर् राट् । इति स्थिते ॥ " डाज्भाजोऽतो लुगितौ ।१।१।१२७। " इत्यधिकृत्य ॥

**४९ ढ्रो ढ्रि** ।१।१।१३१। ढकाररेफयोर्लुग् भवति यथासंख्यं ढकारे रेफे च परे ॥ " १३ दीर्घः ।१।१।७७। " इत्यधिकृत्य ।

**५० ढ्रूलुच्यणः** ।१।१।१८०। ढकाररेफयोर्लुचि सत्यां पूर्वस्याणो दीर्घो भवति ॥ लीढं । गूढं । स्वाराट् ॥ उद् स्थितः । उद् स्ताम्भितम् । इति स्थिते ॥

**५१ उदः स्थास्तम्भः** ।१।१।१३४। उदः परस्य स्थास्तम्भोर्धात्वोः सकारस्य लुग्भवति जरि परे ॥ उदो दकारस्य चर्त्वम् । उत्थितः । उत्त-म्भितम् ॥ कस् शुभः । मस् जाति । तत् शेते । तद् चरति । तद् छादयति । तद् जयति । यज् नः । तद् ञापयति । तद् ञकारेण । इति स्थिते ॥

**५२ श्चो ईचू स्त्वोः** ।१।१।१३७। शकारे चवर्गे चोपश्लिष्टयोः सकारतवर्गयोः शकारचवर्गौ क्रमेणादेशौ भवतः ॥ जश्त्वचर्त्वे । कश्शुभः ।

---

१ सम्यक् राजते शोभते इति सम्राट् । 'अव्ययस्य' इत्यनेनाव्ययात्परेषां स्वादिप्रत्ययानां लुकि सामिति मकारस्यानुस्वारप्राप्तिः सम्राडिति सामर्थ्यान्न भवति । सम्राट्सु पञ्चमः शान्तिः ॥

२ डाज्भाजोऽनेकाचोऽव्यक्तानुकरणस्य यः अत् शब्दस्तस्येतिशब्दे लुग्लोपो भवति ॥ छमत् इति छमिति । पटत् इति पटिति । अत् इति वचनात्सर्वलुक् ॥ असिद्धं बहिरङ्गमन्तरङ्गे' इति लुचि जश्त्वं न भवति ॥ चकादिति तडिताऽपि कृतमित्यत्र दकारान्तं द्रष्टव्यम् ॥ डाज्भाज इति किं । छत् इति छादिति । जगत् इति जगदिति ॥

३ ढ्रयोर्लुगस्मिन्निति ढ्रूलुक् तस्मिन्निति बहुव्रीहिः ॥

४ शश्च चुश्च श्चुस्तस्मिन् श्चौ इत्येकत्वेन समुदायनिर्देशः । समुदायवाचकशब्देनैकदेशग्रहणं, एकदेशस्यापि समुदायात्मकत्वात् ॥

५ पृथक् सिद्धयोरेकदेशतः संयोग उपश्लेषः । तथाच सकारस्य शकारचवर्गाभ्यामुपश्लेषः ।

मज्जति । तच्छेते । तच्चरति । तच्छादयति । तज्जयति । यज्ञः । तज्झाषयति । "हलः" इत्यादिना वाऽनुनासिकः । तञ्ञकारेण । तञ्ञकारेण ॥

**५३ न शात्** ।१।१।१३९। शकारात्परयोः स्त्वोः श्चुत्वं न भवति ॥ अश्नाति ॥ कस् षण्डे । कस् टीकते । पेष् ता । तत् टीकते । तत् ठकारेण । तद् डीनम् । तद् ढौकते । तद् णकारेण । इति स्थिते ॥

**५४ ष्टौ ष्टुः** ।१।१।१३८। षकारे टवर्गे चोपश्लिष्टयोः सकारतवर्गयोः षकारटवर्गौ क्रमेणादेशौ भवतः ॥ चर्त्वम् । कष्षण्डे । कष्टीकते । पेष्टा । तट्टीकते । तट्ठकारेण । तड्डीनम् । तड्ढौकते । तण्णकारेण । तड्ङकारेण मधुलिट् सीदति । षट् तयम् । इति स्थिते ॥

**५५ टोः पदान्तेऽनाम्नगरीनवतेः** ।१।१।१४०। पदान्ते टवर्गात् परयोः स्त्वोः ष्टुत्वं न भवति न नामादेः ॥ अनाम्नगरीनवतेरिति किम् । षण्णाम् । अत्र जश्त्वानुनासिकौ ॥ षण्णगरी षड्ङगरी । षण्णवतिः षड्ङवतिः । अत्र वाऽनुनासिकः ॥

**५६ तोः षि** ।१।१।१४१। पदान्तस्य तवर्गस्य ष्टुत्वं न भवति षकारे परे ॥ अग्निचित् षडिकः[1] । महान् षण्डः ॥ तत् लुनाति । भवान् लिखति । इति स्थिते ॥

**५७ लि लः** ।१।१।१४२। पदान्ते तवर्गस्य लकारो भवति लकारे परे ॥ तल्लुनाति । भवाँल्लिखति । "आसन्नः" इत्यनुनासिकस्यानुनासिकः ॥ अच् हलौ । त्रिष्टुप् हुतम् । वाक् हसति । षट् हलानि । तत् हितम् । इति द्विः स्थिते । जश्त्वम् ॥

**५८ जशो हो झष् वा** ।१।१।१४३। पदान्ते जशः परस्य हकारस्य यथासंख्यं झषादेशो वा भवति ॥ अज्झलौ अज्हलौ । त्रिष्टुब्भुतं त्रिष्टुब्हुतम् । वाग्घसति वाग्हसति । षड्ढलानि षड्हलानि । तद्धितम् तद्हितम् ॥ अच्

---

१ षट् अङ्गुलयो यस्य स षडङ्गुलिः । अनुकम्पितः षडङ्गुलिः षडिकः ॥

शेषम् । त्रिष्टुप् श्रूयते । वाक् शूरः । षट् श्यामाः । तत् श्वेतम् । इति द्विः स्थिते । जश्त्वम् ॥

**५९ शश्छोऽमि** ।१।१।१४४। पदान्ते जशः परस्य शकारस्य छकारो वा भवत्यमि परे ॥ चर्त्वश्चुत्वे । अच्छेषम् अच्शेषम् । त्रिष्टुप्छ्रूयते त्रिष्टुप् श्रूयते । वाक्छूरः वाक् शूरः । षट्छ्यामाः षट् श्यामाः । तच्छ्वेतम् तत् श्वेतम् ॥ भवान् शूरः । इति त्रिः स्थिते ॥

**६० नः शि जक्** ।१।१।१४७। पदान्ते नकारस्य जगागमो वा भवति शकारे परे ॥ अकावितौ । अकार उच्चारणार्थः । ककारो देशविध्यर्थः ।

**६१ किदन्तः** ।१।१।५४। किद्यस्य विधीयते तस्यान्तोऽवसानावयवो भवति ॥ शस्य शश्छोऽमीति वा छत्वं । नस्य जयि परस्वोऽनुनासिकः । पक्षे श्चुत्वेन ञकारश्चर्त्वं च । भवाञ्छूरः भवाञ्च्छूरः भवाञ्ञ्शूरः भवाञ्च्शूरः ॥ नॄन् पाति इति त्रिः स्थिते ॥

**६२ नॄनः पि री रक्** ।१।१।१४८। नॄन्शब्दस्य नकारस्य रीस्यादेशः रकागमः पर्यायेण वा भवतः पकारे परे ॥ ईदित् । रीस्योरिति विशेषणार्थः । अकौ पूर्ववत् ।

**६३ रीस्योः** ।१।१।१०८। पदान्त री सी इत्येतयोः परतः पूर्वस्य वर्णस्यानुनासिको भवति ॥ आसन्न इति स्थानप्रमाणाभ्यामासन्न ॠकारानुनासिको भवति ॥

**६४ रः पदान्ते विसर्जनीयः** ।१।१।६७। पदान्ते रेफस्य स्थाने विसर्जनीयादेशो भवति ॥ नॄँःपाति । पक्षे किदन्तः । रस्य विसर्जनीयः । नस्य शल्यनुस्वारः । नॄंःपाति । उभयाभावे । नॄन् पाति ॥ कान् कान् । इति द्विः स्थिते ॥

**६५ कांस्कान् सीसक्** ।१।१।१४९। कान्कानित्यत्र द्विर्वचने

१ अत्र सीसकोर्विधानात्त रिर्न स्यात् । यद्यत्र पदान्तवर्तिनोः सीसकोः वज्रहस्त इत्यादिना रिः स्यात् तर्हि रिरकारेण विसर्जनीयाताम् ॥

पूर्वस्य पदान्ते नकारस्य सीरादेशः सकागमः पर्यायेण निपात्यते ॥ ईदित् रीस्योरिति विशेषणार्थः । अकौ पूर्ववत् । रीस्योरित्यनुनासिकः । सकि नस्यानुस्वारः । निपातनाञ्च रीत्यादि । काँस्कान् कांस्कान् ॥ भवान् छादयति । भवान् ठकारीयति । भवान् थुडति । भवान् चरति । भवान् टीकते । भवान् तरति । इति द्विः स्थिते ॥

**६६ छव्यम्यप्रशानः** । १।१।१५०। पदान्ते नकारस्य सीरादेशः सकागमः पर्यायेण भवतोऽम्परे छवि परतः न प्रशानः ॥ पूर्ववदनुनासिकादिकार्यं श्चुत्वष्टुत्वे च । भवाँश्छादयति भवांश्छादयति । भवाँष्टीकते भवांष्टीकते । भवाँष्ठकारीयति भवांष्ठकारीयति । भवाँस्थुडति भवांस्थुडति । भवाँश्चरति भवांश्चरति । भवाँस्तरति भवांस्तरति । अमीति किं भवान्त्सरति । अप्रशान इति किं प्रशाञ्चिनोति ॥ पुम् चली । पुम् कोकिलः । इति द्विः स्थिते ॥

**६७ पुमः खयि** । १।१।१५१। पुमो मकारस्य सीसकौ भवतोऽम्परे खयि परे ॥ शेषं पूर्ववत् । पुँश्चली पुंश्चली । पुँस्कोकिलः पुंस्कोकिलः ॥ वृक्षव् हसति । देवास् यान्ति । धार्मिकास् दयन्ते । अघोर् देहि । भोर् देहि । भगोर् देहि । इति स्थिते ॥

**६८ सजूरहस्सोऽतिप्यक्रःस्रन्सुध्वन्सो रिः** । १।१।७२। सजूष् अहन्नित्येतयोरन्त्यस्य पदान्ते तकारस्य च रिरादेशो भवति क्रस् स्रन्सु ध्वन्सु इत्येतान् वर्जयित्वा न तिपि ॥ इति सस्य रिः इदित् रेर्यं इति विशेषणार्थः ॥

**६९ रेर्यः** ।१।१।१५६। अवर्णादघो भो भगो इत्येतेभ्यश्च परस्य रेर्यकारादेशो भवत्यषि परे ॥ "संमस्कासि ग्लुक ।१।१।१५२।" इत्यधिकृत्य ॥

**७० व्योऽव्याघोभोभगोः** ।१।१।१५३। अवर्णादघो भो भगो इत्येतेभ्यश्च परस्य पदान्ते वर्तमानस्य वकारस्य यकारस्य च ग्लुग्भवत्यषि परे ॥

---

१ स्कासि समङ्कस्य कृञोऽवयवे सकारे परे समित्यस्य सिरादेशः सगागमो ग्लुक् च पर्यायेण भवन्ति ॥ सँस्स्कर्ता । सँस्कर्ता । संस्कर्ता ॥

गइत् । गित इति सन्धिप्रतिषेधार्थः । वृक्षंहसति । देवायान्ति । धार्मिकादयन्ते । अघोदेहि । भगोदेहि ॥ असौ इन्दुः । तस्मै आसनं । देवास् आसते । इति त्रिः स्थिते । औदैतोरावायौ । सस्य रीर्यश्च । "अच्यस्पष्टश्च ।१।१।१५४।" इत्यधिकृत्य ॥

**७१ वाऽनुञ्यात्** ।१।१।१५५। अवर्णात्परयोः पदान्ते वकारयकारयोः ग्लुगस्पष्टश्रुतिश्च तदासन्नो वा भवत्यचि परे नोञि ॥ पक्षे तादवस्थ्यं । ग्लुचि गित इति सन्धिप्रतिषेधात् पुनस्सान्धिकार्यं न भवति । असाइन्दुः । असाविँन्दुः । असाविन्दुः ॥ तस्माआसनं । तस्मायाँसनं । तस्मायासनं ॥ देवाआसते । देवायाँसते । देवायासते ॥ अवणस् अस्मि । धर्मस् जयति । इति स्थिते ॥

**७२ अतोऽह्रुष्युः** ।१।१।१५७। अतः परस्य रेरुकारो भवत्यकारे हषि च परे ॥ इक्येङरित्येङ् । अवणोऽस्मि । धर्मो जयति ॥ एषस् करोति । सस् याति । इति स्थिते । सस्य रिः ॥

**७३ हल्यनञ्समासे लुक्तः सात्** ।१।१।१५८। तकारादेशात् सकारात्परस्य रेर्लुग्भवति हलि परे न नञ्समासे ॥ एषकरोति । सैयाति ॥

---

१ वृक्ष हसतीत्यत्र सोः 'झलो जश्' इति दकारे प्राप्ते रिः ॥ एवं पयस् इत्यादौ ॥

२ अवर्णादघोभोभगोभ्यश्च परयोः पदान्तयोर्व्योरचि परे ग्लुगस्पष्टोऽव्यक्तश्रुतिश्चासन्नो भवति ॥ पट उ पटवुँ । त उ तवुँ । तस्मा उ तस्मायुँ । अघो उ अघोयुँ । अघो अत्र अघोयँत्र । भो अत्र भोयँत्र । भगो अत्र भगोयँत्र ॥ ग्लुचि 'गितः' इति सन्धिप्रतिषेधः ॥

३ "व्योर्लघुप्रयत्नतरः शाकटायनस्य" इति पाणिनीयं सूत्रम् । तथाच यवयोरनुनासिको निरनुनासिकश्चेति प्रत्येकं द्वौ भेदौ परस्परं स्वौ भवत इत्युक्तत्वादत्रास्पष्टश्रुतिशब्देनानुनासिको भण्यते ॥

४ उञीति ञकारानुबन्ध उकार एव । न उञिति प्रत्याहारः॥

५ अत्र "स्पर्धे १।१।४६।" द्वयोर्विध्योरन्यत्र सावकाशयोस्तुल्यबलयोरेकत्र विनिपातः स्पर्धः तत्र यः सूत्रपाठे परः स विधिर्भवति ॥ स याति स ददाति इत्यादौ उत्वलुगुभयप्राप्तौ परत्वाल्लुक् ॥ अत्र श्लोकः । परं स्यात्पूर्वपरयोर्नित्यं स्यात्परनित्ययोः ॥ निन्यात्तथान्तरङ्गं च स्यात्ततोऽनवकाशकम् ॥ १ ॥

अनव्समास इति किम् । अनेषो गच्छति । असो याति ॥ अहन् अत्र । अहन् ददाति । इति स्थिते । सजूरित्यादिना नस्य रिः ॥

**७४ रोऽह्नोऽव्ययसुब्रूपरात्रिरथन्तरे** ।१।१।१६०। अहन्शब्दस्य रेः रेफो भवत्यषि परे न सुबादौ ॥ उत्वाद्यपवादः । अहरत्र । अहर्ददाति ॥ असुब्रूपरात्रिरथन्तर इति किम् । अहोभ्याम् । अहोरूपम् । अहोरात्रिः । अहोरथन्तरम् ॥

इति हल्सन्धिः

## ॥ अथ विसर्जनीयसन्धिरुच्यते ॥

मुनिस् अस्मि । साधुस् दयते । इति स्थिते । सस्य रिः विसर्जनीयश्च ॥

**७५ विसर्जनीयस्य** ।१।१।१६१। विसर्जनीयस्य रेफादेशो भवत्यषि परे ॥ मुनिरस्मि । साधुर्दयते ॥ कः छादयति । कः टीकते इति स्थिते ॥

**७६ सश्छव्यशरि** ।१।१।१६३। विसर्जनीयस्य सकारो भवत्यशर्[1]परे छवि परे ॥ श्चुत्वष्टुत्वे कश्छादयति । कष्टीकते ॥ अशरीति किं कः त्सरुः ॥ कः शुभः । कः षण्डे । कः साधुः । इति द्विः स्थिते ॥

**७७ शरि वा** ।१।१।१६४। विसर्जनीयस्य सो वा भवति शरि परे ॥ श्चुत्वष्टुत्वे । कश्शुभः कः शुभः । कष्षण्डे कःषण्डे । कस्साधुः कः साधुः ॥ कः स्खलति इति त्रिः स्थिते ॥

**७८ लुक् खयि परे** ।१।१।१६५। विसर्जनीयस्य लुग्वा भवति खयि परे शरि परतः ॥ कस्खलति । कस्स्खलति । कः स्खलति ॥ कः करोति । कः खनति । कः पचति । कः फलति । इति द्विः स्थिते ॥

**७९ कुपौ कपम्** ।१।१।१६६। विसर्जनीयस्य+ क ़ प इत्यादेशौ

---

१ परग्रहणं शरीत्यस्यानुवृत्त्यर्थम् । अन्यथा षष्ठ्येव स्यात् । असमास उत्तरत्र पर इत्यस्यानुवृत्त्यर्थः ॥

क्रमेण वा भवतः कवर्गीये पवर्गीये चाशर्परे खयि परे ॥ कपावुच्चारणार्थौ । कः+ करोति । कः करोति । कः+ खनति कः खनति । कः⌓ पचति कः पचति । कः⌓ फलति कः फलति ॥ तिरः कृत्य इति त्रिः स्थिते । "डाच्व्यूर्याद्यनुकारणश्च ति ।१।१।२६।" "तिरोऽन्तर्धौ ।१।१।३१।" इत्यधिकृत्य ॥

**८० कृञो वा** ।१।१।३२। कृञो धातोः सम्बन्धि तिरः शब्दः तिसंज्ञो वा भवति ॥

**८१ तिरसस्तेस्सिः** ।१।१।१६७। तिसंज्ञस्य तिरस्शब्दस्य विसर्जनीयस्य सिर्वा भवति कवर्गीये पवर्गीये चाशर्प्परे खयि परे ॥ इदित् शास्त्वासिघस्सीति विशेषणार्थः । तिरस्कृत्य तिरःकृत्य तिरः+कृत्य ॥ तेरिति किं तिरः कृत्वा तिरः+ कृत्वा ॥ नमः कृत्य । पुरः कृत्य । इति स्थिते ॥

**८२ साक्षाद्राद्यच्वि** ।१।१।२५। साक्षादित्यादि शब्दरूपमच्व्यन्तरूपं च्व्यर्थे कृञ्सम्बन्धि तिसंज्ञं वा भवति ॥ नमः शब्दस्य तिसंज्ञायाम् ॥

**८३ अस्तं पुरोऽव्ययम्** ।१।१।२९। अस्तं पुरस् इत्येते अव्यये धातोस्सम्बन्धिनी तिसंज्ञे भवतः ॥ इति पुरःशब्दस्य तिसंज्ञायाम् ॥

---

१ ककारावयवको वर्गः कवर्गः । अथवा कादयः काः । यथा त्यदादयस्त्यद इति । कानां वर्गस्तत्र भवः कवर्गीयस्तस्मिन् । कखगघङानामन्यतमे खयीत्यर्थः ॥ अशर्पर इति किं? वासः क्षौमम् ॥

२ डाजन्तं च्व्यन्तमूरित्येवमाद्यनुकरणमुपसर्गसञ्ज्ञं च धातोःसम्बन्धि तिसञ्ज्ञं भवति ॥ डाच् पटपटाकृत्य । च्वि शुक्लीकृत्य ॥

३ तिरस्इत्येतदन्तर्धौ व्यवधाने वर्तमानं धातोः सम्बन्धि तिसञ्ज्ञं भवति ॥ तिरोभूय तिरोधाय ॥ अन्यत्र तिरो भूत्वा स्थितः ॥ उत्तरसूत्रे तस्यैव ग्रहणं कर्तव्यं अन्यथा तिरः कृत्वा काष्ठं गतः इत्यत्रापि तिर्यगर्थकस्य तिरश्शब्दस्य तिसञ्ज्ञापत्तेः ॥

४ च्विरन्ते यस्य तत् च्व्यन्तं । न च्व्यन्तमच्व्यन्तं । अच्व्यन्तं च तद्रूपं च अच्व्यन्तरूपम् ॥ च्व्यन्तस्यार्थ इवार्थो यस्य तत् च्व्यर्थम् अभूततद्भावविषयमित्यर्थः ॥ अच्व्यन्तमिति किं लवणीकृत्य । अत्र च्व्यन्तत्वात्तिसञ्ज्ञा नास्ति । अच्वीति पर्युदासादच्व्यन्तस्य च्व्यर्थस्यैव ग्रहणम् ॥ नमस् लवणं उष्णमित्यादयः शब्दाः साक्षादादौ वर्तन्ते ॥

५ अस्तं पुरः इत्येतौ अव्ययानव्ययरूपौ वर्तेते तयोरव्ययरूपयोरत्र ग्रहणम् ॥

**८४ नमस्पुरसः** ।१।१।१६८। तिसंज्ञयोः नमस् पुरस् इत्येतयोर्विसर्जनीयस्य सिर्भवति कुपावशर्प्परे त्वयि परे ॥ नमस्कृत्य पुरस्कृत्य ॥ तेरिति किं । नमः+कृत्वा नमःकृत्वा । नमः परमपुरुषाय । पुरः॒पशु ॥ चतुः कण्टकं । निः पद्यते । दुः कृतं । बहिः पचसि । आविः करोति । प्रादुः पश्यति । इति स्थिते ॥

**८५ चतुर्निर्दुर्बहिराविःप्रादुसाम्** ।१।१।१६९। चतुर् निर् दुर् बहिस् आविस् प्रादुस् इत्येतेषां विसर्जनीयस्य सिर्भवति कुपावशर्प्परे त्वयि परे ॥ "किलेः सः षिः ।१।२।६०। " "शर्नमः ।१।२।६१। " इत्यधिकृत्य परिभाषासूत्रे ॥

**८६ शास्वसिघस्सिकृतस्यासकसातोऽबहुपदात्**। १।२।६५। कवर्गादिञः किन्परात्र्च शर्नमः परस्य शासिवसिघसीनां सेः कृतस्य च सगागमसस्थानिकसात्प्रत्ययवर्जितस्य सकारस्य षिरादेशो भवति न चेत्स बहुप्रत्ययात्पदाच्च परो भवति ॥ इदित् । चतुष्कण्टकं । निष्पद्यते । दुष्कृतं बहिष्पचति । आविष्करोति । प्रादुष्पश्यति ॥ द्वीः करोति । चतुः पठति । इति त्रिः स्थिते ॥

**८७ सुचो वा** ।१।१।१७०। सुजन्तस्य विसर्जनीयस्य सिर्वा भवति कुपावशर्प्परे त्वयि परे ॥ सोः शास्वसीत्यादिना षिः पक्षे वा कपौ । द्विष्करोति । द्विः+करोति । द्विः करोति । चतुष्पठति । चतुः+पठति । चतुः पठति ॥ सर्पिः पिबति । धनुः खण्डयति इति त्रिः स्थिते ॥

**८८ इसुसोऽपेक्षायाम्** ।१।१।१७१। इसुसन्तस्य विसर्जनीयस्य सिर्वा भवति कुपावशर्प्परे त्वयि परे पूर्वोत्तरपदयोरन्योन्यापेक्षायां सत्याम् ॥

---

१ स्थानिनिमित्तनियमार्थो यः कश्चिदिह शास्त्रे षिर्नाम विधीयते स सर्वः कवर्गात् इनश्च परस्य सकारस्य स्थाने भवति । स च परस्मिन् कार्ये प्रवर्तमाने असन् भवतीति वेदितव्यः ॥ वायु सर्पिषा ॥

२ किनः परो यः शर् नम् च तस्मात्परस्य सकारस्य षिर्भवति ॥ अत्र योगविभागः किन इति शर्नमोर्विशेषणार्थः ।

सार्पिष्पिबति । सर्पिःᳲ पिबति । सर्पिः पिबति ॥ धनुष्खण्डयति । धनुःᳵ खण्डयति । धनुः खण्डयति ॥ अपेक्षायामिति किं । तिष्ठतु सर्पिः पिब त्वमुदकं । तिष्ठतु धनुः खण्डय काष्ठम् ॥ अयः कारः । यशः कामः । अयः कंसः । अयः कुशा । अयः कर्णी । पयः कुम्भः । पयः पात्रम् । इति स्थिते । " समासेऽसमस्तस्य ।१।१।१७३। " इत्याधिकृत्य ॥

**८९ कृकमिकंसकुशाकर्णीकुम्भपात्रेऽतोऽनव्ययस्य ।** १।१।१७५। पुर्वेणासमस्तस्यानव्ययस्याकारात्परस्य विसर्जनीयस्य सिर्भवति करोत्यादौ परे समासे ॥ अयस्कारः । यशस्कामः । अयस्कंसः । अयस्कुशा । अयस्कर्णी । पयस्कुम्भः । पयस्पात्रम् ॥ अनव्ययस्येति किं स्वःᳵ कामः । स्वःᳲ पात्रम् ॥ असमस्तस्येति किं परमयशःकामः ॥ यशः काम्यति । गीः पाशा इति स्थिते ॥

**९० प्रत्यये** ।१।१।१७६। अनव्ययस्य विसर्जनीयस्य सिर्भवति कुपौ प्रत्यये परे ॥ यशस्काम्यति । गीष्पाशा ॥ गीः काम्यति । अहः काम्यति इति स्थिते ॥

**९१ न रहः काम्ये** ।१।१।१७७। रेफान्तस्याहन्शब्दस्य च विसर्जनीयस्य सिर्न भवति काम्यप्रत्यये परे ॥ गीःᳵ काम्यति । अहःᳵ काम्यति ॥ चतुः तयम् इति स्थिते ॥

**९२ ह्रस्वात्सुपास्ति** ।१।१।१७८। ह्रस्वात् परस्य विसर्जनीयस्य सिर्भवति सुबन्ताद्विहिते तकारादौ प्रत्यये परे ॥ शास्वसिघस्सीत्यादिना षिः । ष्टुत्वं च । चतुष्टयम् ॥ निः तपति इति स्थिते ॥

---

१ पूर्वेणासमस्तस्य इसुस् प्रत्ययान्तस्य सम्बन्धिनो विसर्जनीयस्य स्थाने कुपावशर्परे सति परे सिर्भवति ते चेत्स्थानिनिमित्तपदे एकत्र समासे भवतः ॥ सर्पिष्कुण्डं सर्पिष्पानं । धनुष्खण्डं धनुष्फलं । समास इति किं? तिष्ठतु सर्पिः पिब त्वमुदकम्। असमस्तस्येति किं? परमसर्पिः×कुण्डं । इन्द्रधनुः+खण्डम् ॥

२ तर । तम । तस् । तय । त्व । तल् । त्य प्रत्ययास्तकारादिप्रत्ययाः । तान् कवयः प्रयोजयन्तीति चिन्तामणौ ॥

**९३ निसोऽनासेवायां तपे** ।१।१।१७९। निसो विसर्जनीयस्य सिर्भवति तकारादौ तपि धातौ परे । अनासेवायां कोऽर्थः अवसान-क्रियायाम् ॥ षत्वष्टुत्वे । निष्टपति ॥ अनासेवायामिति किं निस्तपति स्वर्णं स्वर्णकारः पुनः पुनस्तपतीत्यर्थः ॥ कः कः इति स्थिते ॥

**९४ कस्कादिषु** ।१।१।१८०॥ कास्कादिषु सिर्निपात्यते कुपौ परे कस्कः । कौतस्कुतः । सर्पिष्कुण्डिका । भ्रातुष्पुत्रः । इत्यादयो नेयाः ॥

॥ इति विसर्जनीयसन्धिः ॥

## ॥ अथ सुबन्तसंग्रहोऽभिधीयते ॥

तत्सुबन्तं पुँल्लिङ्गं स्त्रीलिङ्गं नपुंसकलिङ्गं अलिङ्गं चेति चतुर्विधम् । तत्पुनः प्रत्येकमजन्तं हलन्तं चेति द्विधा । तत्राजन्तेषु तावदकारान्तः पुँल्लिङ्गो धर्मशब्दः सप्तसु विभक्तिषु नीयते । धर्म इति त्रिः स्थिते । " अव्य-यात्स्वौजस् ।२९७। " इत्यधिकृत्य ॥

**९५ एकद्विबहौ** ।१।३।९८। एकत्वद्वित्वबहुत्वेषु विवक्षितेषु तत्स-ङ्ख्यावत्यर्थे वर्तमानाच्छब्दस्वरूपाद्यथासङ्ख्यं सु औ जस् इत्येते प्रत्यया भवन्ति ॥ उजावितौ । उकारः " सूक्तं पुर्वम् ।४०८। " इति विशेषणार्थः ॥ जकारो "जस्येङ् ।१४९।" इति विशेषणार्थः ॥ ते च ॥

---

१ पुनः पुनः करणमासेवा ॥ तकारादाविति किं? निरतपत् ॥ तपे इति शप्निर्देशादिह न भवति । निस्तातप्ति ॥

२ अप्राप्तस्य प्रापणार्थं प्राप्तस्य च निषेधार्थं निपातनम् ॥ सर्पिष्कुण्डिकादीनामिह गणे पाठः समासार्थः तेन परमसर्पिष्कुण्डिकेत्यादि सिद्धम् ॥ कस्कादिष्विति बहुवचनादा-कृतिगणोऽयम् । तेन भास्कर इत्यादि सिद्धम् ॥

३ इयमयमिदमिति शब्दव्यवस्थाहेतुरुपदेशगम्यः प्रातिपदिकधर्मो लिङ्गम् ॥ तच्च शब्दधर्म इति चेत् गुणवचनानामाश्रयतो लिङ्गोपादानं न घटते । नहि शुक्लादिशब्दानां पटादिशब्दरूपमाश्रयस्तदनभिधानात् अर्थो ह्यभिधीयते तत्रैषां ( शब्दानां ) तल्लिङ्गनि-यमानुपपत्तेः ॥ अर्थधर्मत्वे तु यत्पटादिशब्दैरभिधीयते तदेव शुक्लादिशब्दैरभिधीयते इति तल्लिङ्गव्यवस्थोपपद्यत इति अर्थधर्मत्वमस्याश्रीयते ॥ धातुविभक्तिवर्जमर्थवल्लिङ्ग-मिति कौमारे ॥

**९६ प्रत्ययः कृत्तोऽषष्ठयाः** ।१।१।४१। अषष्ठयन्ताद्विहितः प्रत्ययसञ्ज्ञो भवति ॥ इति प्रत्ययसंज्ञायाम् ॥

**९७ परः** ।१।१।१४४। प्रत्ययः प्रकृतेः पर एव भवति ॥ ततः परे भवन्ति । धर्मस् धर्मऔ धर्मअम् इति स्थिते ॥

**९८ सुब् पदम्** ।१।१।६२। सुब्प्रत्याहारगृहीतप्रत्ययान्तं शब्दरूपं पदसंज्ञं भवति ॥ इति पदसंज्ञायाम् । " सजूरह्रस्स– ।६८। " इत्यादिना पदन्ते सस्य रिः । तस्य " रः पदान्ते विसर्जनीयः ।१४। " औकारे " एजूच्यैच् " ।१५। इत्यैच् । जसि । " एङो लुक् " ।१५२। इत्यधिकृत्य ॥

**९९ एदे** ।१।२।१०६। अपदन्तस्यातो लुग्भवति एकारे अकारे च परे ॥ इति लुचि प्राप्तायाम् ॥

**१०० भ्यस्याः** ।१।२।१६२। अतः आद्भवति भयादावदादौ च सुपि परे ॥ पुनर्दीर्घः सस्य रिविसर्जनीयौ । धर्मः धर्मौ धर्माः सुखयति सुखयतः सुखयन्ति इत्यादिक्रियासम्बन्धो ज्ञातव्य ॥ कार्यान्तरव्यापृतस्य स्वाभिमुखीकरणमामन्त्रणं संबोधनं तद्विवक्षायाम् ॥

**१०१ आमन्त्र्ये** ।१।३।९९। एकत्वादिसङ्ख्यावत्यामन्त्र्यमाणेऽर्थे वर्तमानाच्छब्दात्क्रमेण स्वौजसो भवन्ति ॥ इत्कार्यं पूर्ववत् । सौ ॥

**१०२ ह्रस्वोऽनित्याटः** ।१।२।१२२। एकामन्त्रणे अतो नित्याटश्च ह्रस्वो भवति श्यनप्सुटि परे स्वमोश्च लुक् ॥ इत्यकारस्याप्यकारः सोश्च लुग्भवति औजसोः पूर्ववत्प्रक्रिया । आमन्त्रणाभिव्यक्त्यर्थं हेशब्दोऽभिसंबध्यते । हे धर्म हे धर्मौ हे धर्माः मां रक्ष मां रक्षतं मां रक्षत इत्यादि-

---

१ सु औ जस् इत्यतः सु इत्यारभ्य आ महिङ्प्रत्ययात् सुब्प्रत्याहारः ॥

२ एच अच एदं तस्मिन् एदे । देहलीदीपन्यायेन तकारस्योभयत्र सम्बन्धः ॥ अग्रहणं किं ? भयादौ सुपि च दीर्घार्थम् ॥

३ ह्रस्वग्रहणं नित्यार्थम् ॥ ह्रस्वस्य ह्रस्वः किमर्थमिति चेत् 'ह्रस्वैतो लुचि चारेङ्' (१५०) इति आरेङ्प्राप्तौ तन्माभूदिति ह्रस्वः ॥

क्रियायोगो द्रष्टव्यः ॥ कर्मादिविवक्षायां ।"ह्याधिक्समयेत्यधिकृत्य ।३४५।,,

**१०३ कर्मणि** ।१।३।१०५। क्रियाविषयः कर्म । तस्मिन्नेकत्वादिसङ्ख्येऽप्रधानार्थे वर्तमानाच्छब्दात् अम् औट् शस् इत्येते प्रत्ययाः क्रमेण भवन्ति ॥ यस्मिन्कारके धातुप्रत्यया भवन्ति तत्प्रधानम् । अन्यदप्रधानम् । टशावितौ टकारः सुट्प्रत्याहारार्थः। शकारः शस्यगिति विशेशणार्थः ॥ अमि 'म्यत्या' इत्याकारे प्राप्ते ॥

**१०४ मोऽणोऽमः** ।१।२।३६। अणः परस्य अमः ओदेर्मकारो भवति ॥ "संयोगस्यादिस्कोर्लुक् ।२५०।" इत्यधिकृत्य ॥

**१०५ पदस्य** ।१।२।९२ । हलोऽनन्तरास्संयोगः । तदन्तस्य पदस्य लुग्भवति ॥ इति पदस्य सर्वस्य लुक्प्राप्तौ ॥

**१०६ षष्ठयाः स्थानेऽन्तेऽलः** ।१।१।४७। षष्ठयन्तस्य विधिः तस्यान्ते अलः स्थाने भवति ॥ औत्वैत्र् । शसि 'ऋत्यकः' दीर्घः ॥ 'शस्यक्।१८१।' इत्यधिकृत्य ॥

**१०७ नन्तः पुंसः** ।१।१।७९। पुल्लिँङ्गस्याकः साचो नान्तो दीर्घो भवति शसि परे ॥ आसन्न इत्यान् सस्य पदस्येति लुक् । धर्म । धर्मौ । धर्मान् । चिनोतीत्यादिक्रियासम्बन्धो वेदितव्यः ॥ करणादिविवक्षायां । "टा भ्यां भिस्सिद्धौ ।३६०।" इत्यधिकृत्य ॥

**१०८ हेतुकर्तृकरणेत्थंभूतलक्षणे** ।१।३।१२८। एकत्वादिसङ्ख्येऽप्रधाने हेत्वाद्यर्थे वर्तमानाच्छब्दात् टा भ्यां भिस् इत्येते प्रत्ययाः क्रमेण भवन्ति ॥ ट इत् "नास्तीटः ।१३५।" इति विशेषणार्थः ॥

---

१ "तस्मादादेः ।५४१" इति सूत्रनियमात् अम आदेरेव मकारो भवति ॥

२ "नः ।२०४" इति सूत्रेण पदान्तनकारस्य लुचि प्राप्तायां "परे ।२२४" इति सूत्रेण पूर्वकार्यस्य नलोपस्यासत्त्वं पदान्तत्वाभावादिति वेदितव्यम् ॥ "पदस्य ।१०५" इति सूत्रेण सकारलोपात्मकोत्तरकार्यस्य सत्वात् ॥

३ अर्थविशेषचिह्नमित्थम्भूतलक्षणम् । यथा– [illegible] बटुमद्राक्षीत्तया छत्रेण भूपतिम् । इत्यादौ शिखादि ॥

"नातः ।२०८।" इत्यधिकृत्य ॥

**१०९ ङसास्येस्स्येनाद्यम्** ।१।२।११५। अकारान्तात्परस्य ङसः स्यो भवति टाया इनः ङसेरात् ङेर्येः ॥ इति टाया इनः ॥ "षृर्न्नो णः १।२।५०।" इति परिभाषायाम् ॥

**११० अभिन्ने** ।१।२।५६। एकस्मिन् पदे वर्तमानाभ्यां षकाररेफाभ्यां परस्य नकारस्य णकारो भवति ॥

**१११ शुंल्दुस्तौ नान्तरे** ।१।२।५१। शे चवर्गे ले टवर्गे से तवर्गे स्थानिनिमित्तयोरन्तरे मध्ये सति नस्य णो न भवति ॥ इति नियमादन्यस्मिन् वर्णे तयोरन्तरे सत्यपि णत्वं भवत्येव ॥ एङ् । भ्यामि भ्यत्या इत्यात् । भिसि ॥

**११२ ऐस्भिसोऽद्मशः** ।१।२।१६४। अकारान्तात्परस्य भिसः ऐसादेशो भवति न दकारादेशान्मकारादिदमादेशादशश्च परस्य ॥

**११३ शिदङ्दिल्** ।१।१।४९। शिदेकाल् अङिदनेकाल् चादेशः षष्ठ्यन्तस्य सर्वस्य स्थाने भवति ॥ ऐच् । सस्य रिः विसर्जनीयश्च ॥ धर्मेण । धर्माभ्यां । धर्मैः । सुखं लभ्यते इत्यादिक्रियान्वयः कर्तव्यः ॥ संप्रदानादिविवक्षायाम् । "संमो ज्ञोऽस्मृतौ चाप्ये ।१।३।१३२।" "दाणाऽधर्मे तङ्च

---

१ परिभाषेयम् । स्थानिनिमित्तनियमार्थो यः कश्चिदिह शास्त्रे णो नाम विधीयते स सर्वः षकाराद्रेफाच्च परस्य नकारस्य स्थाने भवति ॥ स चातः परेऽसन्भवतीति वेदितव्यः ॥

२ क्रमेणोदाहरणानि— राशिना । अर्चना । विरलेन । वृष्टेन । दृढेन । रसना । तर्थेन ॥

३ सम्पूर्वजानातेरस्मृतौ वर्तमानस्य यदाप्यं प्राप्यं कर्म तत्र टाभ्यांभिसो भवन्ति वा ॥ मात्रा सञ्जानीते । मातरं सञ्जानीते ॥ अस्मृताविति किं? मातरं सञ्जानाति । मातुः सञ्जानाति स्मरतीत्यर्थः ॥ चकारेण वा इत्यनुकृष्यते ॥

४ अधर्मरूपेऽर्थे वर्तमानेन समा दाण् दाने इत्यनेन योगे देयैर्दातव्यैराप्ये देयं यमाभजति तत्राप्रधानेऽर्थे वर्तमानाट्टाभ्यांभिसो भवन्ति । तस्माच्च दाणस्तङ्भवति ॥ दास्या सम्प्रयच्छते । वृषल्या सम्प्रयच्छते । कामुकः सन् ददातीत्यर्थः ॥ अधर्मे इति किं? पत्न्यै सम्प्रयच्छति ॥

देयैः ।१।३।१३३।" इति प्रस्तुत्य ॥

**११४ ङे भ्यां भ्यस्** ।१।३।१३४। एकत्वादिसङ्ख्ये देयैराप्ये संप्रदाने अप्रधानार्थे वर्तमानाच्छब्दात् ङे भ्यां भ्यस् इत्येते प्रत्ययाः क्रमेण भवन्ति ॥ ङ इत् ङित्कार्यार्थः । ङसेत्यादिना ङेर्यः 'भ्यत्या' इत्यात् भ्यामि च तथा ॥ भ्यसि ।

**११५ बह्वोसि स्भ्येत्** ।१।२।१६३। अतः एद्भवति सकारभकारादौ बहुवचने ओसि च परे ॥ सस्य रित्वादि । धर्माय । धर्माभ्यां । धर्मेभ्यः । धनं ददातीत्यादिक्रिया योज्या ॥ अपादानादिविवक्षायां । "ङसि भ्यां भ्यस्स्तोकाल्पकतिपयकृच्छ्रादसत्त्वे । ३७६ ।" इत्यधिकृत्य ॥

**११६ अपायेऽवधौ** ।१।३।१५६। अपायो बुद्धिकृतो विभागः तस्मिन् विषये तदवधावपादाने एकत्वादिसङ्ख्येऽप्रधानेऽर्थे वर्तमानाच्छब्दात् ङसि भ्यां भ्यस् इत्येते प्रत्ययाः क्रमेण भवन्ति ॥ ङितावितौ ङकारो ङित्कार्यार्थः । इकारो "ङसेरागते ।७३१" इति विशेषणार्थः । ङसेत्यादिना ङसेरात् दीर्घः । जश्त्वं । "विरामेऽगिदनाङ्चाद्यण्वानुनासिकः" इत्यधिकृत्य ॥

**११७ चर्जशः** ।१।१।६९। विरामे जशश्चर्वा भवत्यासन्नः ॥ भ्याम्यात्वं भ्यस्येत्वं । सस्य रिविसर्जनीयौ । धर्मात् धर्माद् । धर्माभ्यां । धर्मेभ्यः । अपैतीति क्रियासङ्गतिः कर्तव्या ॥ स्वस्वाम्यादिसम्बन्धविवक्षायां । "योगे । ३४४" इत्यधिकृत्य ॥

**११८ ङसोसाम्** ।१।३।१६२। एकत्वादिसङ्ख्येऽप्रधानार्थे वर्तमानाच्छब्दात् ङस् ओस् आम् इत्येते प्रत्ययाः क्रमेण भवन्ति योगे सम्बन्धे द्योत्ये ॥ ङ इत् ङित्कार्यार्थः । ङसेत्यादिना ङसः स्यादेशः । ओस्येत्वम् अयादेशश्च । सस्य रिविसर्जनीयौ । आमि "नामामः । १९७" इति प्रस्तुत्य ॥

१ यतोऽपैति भयमादत्ते वा तदपादानम् । अपादीयतेऽस्मादित्यपादानमपायः ॥ अवधिरित्यप्यपायशब्दस्य प्रत्यर्थ एव ॥ आदिशब्देन देत्वादिग्रहणम् ॥

**११९ नम्ह्रस्वाद्साटः** ।१।२।३३। नमः ह्रस्वादाङः सम्भवदाटश्च परस्यामो नां भवति ॥ अनेकाल्त्वात्सर्वस्य भवति ॥ "नप्स्वसित्यतो दीर्घः। १७१" इत्यधिकृत्य ॥

**१२० नाम्यतिसृचतुष्षः** ।१।२।१४०। नामि परे पूर्वोऽन्दीर्घो भवति न तिसृचतुरषकारान्तानाम् ॥ अभिन्ने इति नस्य णः। धर्मस्य। धर्मयोः। धर्माणां। मूलं दयेत्याद्यन्वयो लक्ष्यः॥ अधिकरणादिविवक्षायाम्। "क्तेनो ङ्योस्सुप्। ३९०" इत्यधिकृत्य ॥

**१२१ आधारे** ।१।३।१७५। कर्तुः कर्मणो वा आधारेऽधिकरणे एकत्वादिसङ्ख्येऽप्रधानार्थे वर्तमानाच्छब्दात् ङि ओस् सुप् इत्येते प्रत्ययाः क्रमेण भवन्ति ॥ ङपावितौ। ङकारः प्राग्वत्। पकारः सुबिति प्रत्याहारार्थः। ङावेङ् ओस्येत्वम् अयादेशश्च सस्य रिविसर्जनीयौ। सुप्येत्वं शास्वसीत्यादिना षिः। धर्मे धर्मयोः धर्मेषु ॥ चित्तमहं दधे इत्यादिक्रियासम्बन्धो वेदितव्यः॥ एवं वृक्षघटपटकुम्भस्तम्भादयः शब्दा नेतव्याः॥ उक्तरूपसमुच्चयः। धर्मः धर्मौ धर्माः। हे धर्म हे धर्मौ हे धर्माः। धर्मं धर्मौ धर्मान्। धर्मेण धर्माभ्यां धर्मैः। धर्माय धर्माभ्यां धर्मेभ्यः। धर्मात् धर्माद् धर्माभ्यां धर्मेभ्यः। धर्मस्य धर्मयोः धर्माणां। धर्मे धर्मयोः धर्मेषु॥ मासशब्दात् स्वादयः सुटि धर्मशब्दवत्। असुटि ॥

**१२२ पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकन्शकन्नुदन्नासंश्वासुटि** ।१।२।१४३। पाददन्तनासिकामासहृदयनिशाअसृज्यूषदो-

---

१ आध्रीयेते कर्तृकर्मणी व्यवतिष्ठेते अस्मिन्नित्याधारः॥ अथवा आध्रीयन्तेऽवतिष्ठन्ते क्रिया अस्मिन्नित्याधारः। तर्हि कर्तृकर्मणोरेव सञ्ज्ञा स्यात्? तथाहि कर्तृस्था कर्मस्था वा क्रिया भवति कटे आस्ते इत्यत्र कर्तृस्था ओदनं पचतीत्यत्र कर्मस्था इति चेत् तत्र तया सहाधारभूते कर्तृकर्मणी यस्मिन्नाध्रीयेतेऽवतिष्ठेते स आधारः॥ तथाच कर्तृकर्मणोराधार इति सिध्दम्॥ स च चतुर्विधः। औपश्लेषिकः यथा कटे आस्ते। व्यापकः यथा तिलेषु तैलम्। वैषयिकः यथा खे शकुनयः सन्ति। सामीपकः यथा गङ्गायां घोष इत्यादि॥

स्यकृत्शकृत्उदकआसनइत्येतेषां क्रमेण पद् दत् नस् मास् हृद् निश् असन् यूषन् दोषन् यकन् शकन् उदन् आसन् इत्येते आदेशा वा भवन्त्यसुटि शसादौ सुपि परे ॥ इति मासशब्दस्य मास् । मासः मासान् । मासा मासेन । भ्यामि ॥

**१२३ सिद्धल्यधातोः** ।१।१।६४। सिति वलादौ च प्रत्यये परे पूर्वं पदसंज्ञं भवति न धातोर्विहिते प्रत्यये परे ॥ सजूरहस्स इत्यादिना सस्य रिः । रेर्यः । व्योऽप्ष्येत्यादिना यस्य लुक् । माभ्यां मासाभ्यां । माभिः मासैः ॥ मासे मासाय । माभ्यां मासाभ्यां । माभ्यः मासेभ्यः ॥ मासः मासात् मासाद् । माभ्यां मासाभ्यां । माभ्यः मासेभ्यः ॥ मासः मासस्य । मासोः मासयोः । मासां मासानां ॥ मासि मासे । मासोः मासयोः । शरि वा इति माःसु मास्सु मासेषु ॥ एवं पादशब्दात् स्वादौ सुब्विशेषः । शसादौ वा पद्भावः । पदः पादान् । पदा पादेन । सुपि चर्त्वम् इत्यादि ॥ एवं दन्तशब्दस्यासुटि वा दद्भावः । दतः दन्तान् । दता दन्तेन इत्यादि ॥ भादौ जश्त्वं सुपि जश्त्वचर्त्वे ॥ सर्वादेर्भेदोऽस्ति ततः स्वादयः । जसि ॥

**१२४ जसः शिः** ।१।२।१६७। अदन्तस्य सर्वादेस्सम्बन्धिनो जसश्शिर्भवति ॥ श इत् शित्त्वात्सर्वस्य । एङ् । ङिङसिङेषु ॥

**१२५सर्वादेर्ङ्यस्येः स्मिन् स्मात् स्मै** ।१।२।१६६। अदन्तस्य

१ सर्व विश्व उभ उभय अन्य अन्यतर इतर डतर डतम त्व त्वत् नेम सिम सम ( सर्वार्थे ) पूर्व पर अवर दक्षिण उत्तर अपर अधराणि व्यवस्थायामसञ्ज्ञायाम् ॥ स्वं अज्ञातिधनाख्यायाम् ॥ अन्तरं बाह्योयोगोपसंव्यानयोरुपरि ॥ त्यद् तद् यद् अदस् इदम् एतद् एक द्वि युष्मत् अस्मद् भवतु किं असञ्ज्ञायामेवैतेऽपि ॥ इति सर्वादिगणः ॥ सरति व्याप्नोति द्रव्यपर्यायेष्विति सर्वः ॥ तत्सम्बन्धिनामिति किं? प्रियसर्वाः । प्रियसर्वाय ॥ अत्र बहुव्रीह्याश्रयणेण सर्वशब्दस्याप्राधान्यात्तदुत्तरभाविनां प्रत्ययानां न तत्सम्बन्धित्वम् । परमसर्वे इत्यत्र तु कर्मधारयाश्रयणात्सर्वशब्दस्य विशेष्योत्तरपदकर्मधारयान्तर्भूतत्वेन प्राधान्यात् तदुत्तरभाविनां प्रत्ययानां भवति तत्सम्बन्धित्वमिति तात्पर्यम् ॥

सर्वादेस्सम्बन्धिनां ङि ङसि ङे इत्येतेषां स्मिन् स्मात् स्मै इत्येते आदेशाः क्रमेण भवन्ति ॥ आमि ॥

**१२६ समामः** ।१।२।१७६। अवर्णान्तस्य सर्वादेः सम्बन्धिन आमस्साम्भवति ॥ एत्वषत्वे । अन्यत्र धर्मशब्दवत् । सर्वः सर्वौ सर्वे ॥ हे सर्व हे सर्वौ हे सर्वाः ॥ सर्वं सर्वौ सर्वान् ॥ सर्वेण सर्वाभ्यां सर्वैः ॥ सर्वस्मै सर्वाभ्यां सर्वेभ्यः ॥ सर्वस्मात् सर्वस्माद् सर्वाभ्यां सर्वेभ्यः ॥ सर्वस्य सर्वयोः सर्वेषां ॥ सर्वस्मिन् सर्वयोः सर्वेषु ॥ एवं विश्वादयो नेतव्याः ॥ उभशब्दस्य द्वित्ववाचित्वात्ततो द्विवचनमेव । शेषं सर्वशब्दवत् । उभौ । उभौ । उभाभ्याम् । उभाभ्याम् । उभाभ्याम् । उभयोः । उभयोः ॥ त्यद् शब्दात् स्वादयः । "त्यदां द्वितीयाटौस्येनदेतदः ।१४३।" इत्याधिकृत्य ॥

**१२७ ससौ चात्** ।१।२।२१६। त्यदादीनामष्टानां अदादेशो भवति स्वसम्बन्धिनि सुपि ससौ च परे ॥ सच षष्ठ्यास्स्थानेऽन्तेऽल इति दकारस्य भवति । एदे इति पूर्वाकारस्य लुक् । "दस्सः ।१३१।" इत्यधिकृत्य ॥

**१२८ तोऽष्टानाम्** ।१।२।२१५। त्यदादीनामष्टानां तकारस्य सकारो भवति स्वसौ परे ॥ सो रित्वादि । अन्यत्र सर्वत्रात्वाल्लुचौ प्रागवत् सर्वादिकार्यम् ॥ स्यः त्यौ त्ये । त्यं त्यौ त्यान् । त्येन त्याभ्यां त्यैः । त्यस्मै त्याभ्यां त्येभ्यः । त्यस्मात् (–द्) त्याभ्यां त्येभ्यः । त्यस्य त्ययोः त्येषां । त्यस्मिन् त्ययोः त्येषु ॥ एवं तद्शब्दः । सः तौ ते । तं तौ तान् । तेन ताभ्यां तैः । तस्मै ताभ्यां तेभ्यः । तस्मात (–द्) ताभ्यां तेभ्यः । तस्य तयोः तेषां । तस्मिन् तयोः तेषु ॥ एवं यद् शब्दात्स्वादयः अत्वाल्लुगादिकार्यं । यः यौ ये । यं यौ यान् । येन याभ्यां यैः । यस्मै याभ्यां येभ्यः । यस्मात्

---

१ अत्र ससुरिति प्रत्याहारः । स च "अद्यादिवैपुल्यात्सर्वादिक्विबहोः सस् ।३।४।१२" इत्यारभ्य कथामित्थमुहु ।३।४।२६। "इत्येतत्सूत्रपर्यंतं वर्तते । चकारः उक्तसमुच्चयार्थः । तेन चकारेण "त्यदां द्वितीया टौस्येनदेतदः ।१।२।२०३।" इत्यतः त्यदां सम्बन्धिनीति श्युन्मघोनां वस्येसुप्युश् ।१।२।१४८। इत्यतः सुपीति मिलित्वा स्वयां सम्बन्धिनि सुपीति व्याख्यातम् ॥ स्वसम्बन्धिनि सुपीति किं? प्रियत्यदौ ॥

(—इ) याभ्यां येभ्यः। यस्य ययोः येषां। यस्मिन् ययोः येषु ॥ अदस्शब्दात् स्वादयः। "सौ ।१३६।" इत्यधिकृत्य ॥

**१२९ औस्सुलुकादसोऽनोः** ।१।२।२१२। अदसोऽन्त्यस्यौकारो भवति स्वसौ परे नोकारवतः सोश्च लुक् ॥

**१३० स्थानीवानलाश्रये** ।१।१।५०। यस्य स्थाने यो विधीयते स स्थानी इतर आदेशः। स्थानिवद्भवत्यादेशः स्थान्याश्रये कार्ये कर्तव्ये स्थानिकार्यं भजत इत्यर्थः। न स्थान्यलाश्रये कार्ये ॥ इति सुलुचः स्थानिवद्भावे ॥

**१३१ दस्सः** ।१।२।२१४। अदसो दकारस्य स्थाने सो भवति स्वसौ परे ॥ ऐच्। अन्यत्र सुपि अत्वाल्लुचौ ॥

**१३२ दो मोऽस्यादसो माद्गुश्चाषिन्यसन्** ।१।२।४४। अवर्णान्तस्यादसो दस्य मो भवति। मकाराच्च परस्यालो गुर्भवति। स च षिनाभ्यामन्यस्मिन् कार्ये प्राप्ते असन् भवति॥[1] इत्यैचि कृते गुः। ग इत् गित्कार्यार्थः। आसन्न इति द्विमात्रस्यौकारस्य द्विमात्र ऊकारः ॥ जशः शिरेङ् मत्वं च ॥

**१३३ गी बहुत्वेः** ।१।२।४६। बहुत्वे अदसो मात्परस्य एतो गीः भवति अमि ॥ अत्वाल्लुचौ मत्वगुत्वे। औश्यविशेषः। शस्यान् मत्वगुत्वे अन्तलुक्। टायामषिनीति वचनात् मत्वगुत्वे ॥

**१३४ घ्यसख्यद्वन्द्वपतीदुत्** ।१।१।४०। इदुदन्तं घिसंज्ञं भवति

---

१ षिश्च नाश्च षिनाः। न षिनाः अषिनाः। तस्मिन् अषिनि। अत्र नि इति नाशब्दस्य सोमपाशब्दवत्सप्तम्यैकवचनम् ॥ असदिति किं? अमुया अमूभ्याम्। अत्र अमू आ इति स्थिते गुश्च प्राप्नोति "टौस्येत्" इति सूत्रेण एत्वं च। तत्रासत्यसन्नित्येतस्मिन्परत्वादन्तरङ्गत्वाच्च गौ कृते स्थानिवद्भावेन यद्येत्वं स्यात् कृतकार्यत्वाद्गुशास्त्रस्य पुनर्गुर्नेत्युकारश्रुतिर्न स्यात्। अतोऽसन्नित्याकारस्यैवैत्वं ततो यादेशस्ततो गुरिति ॥ तथा अमूभ्यामित्यत्र गुत्वं प्राप्नोति 'भ्यात्याः' इति सूत्रेणात्वं च। ततः परमप्यात्वं नित्यत्वाद्बाधित्वा गौ कृते दीर्घश्रुतिर्न स्यात्। अतोऽसन्नित्यात्वं ततो गुरिति न्यासे स्पष्टम् ॥

मखिशब्दमद्वन्द्वसमासीयं च पतिशब्दं वर्जयित्वा॥ "घेर्डौरनाटि ।१५५।" इत्यधिकृत्य ॥

**१३५ नाऽस्त्रीटः** ।१।२।२७। घिसंज्ञात्परस्य टः ना इत्यादेशो भवति न स्त्रीविषयस्य ॥ भ्याम्यात्वे कृते मत्वगुत्वे । भिसः अम्रस इति प्रतिषेधात्रैम् एत्वे मीत्वं । ङितः स्याद्यादौ मत्वगुत्वे । षत्वं च । अषिनीति वचनात् न गुत्वस्यासत्त्वं । ओस्येत्वे अयि च कृते मत्वगुत्वे । आमः साम्येत्वे पुनः षिर्गीत्वं च । सुपि च तथा॥ असौ। अमू। अमी॥ अमुम्। अमू। अमून्॥ अमुना। अमूभ्याम्। अमीभिः ॥ अमुष्मै । अमूभ्याम् । अमीभ्यः ॥ अमुष्मात् (–द्)। अमूभ्याम् । अमीभ्यः॥ अमुष्य । अमुयोः । अमीषाम्॥ अमुष्मिन्। अमुयोः । अमीषु ॥ इदमः स्वादयः ॥

**१३६ सौ** ।१।२।२०९। इदमोऽन्तस्य मो भवति स्वसौ परे ॥ अत्वापवादः ॥

**१३७ पुंसीदोऽय्** ।१।२।२१०। इदमः इद्रूपस्य अय् भवति पुल्लिङ्गीये स्वसौ परे ॥

**१३८ हल्ङ्याब्दीर्घाल्लुक्** ।१।२।१२०। हलः ङ्याब्भ्यां च दीर्घाभ्यां परस्य सेर्लुक् भवति ॥ अन्यत्वात्वाल्लुचौ ॥

**१३९ दो मः** ।१।२।२०८। इदमो दस्य मो भवति स्वसुपि परे ॥ शेषं प्राग्वत् । टायाम् ॥

**१४० टौस्यनः** ।१।२।२०७। इदमः अनो भवति स्वटौसोः परतः॥

---

१ अत्र पदस्येत्यनेनैव सुलोपसिद्धौ हल्ग्रहणं कुत इति चेत् राजभित्यत्र नलोपार्थम्। अन्यथा 'पदस्य' इति पूर्वसूत्रेण लोपे कृते 'नः ।२०४' परसूत्रम् । तथाच परसूत्रेण नकारलोपे कृते 'परे ।१।२।४९।' इति सूत्रेण परे कार्ये कर्तव्ये पूर्वमसद्भवतीति नियमेन सुलुचोऽसत्वात्पदस्येति प्राप्तेरसद्भावः । अतः कारणात् हल्ग्रहणं नलोपार्थम् ॥ 'नः १।२।९५।' इति परं । 'पदस्य ।१।२।९२।' इति पूर्वम् ॥

एङ् । स्यामि । " इमेऽस्मि ।१।२।२०५। " इत्यादि ॥

१४१ अकः ।१।२।२०६। अकारस्येदमः अश् भवति स्यमादौ स्वसुपि परे ॥ श इत् सर्वादेशार्थः । भिसः अभाव इति प्रतिषेधात्सैस् । भिसः स्मादौ अश् । ओसन्तः शेषं प्राग्वत् ॥ अयम् । इमौ । इमे ॥ इमम् । इमौ । इमान् ॥ अनेन । आभ्याम् । एभिः ॥ अस्मै । आभ्याम् । एभ्यः ॥ अस्मात् ( -द् ) । आभ्याम् । एभ्यः ॥ अस्य । अनयोः । एषाम् ॥ अस्मिन् । अनयोः । एषु ॥ अन्वादेशे द्वितीयाटौसि सुपि भेदोऽस्ति

१४२ इदमः ।१।२।२०४। अन्वादेशे इदमः एनदादेशो भवति द्वितीयाविभक्तौ टायामोसि च परे ॥ अत्वालुचौ शेषं प्राग्वत् ॥ एनम् । एनौ । एनान् ॥ एनेन ॥ एनयोः ॥ एनयोः ॥ एतदः स्वादयः अत्वालुचौ ॥ सौ तोऽष्टानामिति तस्य सः शास्वसीति सस्य षिः रिविसर्जनीयौ । अन्यत्र सर्वशब्दवत् ॥ एषः । एतौ । एते ॥ एतम् । एतौ । एतान् ॥ एतेन । एताभ्याम् । एतैः ॥ एतस्मै । एताभ्याम् । एतेभ्यः ॥ एतस्मात् (-द्) । एताभ्याम् । एतेभ्यः ॥ एतस्य । एतयोः । एतेषाम् ॥ एतस्मिन् । एतयोः । एतेषु ॥ अन्वादेशे ॥

१४३ त्यदां द्वितीयाटौस्येनदेतदः ।१।२।२०३। अन्वादेशे एतदः एनद्भवति द्वितीयाविभक्तौ टायामोसि च त्यदादिसम्बन्धिनि सुपि परे ॥ शेषं प्राग्वत् । एनं । एनौ । एनान् ॥ एनेन । एनयोः । एनयोः ।

---

१ इदमः सकारमकारयकारादिके त्यदादिसम्बन्धिनि सुपि परे अन्वादेशे अशित्ययमादेशो भवति ॥ शैक्षिको यकमध्येता । अथोऽस्मै साधु दीयतां सूत्रम् । शैक्षिकाविमकावध्येतारौ । अथो आभ्यां साधु दीयतां सूत्रम् । बालिकेयकं याचते । अथो अस्यै दीयतां मोदकः ॥ स्म्ये इति किं? इमे इमके । परत्वान्मत्वादि भवति । अन्वादेशे विधिः सुपा प्रकृतिं विशेष्यत इति ॥ परमैतं परमेमम् । परमेमकस्मै इत्येनदादि न भवति ॥ शकारः सर्वादेशार्थः ॥

२ कथितस्यानुकथनमन्वादेशः । अनेन रात्रिरधीता अथो एनेन अहरधीतम् । इदमादिशब्दानामर्थाश्च– इदमः प्रत्यक्षगतं समीपतरवर्ति चैतदो रूपम् ॥ अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात् ॥ १ ॥

सङ्ख्यावाचिन एकशब्दादेकवचनान्येव । एकः । एकम् । एकेन । एकस्मै । एकस्मात् (–द्) । एकस्य । एकस्मिन् ॥ कतिपयवाचिनो द्विवचनबहुवचनान्यपि । एकः । एकौ । एके । इत्यादि सर्वशब्दवत् ॥ द्विशब्दस्य द्वित्ववाचित्वात्ततो द्विवचनान्येव । अत्वं । द्वौ । द्वौ । द्वाभ्यां । द्वाभ्यां । द्वाभ्यां । द्वयोः । द्वयोः ॥ किमः स्वादयः ॥

**१४४ किमः कः** ।१।२।१७। किमः को भवति स्वसम्बन्धिनि सुपि त्रसौ च परे ॥ कः । कौ । के ॥ कं । कौ । कान् ॥ केन । काभ्यां । कैः ॥ कस्मै । काभ्यां । केभ्यः ॥ कस्मात् (–द्) । काभ्यां । केभ्यः ॥ कस्य । कयोः । केषां ॥ कस्मिन् । कयोः । केषु ॥ पूर्वशब्दात्स्वादयः ॥

**१४५ नव पूर्वा वादौ** ।१।२।१७२। पूर्वादयो नव सर्वादयो वा भवन्त्यदिदादौ स्वसुपि परे ॥ पूर्वः । पूर्वौ । पूर्वे पूर्वाः ॥ हे पूर्व ॥ पूर्वं । पूर्वौ । पूर्वान् ॥ पूर्वेण । पूर्वाभ्यां । पूर्वैः ॥ पूर्वस्मै । पूर्वाभ्यां । पूर्वेभ्यः ॥ पूर्वस्मात् (–द्) । पूर्वात् (–द्) । पूर्वाभ्यां । पूर्वेभ्यः ॥ पूर्वस्य । पूर्वयोः । पूर्वेषां ॥ पूर्वस्मिन् । पूर्वयोः । पूर्वेषु ॥ एवं परावरदक्षिणोत्तरापराधरान्तरस्वशब्दाः ॥ द्वितीयशब्दात्स्वादयः तस्य ङेङसिङस्ङिषु भेदोऽस्ति ॥

**१४६ तीयं ङिति** ।१।२।१७३। तीयप्रत्ययान्तं सर्वादि वा भवति ङिति सुपि परे ॥ सर्वादित्वात् स्मायादि । द्वितीयस्मै द्वितीयाय । द्वितीयस्मात् (–द्) द्वितीयात् (–द्) । द्वितीयस्मिन् द्वितीये । अन्यत्र धर्मशब्दवत् । एवं तृतीयशब्दः ॥

---

1 अत्र नवग्रहणात् पूर्वा इति बहुवचनाच्च पूर्वा इत्यस्य पूर्वादय इत्यर्थो गृह्यते । नवेति किं? त्यस्मात् त्यस्मिन् । पूर्वादय इति किं? सर्वे सर्वस्मात् ॥ वादौ इत्यत्र वा अदौ इति च्छेदः । अच्च इच्च अदि तस्मिन् अदौ इति विग्रहः । अत्र अदि इत्येकवचनं नपुंसककार्यं च न शङ्क्यम् । कुतः? लक्षणसूत्रे लक्षणं व्यभिचरन्त्याचार्याः ॥ पूर्वादीनां सर्वादित्वं प्रथममेव सिध्द तदनेन अदिदादौ स्वसुपि विकल्प्यत इत्यर्थः ॥ अदिदादाविति किं? पूर्वस्मै पूर्वेषाम् ॥ पूर्वस्याः इत्यत्र नित्यत्वात्पूर्वमेव याट् भवति ॥

**१४७ नेमार्धप्रथमचरमाल्पकतिपयतयस्य वा** ।१।२।१६८। नेमादीनां तयट्प्रत्ययान्तस्य च जसः शिर्वा भवति ॥ नेमे नेमाः । अर्धे अर्धाः । प्रथमे प्रथमाः । चरमे चरमाः । अल्पे अल्पाः । कतिपये कतिपयाः । द्वितये द्वितयाः । इत्यादि ॥ आकारान्तः पुल्लिङ्गः सोमपाशब्दः । पूर्ववत्स्वादयः । सुब्विशेषः । आमन्त्र्ये सौ अदन्तत्वाभावान्न ह्रस्वः शसादावजादौ—

**१४८ आतोऽनाङः श्लुक्** ।१।२।१५१। अपदान्तस्यातः श्लुग्भवति सुदृंच्छिण्यादिवर्जिते प्रत्यये ण्यां च परतः नाङः ॥ संहिता । वलादौ पदत्वान्नातः श्लुक् । सोमपाः । सोमपौ। सोमपाः॥ हे सोमपाः। हे सोमपौ। हे सोमपाः॥ सोमपां । सोमपौ । सोमपः ॥ सोमपा । सोमपाभ्यां । सोमपाभिः ॥ सोमपे । सोमपाभ्यां । सोमपाभ्यः ॥ सोमपः । सोमपाभ्यां । सोमपाभ्यः ॥ सोमपः । सोमपोः । सोमपां ॥ सोमपि । सोमपोः । सोमपासु ॥ एवं क्षीरपाम्बुपादयः ॥ इकारान्तः पुल्लिङ्गो रविशब्दः ततः स्वादयः सो रिविसर्जनीयौ । औकारयोः ॥

**१४९ इदुतो गिग्वौतोऽस्त्रेः** ।१।२।२२। इकारात्परस्य औतः सुपो गिर्भवति उकारात्परस्य गुः न स्त्रीशब्देकारात् ॥ ग इत् । गित इति सन्धिप्रतिषेधार्थः । दीर्घः । जसि ॥

**१५० जस्येङ्** ।१।२।२३। इदुतोरेङ् भवति जसि परे ॥ आसन्नः अय् ॥ आमन्त्रणे सौ ॥

---

१ व्यवस्थितविभाषाविज्ञानात्सञ्ज्ञायां न भवति । नेभेति केषाञ्चिन्नाम अत्र विकल्पो मा भूत् नेमाः । अत्रापि स्वसम्बन्धिनीति वर्तते तेनेह न भवति प्रियनेमाः । अतिनेमाः इत्यादि ॥ प्रत्ययान्तग्रहणादिह न भवति अर्धकाः । आदन्ताद्विकल्पो मा भूत् नेमाः स्त्रियः ॥

२ ण्यसुदृच्छिण्यादिप्रत्यये इति किं? द्विपादौ द्विपादः । शि व्याघ्रपान्दि कुलानि ।

३ अस्त्रेरिति किं? अतिस्त्रियौ पुरुषौ । अस्त्रेरितीदमेव ज्ञापकं इयोऽपवादेन इदुत्कार्यं भवतीत्यस्य । तेन अतिस्त्रियः ॥ यदि इदुत्कार्यात्परत्वादियादेशः स्यात्तर्हि व्यर्थः प्रतिषेधोऽस्त्रेरिति । तस्मादिदमेव तु प्रतिषेधवचनं ज्ञापकं इयादेशं परं बाधित्वा इदुदः कार्यं भवतीति ॥

**१५१ ह्रस्वेतो लुचि चारेङ्** ।१।२।१२५। ह्रस्वस्य एकारस्य च अरङ् एङित्यादेशा भवन्ति आमन्त्रणे सौ परे। इको लुगिति लुचि च सत्यां सोश्च लुक् ॥ आसन्नः । औजसोः प्राग्वत् । अमि मत्वलुचौ । औत्वभेदः । शसीन् सलुक् "अभिचे ।११०" इति णत्वे प्राप्ते ॥

**१५२ अन्तक्षुभ्नादीनाम्** ।१।२।५४। पदान्तस्य क्षुभ्नादीनां च नस्य णो न भवति ॥ इति णत्वाभावः। टायां घित्वाभास्त्वीट इति नादेशः। णत्वं । ङयि ॥

**१५३ ङ्येङ्** ।१।२।२८। घेरेङ् भवति ङादौ सुपि परे ॥ आसन्नः अय् । ङसिङसोरेङि ॥

**१५४ एङो लुक्** ।१।२।१०५। एङः परयोः ङसिङसोरतो लुग्भवति ॥ ओसि यञ् । आमो 'नम्ह्रस्वाद्साट' इति नाम् । नाम्यतिसृचतुष्ष इति दीर्घः णत्वं च । ङौ ॥

**१५५ घेङ्डौरनाटि** ।१।२।२६। घेः परो ङिडौर्भवति नाटि विषये ॥ ङ इत् ॥

**१५६ ङित्यन्त्याजादेः** ।१।२।१०७। ङिति परे पूर्वस्यान्त्याजादेर्लुग्भवति ॥ सुपि षत्वं । रविः। रवी। रवयः ॥ हे रवे । हे रवी । हे रवयः ॥ रविं। रवी । रवीन् ॥ रविणा । रविभ्यां । रविभिः ॥ रवये । रविभ्यां । रविभ्यः ॥ रवेः । रविभ्यां । रविभ्यः ॥ रवेः । रव्योः । रवीणां ॥ रवौ । रव्योः । रविषु ॥ एवं ध्वनिमुनिकलिबलिकेलिकिमिकविकपिकक्षिवृष्ण्यग्निप्रभृतयः ॥ अतिस्त्रि-शब्दात्स्वादौ औकारयोरस्त्रेरिति निषेधान्न गिः तत्रेय् ॥ अतिस्त्रिः । अति-स्त्रियौ । अतिस्त्रयः ॥ हे अतिस्त्रे । हे अतिस्त्रियौ । हे अतिस्त्रयः ॥ अतिस्त्रियम्

---

१ क्षुभ्ना, तृमनु; (तृप्नु इत्येव पाठस्तु साधुः) आचार्यानी; आचार्यभोगीन, कुमन्, अहन्, पक्ष; नृप, धन, सर्वनामन्, नड, नर, नमन, नृत्त, नदी, निवेश, अग्नि, निवास, अनूप, नैन्वल, नन्दन, नर्तन; गहन, रमन इति क्षुभ्नादिराकृतिगणः ॥

२ स्त्रियमतिक्रान्तोऽतिस्त्रिः पुमान् इत्यर्थः । गतादिषु प्रायस्य इति समासः । स्त्र्यगो-ण्यत इति ह्रस्वः ॥

अतिस्त्रियम्। अतिस्त्रियौ। अतिस्त्रियः अतिस्त्रीन्॥ अन्यत्र रविशब्दवत्॥ पतिशब्दस्य टायां ङिति च विशेषोऽन्यत्र रविशब्दवत्। अघित्वात् टायाः न नाभावः। ङिति नैङ् यञ्। ङसि ङसोः॥

१५७ ख्यत्यात् उः ।१।२।१०४। ख्य त्य इत्यनन्तकाभ्यां परस्य ङसिङसोरतः उकारो भवति॥ सन्निकर्षः॥

१५८ ङिरौत् ।१।२।२४। इदुद्भ्यां परो ङिरौद्भवति॥ यञ्। पतिः। पती। पतयः॥ हे पते। हे पती। हे पतयः॥ पतिं। पती। पतीन्॥ पत्या। पतिभ्यां पतिभिः॥ पत्ये। पतिभ्यां। पतिभ्यः॥ पत्युः। पतिभ्यां। पतिभ्यः॥ पत्युः। पत्योः। पतीनां॥ पत्यौ। पत्योः। पतिषु॥ सखिशब्दात् स्वादयः। "डाम् शसि ।१७६।" इत्यधिकृत्य॥

१५९ ऋत्सखीदुशनस्पुरुदंशोऽनेहसः सोः ।१।२।११९। ऋदन्तादिदन्तात्सखिशब्दादुशनस् पुरुदंशस् अनेहस् इत्येतेभ्यश्च परस्य सोर्डादेशो भवति॥ डइत् अन्त्याजादिलुगर्थः॥

१६० सखित ऐ च ।१।२।१३०। इदन्तस्य सखिशब्दस्य ऐकारो भवति स्यनप्सुटि परे न चैकामन्त्रणे॥ आय्॥

१६१ न डान्लुक् ।१।२।१२९। डा च नलुक् एकामन्त्रणे न भवतः हृस्वैत इत्येङ् सुलुक्। शसीन् सलुक्। टायां अघित्वान्न नाभावः। ङिति नैङ् यञ्। ङसिङस्ङिषु पूर्ववत्। अन्यत्र रविशब्दवत्। सखा। सखायौ

---

१ ख्य् त्य् इत्यनन्तकग्रहणादिह न भवति मुख्यात् अपत्यात्॥ अनन्तकोऽपि अत इति तकारसादिह न भवति सख्या पत्या॥

२ ङिरौदित्यभेदनयेन निर्देशोऽसन्देहार्थः। ङेरिति षष्ठीनिर्देशे ङेसिति चतुर्थ्येकवचनस्यायं विधिरुत सप्तम्येकवचनस्येति सन्दिह्येत तदसन्देहार्थं ङिरौदिति निर्देशः। तकारश्चासन्देहार्थः स्वरूपनिर्देशार्थो वा॥

३ ऋदिति तकारो दीर्घनिवृत्त्यर्थः। तथा च इति गौरी सखी पङ्गू श्वश्रूः। २८१ इति ङीप्रत्ययान्तो मा भूदिति तकारग्रहणम्॥ अथवैक हि सखीदिति तकारो ज्ञापयति प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्। एकदेशविकृतमनन्यवदिति च॥ तेन पयस्पात्री पयस्कुम्भीत्यादि भवति॥ सोरिति किं उशनसौ॥

सखायः ॥ हे सखे । हे सखायौ । हे सखायः ॥ सखायं । सखायौ । सखीन् ॥ सख्या । सखिभ्यां सखिभिः ॥ सख्ये । सखिभ्यां । सखिभ्यः । सख्युः । सखिभ्यां । सखिभ्यः ॥ सख्युः । सख्योः । सखीनां ॥ सख्यौ । सख्योः । सखिषु ॥ त्रिशब्दस्य बह्वर्थवाचित्वात्ततो बहुवचनान्येव ॥ त्रयः त्रीन् ॥ त्रिभिः ॥ त्रिभ्यः ॥ त्रिभ्यः ॥ आमि ॥

**१६२ त्रेस्त्रयः** ।१।२।३५। त्रिशब्दस्य त्रयो भवति आमि परे ॥ त्र-याणां ॥ त्रिषु ॥ कतिशब्दाज्जसादयः ॥

**१६३ डतिष्णां सङ्ख्यानां जश्शसः** ।१।२।१५२। डत्यन्तात् षकारनकारान्ताच्च सङ्ख्यावाचिनः परयोः स्वसम्बन्धिनोर्जश्शसोः श्लुर्भवति। अन्यत्राविशेषः । कति ॥ कति ॥ कतिभिः ॥ कतिभ्यः ॥ कतिभ्यः ॥ कतीनां ॥ कतिषु ॥ एवं यतिततिशब्दौ ॥ ईकारान्तो ग्रामणीशब्दः ततः स्वादयः सो रिविसर्जनीयौ ॥ अजादौ सुपि ॥

**१६४ प्रत्येऽसुधीणः** ।१।२।४०। तिना कारकेण च समस्तस्यानेकाचश्च सुधी इण् इत्येतद्वर्जितस्य धातोरतत्संयोगात्परस्येवर्णस्य यञ् भवति अजादौ प्रत्यये परे ॥ इयपवादः ॥

**१६५ न्यंशादाम्** ।१।२।२५। णीञः अंशादवयवात् याटः अटश्च

---

१ का सङ्ख्या मानमेषां ते कति । किमश्च सङ्ख्यायां डतिश्च । इति सूत्रेण डतिप्रत्ययः ॥

२ या सङ्ख्या मानमेषां ते यति । सा सङ्ख्या मानमेषां ते तति ॥

३ पृथग्योगकरणादसुधीण इति प्रतिषेधाच्च इवर्णस्यैवायं विधिः । यदि द्वयोरपि स्यात्तर्हि प्रत्यय इति वचनं व्यर्थं स्यात् (यद्ययं यञादेशरूपो विधिः स्थानिनिमित्तयोर्द्वयोरपि स्यात्तर्हि प्रत्यये इति प्रत्ययस्य परत्ववचनं व्यर्थं स्यात् इति भावः) यद्युवर्णस्यायं विधिस्तर्हि सुधीणोः प्रतिषेधो व्यर्थः स्यादप्राप्तेः ॥ सुष्ठु ध्यायति धरति वा सुधीः । अस्मादेव निपातनाद्धीभावः ॥

४ ग्रामणीरित्यत्र णिञ् प्रापणे इति धातुः स्वकृतास्युक्तम् । ४८० इति सूत्रेण स्वकारकेण समस्तः । तथा च ग्रामं नयतीति ग्रामणीरिति विग्रहः ॥ तत्र न्यंशादित्यस्य प्रवृत्तिः । नीश्च अंशश्च न्यंशमिति द्वन्द्वैकवद्भावः तस्मात् न्यंशात् । अंशिनमन्तरेणांशो नास्ति अंशी कः डिप्रत्ययः । तस्य अंशः कः याट् आट् च । तथाच णिञ्धातोश्च परः अंशाच्च परो ङिराम् भवतीत्यर्थः । ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिष्वित्यमरः ॥

परो ङिराम्भवति॥ यञ्। ग्रामणीः। ग्रामण्यौ। ग्रामण्यः॥ आमन्त्रणेऽप्येवं ग्रामण्यं। ग्रमण्यौ। ग्रामण्यः॥ ग्रामण्या। ग्रामणीभ्यां। ग्रमणीभिः॥ ग्रामण्ये। ग्रामणीभ्यां। ग्रामणीभ्यः॥ ग्रामण्यः। ग्रामणीभ्यां। ग्रामणीभ्यः॥ ग्रामण्यः। ग्रामण्योः। ग्रामण्यां॥ ग्रामण्यां। ग्रामण्योः। ग्रामणीषु॥ एवमग्रणीसेनानीप्रभृतयः। स्त्रियामप्येवं॥ विक्रीशब्दात्स्वादयः। अतत्संयोगादिति वचनात् न यञ्। इय्। विक्रीः। विक्रियौ। विक्रियः॥ इत्यादि। एवं यवक्रीशब्दः॥ सुधीशब्दात् स्वादयः सो रिविसर्जनीयौ। अजादौ असुधीण इति निषेधान्न यञ्॥

१६६ भ्रूहल्श्नोर्श्वेयुवौ।१।२।४१। भ्रुवः हलः परस्य श्नोर्धातोश्चेवर्णोवर्णयोः क्रमेण इयुवौ भवतः अजादौ प्रत्यये परे॥ सुधीः। सुधियौ। सुधियः॥ आमन्त्रणेऽप्येवं। सुधियं। सुधियौ। सुधियः॥ सुधिया। सुधीभ्यां। सुधीभिः॥ सुधिये। सुधीभ्यां। सुधीभ्यः॥ सुधियः। सुधीभ्यां। सुधीभ्यः॥ सुधियः। सुधियोः। सुधियां। सुधियि। सुधियोः। सुधीषु॥ एवं नीसुश्र्यादयः। आमि नामाम इति वा नाम्। सुश्रियां सुश्रीणाम्॥ उकारान्तः पुलिँङ्गो गुरुशब्दः ततः स्वादयः रविशब्दवत्प्रक्रिया गुत्वादि। गुरुः गुरू गुरवः। हे गुरो हे गुरू हे गुरवः। गुरुं गुरू गुरून्। गुरुणा गुरुभ्यां गुरुभिः। गुरवे गुरुभ्यां गुरुभ्यः। गुरोः गुरुभ्यां गुरुभ्यः। गुरोः गुर्वोः गुरूणां। गुरौ गुर्वोः गुरुषु॥ एवं भानुबाहुकारुमेरुसाधुप्रभृतयः॥ ऊकारान्तः पुलिँङ्गः खलपूशब्दः। ततः स्वादयः। सो रिविसर्जनीयौ। अजादौ॥

---

१ नीशब्दस्य सप्तम्येकवचनं निथि इति सिद्धम्। न्यंशादामिति सूत्रेण ङिप्रत्ययस्य आम् न भवति। कस्मादिति चेत् क्रमसूत्रे न्यंशादामिति पूर्वं सूत्रं भ्रूहल्श्नोर्श्वेयुवौ इति परसूत्रम्। तथाच परे कार्ये कर्त्तव्ये पूर्वमसद्भवति इत्यामो निषेधो ज्ञातव्यः।

२ ध्वनिमञ्जर्याम्। गुरुस्तु निष्पतौ श्रेष्ठे गुरुः पितरि दुर्भगे॥ उपाध्यायोऽध्यापकः स्यात्स्याभिषेकादिकृद्गुरुः॥ १॥

**१९७ धातोस्तिकारकसमस्तानेकाचोऽतत्संयोगात्परयोः** ।१।२।३८। तिना कारकेण च समस्तस्यानेकाचश्च धातोरतत्संयोगात्परयोरिवर्णोवर्णयोर्यन् भवत्यजादौ सुपि परे ॥ आसन्नः । खलपूः । खलप्वौ । खलप्वः ॥ हे खलपूः । हे खलप्वौ । हे खलप्वः ॥ खलप्वं । खलप्वौ । खलप्वः ॥ खलप्वा । खलपूभ्यां । खलपूभिः ॥ खलप्वे । खलपूभ्यां । खलपूभ्यः ॥ खलप्वः । खलपूभ्यां । खलपूभ्यः ॥ खलप्वः । खलप्वोः । खलप्वां ॥ खलप्वि । खलप्वोः । खलपूषु ॥ एवं यवलूआलूकाण्डलूप्रभृतयः ॥ कटमूशब्दात्स्वादयः ॥ संयोगपरत्वान्न यन् । उव् । कटमूः कटमुवौ कटमुवः ॥ स्वयंभूशब्दात् स्वादयः । सो रिविसर्जनीयौ ॥ अजादौ ॥

**१९८ दृन्पुनःकरवर्षाभिर्भुवः** ।१।२।३९। दृन् पुनर् कर वर्षा इत्येतैरेव समस्तस्य भुवो धातोः उवर्णस्य यन् भवति अजादौ सुपि परे । नान्यैरिति नियमादत्र यन् न भवति । भ्रूहलित्यादिना उव् ॥ स्वयंभूः । स्वयंभुवौ । स्वयंभुवः ॥ आमन्त्रणेऽप्येवं ॥ स्वयंभुवं । स्वयंभुवौ । स्वयंभुवः ॥ स्वयंभुवा । स्वयंभूभ्यां । स्वयंभूभिः ॥ स्वयंभुवे । स्वयम्भूभ्यां । स्वयम्भूभ्यः ॥ स्वयम्भुवः । स्वयम्भूभ्यां । स्वयम्भूभ्यः ॥ स्वयम्भुवः । स्वयम्भुवोः । स्वयम्भुवां ॥ स्वयम्भुवि । स्वयम्भुवोः । स्वयम्भूषु ॥ एवं

---

१ क्रियार्थो धातुस्तस्य ॥ डाच्ध्वूर्येत्यादिसूत्रविहितः सञ्ज्ञाप्राप्तिः । क्रियानिर्वर्तकं कारकं कर्मादि । तिश्च कारकं च तिकारके तिकारकाभ्यां समस्तास्तिकारकसमस्तः । समस्त इति प्रत्येकं संबध्यते तेन तिसमस्तः कारकसमस्त इति । अनेकोऽच् अचूप्रत्याहारगृहीतवर्णो यस्य सोऽनेकाच् । तिकारकसमस्तश्चानेकाच्चेति द्वन्द्वः । तस्य धातोरिति विशेष्यं प्रतिव्यक्ति सम्बध्यते तेन तिसमस्तस्य धातोः कारकसमस्तस्य धातोरनेकाचश्च धातोरिति । तस्य धातोः संयोगस्तत्संयोगः । न विद्यते तत्संयोगो यस्य सोऽतत्संयोगस्तस्मात् । इश्च उश्च युः तयोः योः । इति सूत्रव्युत्पत्तिः । तिकारकेति किं? लुवौ लुवः । परमलुवौ परमलुवः ॥ अत्र खलपूशब्दस्य परमलूशब्दस्य च को भेद इति न शङ्कनीयम् ॥ तत्र खलं पुनातीति खलपूरिति समासानन्तरं क्विप् । अत्र तु लुनातीतिति लूः परमश्चासौ लूश्च परमलूरिति क्विप्प्रयानन्तरं समासः । अतः कारकासमस्तत्वात्कारकसमस्तधातुत्वं नास्तीति भेदो ज्ञेयः ॥

विसूमित्रभूप्रतिभूआत्मभूस्वम्भूप्रभृतयः ॥ दृन्भूशब्दात्स्वादयः । दृन् पुनरिति वचनात् यन्नेव । दृन्भूः । दृन्भ्वौ । दृन्भ्वः ॥ एवं पुनर्भूकरभूवर्षाभूशब्दाः ॥ ऋकारान्तः पुल्लिङ्गः पितृशब्दः । ततः स्वादयः । ऋत्सखीत्यादिना सोर्डादेशः । अन्त्याजादिलुक् । अजादौ ॥

१६९ ङ्यौट्स्यृतोऽपदस्यार् ।१।२।१०२। अपदस्य ऋतोऽर्भवति ङौ औट्सु च परेषु ॥ एकामन्त्रणे न डान्लुगिति डानिषेधे ह्रस्वेत इति ऋत आसन्नोऽर् सुलुक ॥ शसि नन्तः पुंस इति ऋन् सलुक । टादौ यन् । ङसिङसोः ॥

१७० ङातो डुः ।१।२।१०३। अपदान्तादृतो ङसिङसोरतो डुर्भवति॥ ड इत् अन्त्याजादिलुगर्थः । आमो नम्ह्रस्वाद्साट इति नाम् । दीर्घः ॥ ऋवर्णमध्ये रेफसद्भावात् अभिन्न इति नस्य णः । ङावर् शेषं पूर्ववत् । पिता । पितरौ । पितरः ॥ हे पितः । हे पितरौ । हे पितरः ॥ पितरं । पितरौ । पितॄन् ॥ पित्रा । पितृभ्यां । पितृभिः ॥ पित्रे । पितृभ्यां । पितृभ्यः ॥ पितुः । पितृभ्यां । पितृभ्यः ॥ पितुः । पित्रोः । पितॄणां ॥ पितरि । पित्रोः । पितृषु ॥ एवं भ्रातृजामातृप्रभृतयः ॥ तृप्रत्ययान्तस्य नेतृशब्दस्य भेदोऽस्ति । ततः स्वादयः सोर्डादि । ङ्यौस्वरादेशे कृते ॥

१७१ अप्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्त्रद्दीर्घः ।१।

१ सुऔ इत्यौकारादारभ्य अम् औटिति टकारेण सह प्रत्याहारः औटिति ।

२ ङसिङसोरत् ङात् । अथवा ङकारानुबन्धेनोपलक्षितोऽत् ङात् ॥ तस्य ङातः । अथवा ङा इतीत्थम्भूतलक्षणे तृतीया तथाच ङा ङकारेणोपलक्षितो योऽकारस्तस्येत्यर्थः । ङकारेणोपलक्षितोऽकार इहानयोरेवेत्याह ङसिङसोरिति ॥ अत इति किं? मात्रे पित्रे । ऋतोऽपदात् इति पूर्वसूत्रानुवर्तनमेव नान्यत् । तर्हि तत्र षष्ठ्यन्तग्रहणमत्र पञ्चम्यन्तग्रहणं विरुध्दमिति न शङ्कनीयम् । अर्थवशाद्विभक्तिविपरिणाम इति क्वचिद्भवत्येव ॥

३ ऋकारोच्चारणकाले आदावकारप्रतीतिर्मध्ये रेफप्रतीतिरन्ते उकारप्रतीतिः । अतः कारणान्मध्ये रेफोऽस्त्येव ॥

४ तृ इति अर्थवतः प्रत्ययस्य ग्रहणमिति नप्त्रादीनामव्युत्पन्नानां प्रातिपदिकानां सञ्ज्ञाशब्दानामग्रहणमतस्तेषां पृथगुपादानम् । इदमेव ज्ञापकं अर्थवद्ग्रहणे नानर्थकस्येति परिभाषायाः ॥

२।१३३। तृप्रत्ययान्तस्याप्नादीनां चाकारो दीर्घो भवति शावनपुंसके सुटि परे न चैकामन्त्रणे ॥ अन्यत्र पितृशब्दवत्प्रक्रिया । नेता । नेतारौ । नेतारः हे नेतः । हे नेतारौ । हे नेतारः ॥ नेतारं । नेतारौ । नेतॄन् । इत्यादि ॥ एवं नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृशब्दाः भेत्तृकर्तृप्रभृतस्यतृप्रत्ययान्ताश्च नेयाः॥ नृशब्दस्यामि विशेषः ॥

**१७२ नुर्वा** ।१।२।१४१। नृशब्दस्य नामि परे पूर्वोऽग्दीर्घो वा भवति ॥ ना । नरौ । नरः ॥ नृणां नॄणां ॥ शेषं पितृशब्दवत् ॥ क्रोष्टुशब्दात् स्वादयः ॥

**१७३ क्रोष्टोः क्रोष्टृ** ।१।२।१३१। क्रोष्टुशब्दस्य क्रोष्टृ इति तृप्रत्ययान्त आदेशो भवति श्यनप्सुटि परे नैकामन्त्रणे ॥

**१७४ वाऽच्यापि** ।१।२।१३२। क्रोष्टुशब्दस्य क्रोष्टृ इत्यादेशो वा भवति अजादावापि परे ॥ अन्यत्र कारुशब्दवत् । आमि नित्यत्वान्नामि न क्रोष्टृभावः । क्रोष्टा । क्रोष्टारौ । क्रोष्टारः ॥ हे क्रोष्टो । हे क्रोष्टारौ । हे क्रोष्टारः ॥ क्रोष्टारं । क्रोष्टारौ । क्रोष्टून् ॥ क्रोष्ट्रा । क्रोष्टुना । क्रोष्टुभ्यां । क्रोष्टुभिः ॥ क्रोष्ट्रे क्रोष्टवे । क्रोष्टुभ्यां । क्रोष्टुभ्यः ॥ क्रोष्टुः क्रोष्टोः । क्रोष्टुभ्यां । क्रोष्टुभ्यः ॥ क्रोष्टुः क्रोष्टोः । क्रोष्ट्रोः क्रोष्ट्वोः । क्रोष्टूनां ॥ क्रोष्टरि क्रोष्टौ । क्रोष्ट्रोः क्रोष्ट्वोः । क्रोष्टुषु ॥ ऋॠकारलकारॡकारान्ता अप्रसिद्धाः ॥ एकारान्तः परमेशब्दः ततः स्वादयः । अजादौ अय् । एकामन्त्रणे एङ् सोश्च लुक् । ङसिङसोरेङो लुक् । परमेः । परमयौ । परमयः । इत्यादि ॥ एवमतिहेप्रभृतयः ॥ ओकारान्तो गोशब्दः ततः स्वादयः ॥

**१७५ ओतो औ** ।१।२।११७। ओतः औद्भवति श्यनप्सुटि परे॥ अम्शसोः॥

१ टा इति तृतीयैकवचनस्याकारेण सह सुबिति सप्तमीबहुवचनस्य पकारस्य प्रत्याहारे कृते आप् सञ्ज्ञा भवति॥ अचीति किं? क्रोष्टुभ्याम् । क्रोष्टुभ्यः । आपीति किं? क्रोष्टून् ॥

२ परं मयते प्रतिदधातीति परमेः । अथवा परमा ईर्लक्ष्मीर्यस्यासौ परमेः । परमश्चासौ इश्चेति वा इः कामः ॥

३ औ इत्यविभक्तिको निर्देशः । ओत इति किं? चित्रगुः । तकारो निर्देशार्थः । लाक्षणिकत्वादिह न भवति हे चित्रगो हे चित्रगवः ॥

**१७६ डाम्शसः** ।१।२।११८। ओतः परयोरम्शसोरादेर्डादेशो भवति ॥ ड इत् अन्त्याजादिलुगर्थः । टादौ सन्धिः । ङसिङसोरत एङो लुगिति लुक् । गौः । गावौ । गावः ॥ हे गौः । हे गावौ । हे गावः ॥ गां । गावौ । गाः ॥ गवा । गोभ्यां । गोभिः ॥ गवे । गोभ्यां गोभ्यः ॥ गोः । गोभ्यां । गोभ्यः ॥ गोः । गवोः । गवां ॥ गवि । गवोः । गोषु ॥ ऐकारान्तो रैशब्दः । ततः स्वादयः । "वाष्ट्र आः ।२४५। "इत्यधिकृत्य ॥

**१७७ रायः स्भि** ।१।२।२२०। रायः आद्भवति सभादौ सुपि परे ॥ स च षष्ठ्यास्स्थानेऽन्तेऽलः इत्यैतो भवति। अन्यत्राय् । राः । रायौ। रायः ॥ हे राः । हे रायौ। हे रायः॥ रायं । रायौ। रायः ॥ राया । राभ्यां। राभिः ॥ राये । राभ्यां । राभ्यः ॥ रायः। राभ्यां । राभ्यः ॥ रायः । रायोः। रायां॥ रायि । रायोः । रासु ॥ औकारान्तः पुलिँङ्गो ग्लौशब्दः । ततः स्वादयः अच्याव् । ग्लौः। ग्लावौ । ग्लावः ॥ हे ग्लौः । हे ग्लावौ । हे ग्लावः ॥ ग्लावं । ग्लावौ । ग्लावः ॥ ग्लावा । ग्लौभ्यां। ग्लौभिः ॥ ग्लावे । ग्लौभ्यां । ग्लौभ्यः ॥ ग्लावः । ग्लौभ्यां । ग्लौभ्यः ॥ ग्लावः । ग्लावोः ॥ ग्लावां ॥ ग्लावि । ग्लावोः । ग्लौषु ॥

॥ इत्यजन्ताः पुलिँङ्गास्समाप्ताः ॥

## ॥ अथाजन्तास्स्त्रीलिङ्गा उच्यन्ते ॥

तेष्वकारान्तस्याभावादाकारान्तस्त्रीलिङ्गो दयाशब्दः । दय इति स्थिते । "त्रिचतुरः स्त्रियां तिसृचतसृ १९२"। "ऋच्याई ।१।३।११।" इत्यधिकृत्य ॥

---

१ पादन्ताच्छब्दादृचि स्त्रियामाड्प्रत्ययो भवति ॥ त्रिपदा चतुष्पदा । परत्वादन्त्याजादिलुचं बाधित्वा पद्भावः । इकार उच्चारणार्थः । अन्यत्र द्विपदी देवदत्ता ।

**१७८ अजाद्यताम्** ।१।३।१३। अजादेरदन्ताच्च स्त्रियामाड्प्रत्ययो भवति ॥ ड इत् अन्त्याजादिलुगर्थः । ततः पूर्ववत् स्वादयः हल्ङ्याडिति सोर्लुक् । "नपोऽचो ह्रस्वः । २१५"

**१७९ आङश्चौतो गीः** ।१।२।१९। नपुंसकस्याडन्तस्य च सम्बन्धिनः औतः सुपो गीर्भवति ॥ ग इत् गित इति सन्धिप्रतिषेधार्थः । एङ् । जसि दीर्घादि । एकामन्त्रणे ॥

**१८० एदाङः** ।१।२।१२४। आङः एद्भवति एकामन्त्रणे सौ परे सोश्च लुक् ॥ औजसोः प्राग्वत् । अमि मत्वलुचौ । औटि पूर्ववत् । शसि । "दीर्घः । १३" इत्यधिकृत्य ॥

**१८१ शस्यक्** ।१।१।७८। अर्कस्साचोऽग्दीर्घो भवति शसि परे ॥ सस्य रिविसर्जनीयौ । टायां ॥

**१८२ टौस्येत्** । १।२।२१। आङः एद्भवति टौसोः परतः ॥ अय् । हलादावविशेषः । ङिति ॥

**१८३ ङितो याट्** ।१।२।२०। आङो ङितस्सुपो याडागमो भवति ॥ ट इत् देशविध्यर्थः ॥

**१८४ टिदादिः** ।१।१।५३। टिद्यस्य विधीयते तस्यादिर्भवति ॥ ऐच् ।

---

१ अज अश्व एलक कटक कोकिल मूषिक बाल होड पाक शकुर वत्स मन्द दीतलाश कन्य पूर्वापहण अपरापहण पर प्रहाण त्रिफल कुञ्च उष्णिहा देवपिशा घृत् इत्यजादिर्गणः ॥ अत्र अजादे अताम् इति पदच्छेदः । अतः कारीषगन्ध्या खट्वा देवदत्ता । तकारः किं क्षीरपा कन्या । षष्ठ्या तत्सम्बन्धिन्यामेव स्त्रियां भवति नान्यथा पञ्चानामजानां समाहारः पञ्चाजी । इदमेव ज्ञापकं अतस्तत्सम्बन्धिन्यामेव प्रत्यय इति ॥ बहुवचनं षष्ठ्यभिव्यक्त्यर्थम् ॥ अतामित्येव सिध्दे पुनरजादिग्रहणं बाधकबाधनार्थम् । अनकारान्तार्थोभयार्थमजादिग्रहणम् ॥ अजेत्यादौ " जातेरस्त्रीयशूद्रात् । २२६ " इति सूत्रेण प्राप्तस्य ङयो बाधा । बाला कन्या इत्यादौ " वयस्यनन्त्ये । २११ " इति सूत्रेण प्राप्तस्य ङयो बाधा । कुञ्चा उष्णिहा इत्यत्राप्राप्ताड् तथापाठादेव च अन्त्याजादेर्लोपाभावः ॥ २ द्विकारमग्रहणं किमिति चेत् परे विद्यमानाका सहितस्य पूर्वाकस्तदासन्नो दीर्घोऽम् भवतीति ज्ञापनार्थम् ।

ङसिङसोर्दीर्घौ। ओस्येदयौ। आमो नमूहूस्वाट्साट इति नाम्। ङेर्याटि न्येशादाम् इत्यां दीर्घः। ओसि प्राग्वत्। दया दये दयाः। हे दये हे दये हे दयाः। दयां दये दयाः। दयया दयाभ्यां दयाभिः। दयायै दयाभ्यां दयाभ्यः। दयायाः दयाभ्यां दयाभ्यः। दयायाः दययोः दयानां। दयायां दययोः दयासु॥ एवं जायामायाजृम्भारम्भाताराहारामालाखट्वाप्रभृतयः॥

अम्बाशब्दस्य एकामन्त्रणे॥

**१८५ ड्यचोऽम्बार्थस्य**।१।२।१२३। अम्बार्थस्य ड्यच आङन्तस्य ह्रस्वो भवत्येकामन्त्रणे सोश्च लुक्॥ अन्यत्र दयाशब्दवत्। अम्बा अम्बे अम्बाः। हे अम्ब हे अम्बे हे अम्बाः। इत्यादि। एवं अक्काऽल्लादयः[1]। ड्यच इति किं? हे अम्बिके इत्यादि॥ जराशब्दस्याजादौ सुपि विशेषोऽस्ति॥

**१८६ जराया ङसिन्द्रस्याचि**।१।२।२७। जराशब्दस्य ङस् वा भवति अजादौ सुपि परे॥ ङ इत् अन्त्यादेशार्थः पक्षे दयाशब्दवत्। जरा। जरसौ जरे। जरसः जराः॥ हे जरे। हे जरसौ हे जरे। हे जरसः हे जराः॥ जरसं जरां। जरसौ जरे। जरसः जराः॥ जरसा जरया। जराभ्यां। जराभिः॥ जरसे जरायै। जराभ्यां। जराभ्यः॥ जरसः जरायाः। जराभ्यां। जराभ्यः॥ जरसः जरायाः। जरसोः जरयोः। जरसां जराणां। जरसि जरायां। जरसोः जरयोः। जरासु॥ सर्वशब्दादाडि ततः स्वादयः। ङिति याटि॥

**१८७ ङस्याँड्यस्य**।१।२।१७५। अवर्णान्तस्य सर्वादेर्ङस् भवति याटि परे॥ ङ इत् अन्त्यादेशार्थः। आमः साम्। अन्यत्र दयाशब्दवत्।

---

१ आदिशब्देन अम्बा अत्ता शब्दयोर्ग्रहणम्॥

२ एकदेशविकृतस्यानन्यत्वादतिजराशब्दस्यापि ग्रहणम्। इन्द्रस्य इन्द्राचार्यस्य मतेन। अन्येषां मतेन न भवति। अचीति किं? जराभ्यां जराभिः। सुपीति किं जराम्रं। जारेयः॥

३ याटि तत्सम्बन्धिनि याडादौ सुपीत्यर्थः। इह न भवति सर्वस्मै। तत्सम्बन्धिनीति विज्ञानादिह न भवति प्रियसर्वायै। अस्येत्युत्तरार्थम्॥ अस्येति किं? भवती भवतीनाम्॥

सर्वा सर्वे सर्वा ॥ हे सर्वे हे सर्वे हे सर्वाः । सर्वां सर्वे सर्वाः । सर्वया सर्वाभ्यां सर्वाभिः । सर्वस्यै सर्वाभ्यां सर्वाभ्यः । सर्वस्याः सर्वाभ्यां सर्वाभ्यः । सर्वस्याः सर्वयोः सर्वासां । सर्वस्यां सर्वयोः सर्वासु ॥ एवं विश्वादयः ॥ पूर्वादीनामदिदादौ सुपि । पक्षे ङस् अन्यत्र दयाशब्दवत् । पूर्वस्याः पूर्वायाः ॥ त्यद्शब्दस्यात्वाल्लुचोराडि कृते ततः स्वादयः । सौ तोऽष्टानामिति तस्य सः । शेषं सर्वाशब्दवत् । स्या त्ये त्याः । इत्यादि ॥ तद्शब्दस्य । सा ते ताः । तां ते ताः । तया ताभ्यां ताभिः । तस्यै ताभ्यां ताभ्यः । तस्याः ताभ्यां ताभ्यः । तस्याः तयोः तासां । तस्यां तयोः तासु ॥ एवं यच्छब्दस्य । या ये याः । इत्यादि ॥ अदस्शब्दात् स्वादौ सौ पुंवत् । अन्यत्रात्वाल्लुचोराडि कार्यांतरे च कृते पश्चान्मत्वगुत्वे । षत्वविधौ प्रागेव गुत्वं शेषं सर्वाशब्दवत् । असौ अमू अमूः । अमूम् अमू अमूः । अमुया अमूभ्यां अमूभिः । अमुष्यै अमूभ्यां अमूभ्यः । अमुष्याः अमूभ्यां अमुभ्यः । अमुष्याः अमुयोः अमूषां । अमुष्यां अमुयोः अमूषु ॥ इदमः सौ ॥

१८८ इय् ।१।२।२११। इदमः इद्रूपस्य इय् भवति सौ परे ॥ सुलुक् । अन्यत्रात्वाल्लुचोराडि दस्य मः गीर्त्वादि । टौसोरने आडेत्वादि । सभयादौ सुप्यस्याड् । ङिति आडि याटि च अशि च कृते पुनर्ङस् । शेषं प्राग्वत् । इयम् इमे इमाः । इमाम् इमे इमाः । अनया आभ्यां आभिः । अस्यै आभ्याम् आभ्यः । अस्याः आभ्याम् आभ्यः । अस्याः अनयोः आसाम् । अस्याम् अनयोः आसु ॥ एतद्शब्दस्य सौ तस्य सः षत्वं च । शेषं तच्छब्दवत् अन्यत्राविशेषः । एषा एते एताः । इत्यादि ॥ अन्वादेशे । एनाम् एने एनाः । एनया । एनयोः । एनयोः ॥ ऐकश-

१ तृतीयादौ टौस्येदित्यादिकार्यम् ॥

२ असत्वे सत्ययादेशः पुनर्गुः । प्राक् मत्वं अनन्तरं आड् अन्त्याकारलुक् पश्चादाडो द्विमात्रको गुः ॥

३ पारिशेष्यात्स्त्रियामयमादेशः । नपि तु नित्यत्वात्प्रथममेव लुग्भवति ॥

४ आदिशब्दादेत्वादि भवति ॥

५ कतिपयवाचिन एकशब्दस्य द्विवचनादयो भवन्ति ॥

ब्दस्य। एका एके एकाः। इत्यादि ॥ द्विशब्दस्य अत्वाङ्गीत्वादौ। द्वे। द्वे। द्वाभ्यां। द्वाभ्यां। द्वाभ्यां। द्वयोः। द्वयोः ॥ किमः कादेशे आङ्। शेषं तच्छब्दवत्। का के काः। इत्यादि ॥ द्वितीयाशब्दस्य सर्वादित्वपक्षे ङस् अन्यत्र सर्वत्र दयाशब्दवत्। द्वितीया द्वितीये द्वितीयाः। इत्यादि। ङिति द्वितीयस्यै द्वितीयायै। द्वितीयस्याः द्वितीयायाः। द्वितीयस्याः द्वितीयायाः। द्वितीयस्यां द्वितीयायां। सुगमं शेषम्। एवं तृतीयाशब्दः ॥

**१८९ विदिक् च** ।१।२।१७४। विदिग्वाचि शब्दरूपं सर्वादि वा भवति ॥ उत्तरपूर्वस्यै उत्तरपूर्वायै। उत्तरपूर्वासाम् उत्तरपूर्वाणाम्। एवं दक्षिणपूर्वादयः ॥ नासिकाशब्दात् स्वादयः सुटि दयाशब्दवत्। असुटि पद्दन्नित्यादिना वा नसादेशः। तस्मिन् नसादेशस्य वलादौ पदत्वाद्दित्वादि। नासिका नासिके नासिकाः। इत्यादि। शसादौ। नसः नासिकाः। नसा नासिकया। नोभ्यां नासिकाभ्यां। नोभिः नासिकाभिः ॥ नसे नासिकायै। नोभ्यां नासिकाभ्यां। नोभ्यः नासिकाभ्यः ॥ नसः नासिकायाः। नोभ्यां नासिकाभ्यां। नोभ्यः नासिकाभ्यः ॥ नसः नासिकायाः। नसोः नासिकयोः। नसां नासिकानां ॥ नसि नासिकायां। नसोः नासिकयोः। नस्सु नःसु नासिकासु ॥ निशाशब्दात् स्वादयः। सुटि दयाशब्दवत्। असुटि पद्दन्नित्यादिना वा निशित्यादेशः। तस्य वलादौ पदत्वे ॥

**१९० व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशः षः** ।१।२।९०। व्रश्चादीनां चवर्गस्य छकारशकारयोश्च षकारो भवति पदान्ते जलि च परे॥ इति शस्य षकारः प्राप्तः चोः कुरिति कुत्वं च अधातुत्वान्न भवतः। जलो जशिति शस्य जः। सुपि जस्त्वे श्चुत्वेन सस्य शः। शश्छोऽमीति वा छत्वं चर्त्वे च। अन्यत्र दयाशब्दवत्। निशा निशे निशाः। इत्यादि। शसादौ निशः निशाः ॥ निशा निशया। निज्भ्यां निशाभ्यां। निज्भिः निशाभिः ॥ निशे निशायै। निज्भ्यां निशाभ्यां। निज्भ्यः निशाभ्यः ॥ निशः निशायाः

---

१ चकारो वेत्यस्यानुकर्षणार्थः। नानुक्तसमुच्चयार्थः। "नव पूर्वा वादौ।" ।१।२।१७२। इत्यस्माद्वाऽनुवर्तते। उत्तरत्र नानुवर्तते ॥

निड्भ्यां निशाभ्यां । निड्भ्यः निशाभ्यः ॥ निशः निशायाः । निशोः निश-योः । निशां निशानां ॥ निशि निशायां । निशोः निशयोः । निच्छु निट्सु निशासु ॥ इकारान्तस्त्रीलिङ्गो रुचिशब्दः ततः स्वादयः सुटि रविशब्दवत् । शसि शस्यगिति दीर्घः । असीति निषेधात् टाया न नाभावः । यञ् । ङिति । " इदुतो गिग्वैतोऽस्त्वेः ।१४९। " इत्यधिकृत्य ॥

**१९१ स्त्रिया वाट्** ।१।२।२९। स्त्रीलिङ्गादिकारान्तादुकारान्ताच्च परस्य ङितः सुपः आड् भवति ॥ ट इत् आदिविध्यर्थः ऐजादि । ङेराम् आडभावे रविशब्दवत् । रुचिः रुची रुचयः । हे रुचे हे रुची हे रुचयः । रुचिं रुची रुचीः । रुच्या रुचिभ्यां रुचिभिः । रुच्यै रुचये रुचिभ्यां रुचिभ्यः । रुच्याः रुचेः रुचिभ्यां रुचिभ्यः । रुच्याः रुचेः रुच्योः रुचीनां । रुच्यां रुचौ रुच्योः रुचिषु ॥ एवं मतिकृतियुवतिबुद्धिसिद्धिप्रभृतयः ॥ विंशत्यादयः सङ्ख्येये एकवचनान्ता एव ततः स्वादयः । रुचिशब्दवत्प्रक्रिया । विंशतिः । हे विंशते । विंशतिं । विंशत्या । विंशत्यै विंशतये । विंशत्याः विंशतेः । विंशत्याः विंशतेः । विंशत्यां विंशतौ । एवं षष्टिसप्ततिअशीतिनवतिशब्दाः ॥ सङ्ख्यानवाचित्वे तु द्विवचनबहुवचनान्ता अपि भवन्ति । द्वे विंशती । बहवो विंशतयः ॥ त्रिशब्दात् जसादयः ॥

**१९२ त्रिचतुरः स्त्रियां तिसृचतसृ** ।१।२।२२०। स्त्रीलिङ्गे त्रिचतुरोः तिसृचतसृ इति क्रमेण आदेशौ भवतः सुपि परे ॥ इति त्रिशब्दस्य तिसृ ॥

**१९३ रोऽनपोऽच्यृः** ।१।२।२२२। तिसृ चतसृ इत्येतयोः ऋका-

---

१ स्त्रिया इति पञ्चमी न षष्ठी । पञ्चम्या च परत्वमात्रं गृह्यते न स्त्र्यर्थसम्बन्धि-त्वमन्यसम्बन्धित्वं वा सुपो विशेषः । ततोभयत्रापि भवति विशेषानाश्रयणात् । विशेषाश्रयणे तु विशेषान्तरे न स्यादित्याख्यायते ॥ स्त्रिया इति किं? मुनये साधवे ॥

२ उद्देश्यविधेययोः समसङ्ख्याकत्वे यथासङ्ख्यं विधेयान्वयो भवति ॥

३ तत्सम्बन्धिन्यन्यसम्बन्धिनि वा सुपि परे अयमादेशो भवति ॥ तत्सम्बन्धिनि तिस्रः चतस्रः । अन्यसम्बन्धिनि प्रियतिस्रः प्रियचतस्रः । अनप इति किं? प्रियतिसृणि ॥ अचीति किं? तिसृभिः चतसृभिः ॥

रस्य रेफादेशो भवति अजादौ सुपि परे न नपि ॥ आमो नामि अतिसृ-चतुष्य इति वचनान्न दीर्घः । तिस्रः । हे तिस्रः । तिस्रः । तिसृभिः । तिसृ-भ्यः । तिसृभ्यः । तिसृणां । तिसृषु ॥ ईकारान्तस्त्रीलिङ्गो लक्ष्मीशब्दः । ततः स्वादयः । रिविसर्जनीयौ । अजादौ यञ् । एकामन्त्रणे नित्यादित्वात् ह्रस्वः सुलुक । अमि मत्वलुचौ । शसि दीर्घः । ङिति " स्त्रिया वाद् ।१९१। " इत्याधिकृत्य ॥

**१९४ ङ्योऽपुंसः** ।१।२।३०। अपुंसि स्त्रियां वर्तमानादीकारान्तादू-कारान्ताच्च परस्य ङितः सुपः आट् भवति नित्यम् ॥ ट इत् आदिविध्य र्थः । ऐजादि । सम्भवदाट्त्वादामो नामि णत्वम् । आटि ङेराम् । लक्ष्मीः लक्ष्म्यौ लक्ष्म्यः । हे लक्ष्मि हे लक्ष्म्यौ हे लक्ष्म्यः । लक्ष्मीं लक्ष्म्यौ लक्ष्मीः । लक्ष्म्या लक्ष्मीभ्यां लक्ष्मीभिः । लक्ष्म्यै लक्ष्मीभ्यां लक्ष्मीभ्यः । लक्ष्म्याः लक्ष्मीभ्यां लक्ष्मीभ्यः । लक्ष्म्याः लक्ष्म्योः लक्ष्मीणां । लक्ष्म्यां लक्ष्म्योः लक्ष्मीषु ॥ एवं तन्त्रीतन्द्रीतरीदरीप्रभृतयः ॥ ङीप्रत्ययान्तस्य गौरीशब्दस्य सौ भेदोऽस्ति । हल्ङ्याडिति सोर्लुक् । अन्यत्र लक्ष्मीशब्दवत् ॥ गौरी गौर्यौ गौर्यः । इत्यादि । एवं क्रोष्ट्रीराज्ञीभवतीभवन्तीपचन्तीप्राचीप्रतीचीउम-यीकार्तिकीचैत्रीदाक्षीकुमारीपत्नीसुमुखीत्रिलोकीरोहिणीअर्याणीगणकीहिमानी-भूमीगुर्वीपलिक्नीपिशङ्गीमयूरीसखीप्रभृतयो ङ्यन्ता नेयाः ॥ स्त्रीशब्दवत् स्वादयः हल्ङ्याडिति सोर्लुक् । अजादौ ॥

**१९५ स्त्रियाः** ।१।२।४२। स्त्रीशब्देवर्णस्येय् भवति अजादौ सुपि परे ॥

**१९६ वाम्शसि** ।१।२।४३। स्त्रीशब्दस्येवर्णस्येय् वा भवति अम्श-

---

१ नित्यमित्यनेनान्यसम्बन्धिनो वा भवतीत्यर्थः । नद्यै लक्ष्म्यै । अतिलक्ष्म्यै अति-चम्वै स्त्रियै पुरुषाय वा ॥

२ स्त्यतेस्त्यायतेस्तृणातेस्तनोतेर्वा औणादिकसूत्रेण त्रट् प्रत्ययो धातोश्च स्त्रकारादेशो निपात्यते । टित्वात् ङी । तृणाति स्वं च परं च दोषेणाच्छादयतीति स्त्री ॥

सोः परतः ॥ ङिति आट् । आमो नाम्[1] । ङेराम् । शेषं सुगमं । स्त्री स्त्रियौ स्त्रियः । हे स्त्रि हे स्त्रियौ हे स्त्रियः । स्त्रियं स्त्रीं स्त्रियौ स्त्रियः स्त्रीः । स्त्रिया स्त्रीभ्यां स्त्रीभिः । स्त्रियै स्त्रिभ्यां स्त्रीभ्यः । स्त्रियाः स्त्रीभ्यां स्त्रीभ्यः । स्त्रियाः स्त्रियोः स्त्रीणां । स्त्रियां स्त्रियोः स्त्रीषु ॥ श्रीशब्दात् स्वादयः । अङयन्तत्वात् सोर्न लुक् । अजादौ भ्रूहलितीय् । एकामन्त्रणे विकल्पिताट्त्वात् न ह्रस्वः । ङिति ॥

**१९७ वेयुवोऽस्त्रियाः** ।१।२।३१। इयुवादेशभावीकारोकारान्ताभ्यां स्त्रीलिङ्गाभ्यां परस्य ङितस्सुप आड्वा भवति न स्त्रीशब्दस्य ॥ पुनरियु॥

**१९८ नामामः** ।१।२।३२। इयुवादेशभावीकारोकारान्ताभ्यां स्त्रीलिङ्गाभ्यां परस्यामो नाम् वा भवति न स्त्रीशब्दस्य[2] ॥ शेषं प्राग्वत् । श्रीः श्रियौ श्रियः । हे श्रीः हे श्रियौ हे श्रियः । श्रियं श्रियौ श्रियः । श्रिया श्रीभ्यां श्रीभिः । श्रियै श्रिये श्रीभ्यां श्रीभ्य । श्रियाः श्रियः श्रीभ्यां श्रीभ्यः ॥ श्रियाः श्रियः श्रियोः श्रीणां श्रियां । श्रियां श्रियि श्रियोः श्रीषु ॥ एवं धीनीप्रभृतयः ॥ उकारान्तस्त्रीलिङ्गो धेनुशब्दः । ततः स्वादयः । स्त्रिया वाट् । धेनुः धेनू धेनवः । हे धेनो हे धेनू हे धेनवः । धेनुं धेनू धेनूः । धेन्वा धेनुभ्यां धेनुभिः । धेन्वै धेनवे धेनुभ्यां धेनुभ्यः । धेन्वाः धेनोः धेनुभ्यां धेनुभ्यः । धेन्वाः धेनोः धेन्वोः धेनूनां । धेन्वां धेनौ धेन्वोः धेनुषु । एवं तनुरज्जुस्नायुऊरुकरेणुप्रभृतयः ॥ ऊकारान्तस्त्रीलिङ्गो जम्बूशब्दः ततः स्वादयः लक्ष्मीशब्दवत् । जम्बूः जम्ब्वौ जम्ब्वः । हे जम्बु हे जम्ब्वौ हे जम्ब्वः । जम्बूं जम्ब्वौ जम्बूः । जम्ब्वा जम्बूभ्यां जम्बूभिः । जम्ब्वै जम्बूभ्यां जम्बूभ्यः । जम्ब्वाः जम्बूभ्यां जम्बूभ्यः । जम्ब्वाः जम्ब्वोः

---

१ स्त्रीणामित्यत्र तु "नम् ह्रस्वात् साटः ।११९" इति सूत्रेण स्त्रीशब्दस्य साट्त्वादामः षष्ठीबहुवचनस्य स्थाने नित्यं नामित्ययमादेशो भवतीत्यमोघवृत्तावुक्तम् ॥

२ स्त्रीशब्दस्य न भवतीति किं? स्त्रीणां परमस्त्रीणां । अत्राप्यन्यसम्बन्धिन आमो नाम् वा भवतीत्यर्थः । श्रीणां श्रियां । सुश्रीणां सुश्रियां स्त्रीणां पुरुषाणां वेति । अत एव प्राक् पुंलिंगेषु सुश्रियां सुश्रीणामित्युदाहृतम् ॥

जम्बूनां । जम्ब्वां जम्ब्वोः जम्बूषु । एवं चमूवधूयवागूकद्रूप्रभृतयः ॥ भ्रूश-ब्दात् स्वादयः। अचि श्नुहल्त्युव् शेषं श्रीशब्दवत्। भ्रूः भ्रुवौ भ्रुवः। हे भ्रूः हे भ्रुवौ हे भ्रुवः। भ्रुवं भ्रुवौ भ्रुवः। भ्रुवा भ्रूभ्यां भ्रूभिः। भ्रुवै भ्रुवे भ्रू-भ्यां भ्रूभ्यः। भ्रुवाः भ्रुवः भ्रूभ्यां भ्रूभ्यः। भ्रुवाः भ्रुवः भ्रुवोः भ्रूणां भ्रु-वां। भ्रुवां भ्रुवि भ्रुवोः भ्रूषु ॥ एवं सूप्रभृतयः ॥ ऋकारान्तस्त्रीलिङ्गो मातृ-शब्दः। ततः स्वादयः पितृशब्दवत्। शसि तु शस्यगिति दीर्घः। माता मातरौ मातरः। हे मातः हे मातरौ हे मातरः। मातरं मातरौ मातॄः। इत्यादि। एवं दुहितृननान्द्यातृप्रभृतयः ॥ स्वसृशब्दस्य आरि तृन्स्वसित्यादिना दी-र्घः। स्वसा स्वसारौ स्वसारः। हे स्वसः हे स्वसारौ हे स्वसारः। स्वसारं स्वसारौ स्वसॄः। इत्यादि ॥ ॠकारऌकारॡकारान्ता अप्रसिद्धाः ॥ एकारान्तः परमेशब्दः पुल्लिँङ्गवत् ॥ ओकारान्तो द्योशब्दः। ततः स्वादयः गोशब्दवत्। द्यौः द्यावौ द्यावः। इत्यादि ॥ ऐकारान्तः सुरैशब्दः। ततः स्वादयः रैश-ब्दवत्। सुराः सुरायौ सुरायः। इत्यादि ॥ औकारान्तो नौशब्दः। ततः स्वादयः ग्लौशब्दवत्। नौः नावौ नावः ॥

॥ इत्यजन्ताः स्त्रीलिङ्गास्समाप्ताः ॥

## ॥ अथाजन्ता नपुंसकलिङ्गा उच्यते ॥

तत्राकारान्तनपुंसकलिङ्गो ज्ञानशब्दः। ततः स्वदयः। नपोऽचो ह्रस्वः। “ पञ्चतोऽनेकतरस्यान्यादेर्दक् स्वमोः ।२१३। ” इत्यधिकृत्य ॥

**१९९ अतोऽम्** ।१।२।४। अकारान्तस्य नपुंसकस्य सम्बन्धिनोः स्व-मोरमित्यादेशो भवति ॥ मत्वलुचौ औतो गी ॥

---

१ अत इति पञ्चमीविज्ञानेन नपुंसकापेक्षया परत्वमात्रमुपादाय विधौ प्रियकुण्डं अतिकुण्डः इत्यत्रापि स्यात् इति तत्सम्बन्धिविज्ञानेनाह नपुंसकस्य सम्बन्धिनोरिति ॥ सूत्रे अत इति तकारः किमर्थः? ननु तेयानित्यवधारणार्थं इति चेन्न प्रमाणाभावात् “नपोऽचो ह्रस्वः। २१६” इति विधानाद्ध इति चेत् तकारो लाघवार्थः। यदि ‘अस्याम्’ इत्युच्येत गुरुद्वयं स्यात् ॥

**२०० जश्शसः शिः** ।१।२।१८। नपुंसकस्य जश्शसोः शिर्भवति ॥ श इत् सर्वादेशार्थः । “ नम्सुपि ।२१७। ” इत्यधिकृत्य ॥

**२०१ शावचः** ।१।२।११। अजन्तस्य नपो नम् भवति शौ परे ॥ अमावितौ । अकार उच्चारणार्थः । मकारो देशविध्यर्थः ॥

**२०२ मिदचोऽन्त्यात्** ।१।१।४५। मिद्यस्य विधीयते तस्याचामन्त्यादचः परो भवति ॥ “ तप्स्वस० ।१७१। ” इत्यधिकृत्य ॥

**२०३ न्यक्** ।१।२।१३४। श्यनप्सुटि परे यो नकारः तस्मिन् परे पूर्वोऽर्दीर्घो भवति न चैकामन्त्रणे ॥ आमन्त्रणे सोरमि ह्स्वोऽमश्च लुक् । औजसोः प्राग्वत् । अमि मत्वलुचौ । औटो गी । शसः शौ प्राग्वत् । टादौ पुंवत् । ज्ञानं ज्ञाने ज्ञानानि । हे ज्ञान हे ज्ञाने हे ज्ञानानि । पुनस्तद्वत् । ज्ञानं ज्ञाने ज्ञानानि । ज्ञानेन ज्ञानाभ्यां ज्ञानैः । इत्यादि शेषं धर्मशब्दवत् ॥ एवं दर्शनचारित्रधनधान्यकुलादयः ॥ हृदयशब्दस्य प्रथमाद्वितीययोः ज्ञानशब्दवत् । टादौ पद्दन्नित्यादिना वा हृदित्यादेशः । सुपि चर्त्वं । हृदा हृदयेन हृभ्द्यां हृदयाभ्याम् इत्यादि । हृत्सु हृदयेषु ॥ उदकशब्दस्यापि टादौ पद्दन्नित्यादिना वा उदन्नित्यादेशः । अजादौ । “ पादोऽपदस्य न्यसुट्छिप्यादौ पद् ।२५२। ” इत्यधिकृत्य ॥

**२०४ न्नोऽनोऽहल्वमात्** ।१।२।१४९। अपदान्तस्यानः आदेशो भवति सुट्छिण्यादिवर्जिते प्रत्यये न्यां च परतः न हलः पराद्वान्माच्च परस्य ॥ शतावितौ पूर्ववत् । हलादौ सिद्धलीति पदत्वे । संयोगस्यादिस्कोर्लुगित्यधिकृत्य ॥

---

१ मिदचोऽन्त्यादिति सूत्रे अच इत्येकवचनं जातावेव । निर्धारणे षष्ठीयम् । निर्धारणं च जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणम् । जातेः पुरुषाणां क्षत्रियः शूरः । गुणस्य गवां कृष्णा गौः सम्पन्नक्षीरा । क्रियाया गच्छतां धावन्तः शीघ्रा इत्यमोघवृत्तौ ॥

**२०५ नः** ।१।२।९५। पदान्ते नस्य लुग्भवति ॥

**२०६ न्लुक् सुबाश्रये** ।१।२।४७। नस्य लुक् सुबाश्रये कार्ये प्राप्ते असदिव भवति ॥ असत्त्वे भ्यत्या इत्यादि सुबाश्रयं कार्यं न भवति। पुनर्लुक्। लुचि सकृद्बाधितो विधिर्बाधित एवेति युक्त्या पुनरात्वादि न भवति। ङौ ॥

**२०७ ङिग्योर्वा** ।१।२।१५०। अपदान्तस्यानः श्नो वा भवति ङौ भ्यां च परतः न ह्स्वमात्परस्य ॥ उद्ना उदकेन उदभ्याम् उदकाभ्याम् उदभिः उदकैः। उद्ने उदकाय उदभ्याम् उदकाभ्याम् उदभ्यः उदकेभ्यः। उद्नः उदकात् उदभ्याम् उदकाभ्याम् उदभ्यः उदकेभ्यः। उद्नः उदकस्य उद्नोः उदकयोः उद्नाम् उदकानाम्। उद्नि उदनि उदके उद्नोः उदकयोः उदसु उदकेषु ॥ एवमासनशब्दस्य टादौ आसनित्यादेशे प्रक्रिया। आस्ना आसनेन आसभ्याम् आसनाभ्याम् आसभिः आसनैः। आस्ने आसनाय आसभ्याम् आसनाभ्याम् आसभ्यः आसनेभ्यः। आस्नः आसनात् आसभ्याम् आसनाभ्याम् आसभ्यः आसनेभ्यः। आस्नः आसनस्य आस्नोः आसनयोः आस्नाम् आसनानाम्। आस्नि आसनि आसने आस्नोः आसनयोः आससु आसनेषु ॥ उपकुम्भशब्दात्स्वादयः। "आतोऽनाङः श्लुक् १४८।" इत्यधिकृत्य ॥

**२०८ अव्ययीभावस्य** ।१।२।१५५। अव्ययीभावस्य नपः सम्बन्धिनः सुपः श्लुग्भवति ॥ इति श्लुचि प्राप्तायां ॥

---

१ सर्वस्मिन् कुर्वीरन् इत्यत्रोपदेशसामर्थ्यादेव नस्य लुक् न भवति। उपदेश इति किं? 'सर्वादेर्ङस्येः स्मिन् स्मात् स्मै, इति 'रमौ लेङोः' इत्यादिसूत्रेषु स्मिन् रन् इत्यादिनिर्देश इत्यर्थ इत्यमोघवृत्तौ ॥

२ नो लुक् न्लुक्। आश्रीयत इत्याश्रयः सुप् आश्रयो यस्मिन्। वृत्रहभ्यां ब्रह्महभ्यामित्यत्र 'असिध्दं बहिरङ्गमन्तरङ्गे' इति तन्न भवति इत्युक्ते कोऽर्थः अन्तर्वर्तिनं क्विप्प्रत्ययमाश्रित्य 'ह्स्वस्य तक् पिति कृति ।४।१।४२।, इति सूत्रेण तगागमः 'अतः' इति सूत्रेण लुक् च न भवति। कुतः?' 'नः' इति सूत्रेण क्रियमाणो नस्य लोपः समुदायाश्रयो भवति अतः कारणादन्तरङ्गकार्यम्। असिध्दमवयवाश्रितं बहिरङ्गकार्यम् ॥

२०९ नातः ।१।२।१५६। अदन्तस्याव्ययीभावस्य नपः सम्बन्धिनः स्रुग्न भवति ॥

२१० अमपञ्चम्याः ।१।२।१५७। अदन्तस्याव्ययीभावस्य नपः स्वसुपोऽम् भवति न पञ्चम्याः ॥ मत्वादि ॥

२११ तृतीयाया वा ।१।२।१५८। अदन्तस्याव्ययीभावस्य नपः स्वस्यास्तृतीयायाः अम् वा भवति ॥ पञ्चम्यामपञ्चम्या इति निषेधात् नाम् ॥

२१२ सप्तम्याः ।१।२।१५९। अदन्तस्याव्ययीभावस्य नपः स्वसप्तम्याः अम् वा भवति ॥ उपकुम्भम् उपकुम्भम् उपकुम्भम् । उपकुम्भम् उपकुम्भम् उपकुम्भम् । उपकुम्भम् उपकुम्भेन उपकुम्भम् उपकुम्भाभ्याम् उपकुम्भम् उपकुम्भैः । उपकुम्भम् उपकुम्भम् उपकुम्भम् । उपकुम्भात् उपकुम्भाद् उपकुम्भाभ्याम् उपकुम्भेभ्यः । उपकुम्भम् उपकुम्भम् उपकुम्भम् । उपकुम्भे उपकुम्भम् उपकुम्भयोः उपकुम्भम् उपकुम्भेषु उपकुम्भम् ॥ एवम् उन्मत्तगङ्गं पारेसमुद्रं मध्येपुरम् अन्तस्संसारं यावदमत्रं बहिर्ग्रामम् परिग्रामम् अपग्रामम् आसंसारं प्राग्ग्रामम् अभिमित्रं प्रतिमुखम् अनुवनम् इतिसमन्तभद्रं सुमद्रं सक्षत्रम् आमूलम् अतिशीतम् अध्यात्मम् अनुरथं सतृणं यथाक्रमं प्रभृतयः शब्दा नेयाः ॥ सर्वादयः प्रथमाद्वितीययोः ज्ञानशब्दवत् टादौ पुंवत् । सर्वं सर्वे सर्वाणि । इत्यादि । टादौ । सर्वेण सर्वाभ्यां सर्वैः । इत्यादि नेतव्यम् ॥ अन्यशब्दात् स्वादयः ॥

२१३ पञ्चतो[3]ऽनेकतरस्यान्यादेर्दक् स्वमोः ।१।२।२। नपोऽ-

१ तत्सम्बन्धीति विज्ञानादिह न भवति प्रियोपवधुः प्रत्युपवधुः ॥ योगविभाग उत्तरार्थः । अत इति किं अधिस्रि ॥

२ अमित्ययमादेशो भवति । उपकुम्भं तिष्ठति । उपकुम्भं पश्यति ॥

३ पञ्च मानमस्येति पञ्चत् तस्य पञ्चतोऽन्यादेः । अन्य , अन्यतर, इतर, डतर, डतमेति पञ्च । अत्र अन्यादयस्तिस्रः प्रकृतयः । डतरडतमप्रत्ययान्तौ द्वौ शब्दौ एते पञ्च । के ते? अन्य, अन्यतर, इतर, कतर, कतम, यतर, यतम, ततर, ततम, अन्यान्यतरेतरा डतरडतमप्रत्ययान्तौ च अन्यादिपञ्च ज्ञातव्याः सर्वान्तर्वर्तिनः ॥

न्यादिपञ्चकस्य दग्भवति स्वस्वमोः परतः नैकतरस्य ॥ अकावितौ। अकार उच्चरणार्थः। ककारोऽन्त्यविध्यर्थः ॥

२१४ श्लुक् ।१।२।५। नपः स्वमोः श्लुग्भवति ॥ शित्त्वात्सर्वस्य। चर्जशः इति वा चर्त्वं। शेषं पुर्ववत्। अन्यत् अन्यद् अन्ये अन्यानि। हे अन्यत् हे अन्यद् हे अन्ये हे अन्यानि। अन्यत् अन्यद् अन्ये अन्यानि। टादौ पुंवत् ॥ एवमन्यतर[1]इतरकतरकतमादयः। अनेकतरस्येति निषेधात् एकतरशब्दस्य सर्वशब्दवद्रूपं नेयम्। एकतरम् एकतरे एकतराणि। इत्यादि ॥ एवमन्यतमशब्दस्यापि ॥ अन्यादिपञ्चके अन्यतरशब्दग्रहणात् दगभावः। अन्यतमम् अन्यतमे अन्यतमानि ॥ तद्शब्दात् स्वादयः। नित्यत्वात्प्रागेव स्वमोः श्लुचि सत्यां स्थानिवद्भावे प्राप्ते ॥

२१५ श्लुचीगेनत् ।१।१।५२। परस्य श्लुचि सत्यां पूर्वकार्यमिगेनदिति द्वयमेव भवति ॥ नान्यदिति नियमान्नात्वादि। अन्यत्रात्वाद्युचौ। सर्वकार्ये कृते पश्चान्मत्वगुत्वे। टादौ पुंवत्। अदः अमू अमूनि। अमन्त्रणद्वितीययोरप्येवम्। अमुना अमूभ्याम् अमीभिः। इत्यादि ॥ इदमः स्वमोः श्लुगादि शेषं पूर्ववत्। इदम् इमे इमानि। टादौ पुंवत्। अनेन आभ्याम् एभिः। इत्यादि ॥ एतद्शब्दस्याप्येवम्। एतत् एतद् एते एतानि। इत्यादि ॥ अन्वादेशे अमः श्लुच्यपि श्लुचीगेनदिति वचनादेनद्भवति। शेषं पूर्ववत्। एनत् एनद् एने एनानि इत्यादि ॥ एकशब्दस्य। एकम् एके एकानि। इत्यादि ॥ द्विशब्दस्यात्वम्यादि। द्वे द्वे द्वाभ्याम् इत्यादि ॥ किंशब्दस्य स्वमोः श्लुचि कादेशो न भवति। अन्यत्र कादेशे म्यादि सर्वशब्दवत्। किं के कानि। इत्यादि ॥ आकारान्तः सोमपाशब्दः तस्य ॥

२१६ नपोऽचो ह्रस्वः ।१।२।१। अजन्तस्य नपुंसकस्य ह्रस्वो

---

१ अत्र उणादिप्रत्ययन्तोऽन्यतरशब्दो न डतरप्रत्ययान्तः ॥

२ विशेषणं विशेषस्य समुदायस्यान्तो भवतीति चिन्तामणावुक्तत्वादजन्तस्येत्यापन्नं तेन ग्रामणि कुलमिति ॥

भवतीति ह्रस्वः ॥ ततः स्वादयः । ज्ञानशब्दवत्प्रक्रिया। सोमपं सोमपे सोमपानि। इत्यादि ॥ इकारान्तो वारिशब्दः। ततः स्वादयः। सोः श्लुक औतो गीत्त्वे। "इको लुक् ।२१८" इत्यधिकृत्य ॥

२१७ नम् सुपि ।१।२।१०। इगन्तस्य नपो नम् भवति अजादौ स्वमुपि परे ॥ अमावितौ पूर्ववत्। अनप्मुटि इति निषेधात् न्यगिति न दीर्घः। णत्वं। जसः शौ नमादि। एकामन्त्रणे सोः श्लुचि ॥ "जरसो वा ।१।२।६।" इत्यधिकृत्य ॥

२१८ इको लुक् ।१।२।७। इगन्तस्य नपः स्वमोः श्लुक् लुग्वा भवति ॥ लुचि ह्रस्वैत इत्येङ् न श्लुचि। अमः श्लुचि शेषं प्राग्वत्। टादा-वजादौ नम्। आमो नम्ह्रस्वाद्साट इति नां। सिद्धलीति पदत्वे 'न' इति नलुक् दीर्घः। वारि वारिणी वारीणि। हे वारे हे वारि हेवारिणी हे वारीणि। वारि वारिणी वारीणि। वारिणा वारिभ्यां वारिभिः। वारिणे वारिभ्यां वारिभ्यः। वारिणः वारिभ्यां वारिभ्यः। वारिणः वारिणोः वारीणां। वारिणि वारिणोः वारिषु ॥ अधिस्त्रिशब्दात् स्वादयः। तस्याव्ययीभावत्वादव्ययीभा-वस्येति सुपः श्लुक्। अधिस्त्रि अधिस्त्रि अधिस्त्रि। इत्यादि ॥ दध्यस्थिसक्थ्य-क्षिशब्दानां प्रथमाद्वितीययोर्वारिशब्दवत्। टादौ ॥

२१९ दध्यस्थिसक्थ्यक्ष्णोऽनङ् ।१।२।७। दधि अस्थि सक्थि

---

१ सुपीति किं? तौम्बुरवं चूर्णम्। स्वसम्बन्धित्वादिह न भवति बहुवारी निर्वारी कूपौ। प्रक्रियायां इगन्तस्येति किं? काण्डे कुड्ये। नपुंसकस्येति किं? मुनी साधू ॥

२ जरसन्तस्य नपः स्वमोः श्लुग्भवति वा ॥ अतिजरः। अतिजरसं कुलम् ॥

३ प्रक्रियायां श्लुचो लुग्वचनं अमः सर्वलोपार्थम्। स्वमोर्लुग्भवतीत्यनुक्त्वा श्लुक् लुग्वा भवतीति वचनात् सर्वाम् लुप्यते। अन्यथा मकार एव लुप्येतेत्यर्थः। इगन्त-स्येति किं? यत्कुलं तत्कुलम् ॥

४ अयमनङादेशस्तत्सम्बन्धिन्यन्यसम्बन्धिन्यपि अजादावापि परे नित्यं भवति ॥ परमदध्ना। परमास्थ्ना। प्रियाक्ष्णा पुरुषेण ॥ अतिदध्ना स्त्रिया ॥ नप्यस्य योगस्यो-त्तरत्रानुवृत्तेर्नम्बाधया अनङ् भवति। आपीति किं? दधिनि। नपुंसकस्येति किं? दधिना दधये। दधिर्नाम कश्चिद्दानशीलो वा दधी दाने धातुः ॥

अक्षि इत्येतेषां नपामनङ् भवत्यजादावपि परे ॥ अनङावितौ । अदुच्चार-णार्थः । ङकारोऽन्त्यादेशार्थः । आदेशः । दधि दधिनी दधीनि । इत्यादि । दध्ना दधिभ्यां दधिभिः । दध्ने दधिभ्यां दधिभ्यः । दध्नः दधिभ्यां दधिभ्यः । दध्नः दध्नोः दध्नां । दध्नि दधनि दध्नोः दधिषु । एवमस्थिसक्थ्यक्षिशब्दाः ॥ त्रिशब्दात् जश्शसोः शौ नमादि । अन्यत्र पुंवत् । त्रीणि त्रीणि त्रिभिरि-त्यादि ॥ शुचिशब्दस्य प्रथमाद्वितीययोः वारिशब्दवत् । टादौ ॥

**२२० पुमांश्चान्यतोऽन्यापि** ।१।२।८। यदिगन्तमन्यतो विशे-ष्यवशान्नापि वर्तते तत्पुंवद्वा भवति अजादावपि परे ॥ पुंवद्भावे रविशब्द-वत्प्रक्रिया । नम्त्वे नपुंसकत्वे वारिशब्दवत् । शुचि शुचिनी शुचीनि । इत्यादि । शुचिना शुचिभ्यां शुचिभिः । शुचिने शुचये शुचिभ्यां शुचिभ्यः । शुचिनः शुचेः शुचिभ्यां शुचिभ्यः । शुचिनः शुचेः शुचिनोः शुच्योः शुचीनां । शुचिनि शुचौ शुचिनोः शुच्योः शुचिषु ॥ एवं सखिपत्यादय आश्रयलिङ्गाः ॥ ईकारान्तस्य ग्रामणीशब्दस्य नम्त्वे 'नपोऽचो ह्रस्व' इति ह्रस्वे शुचिशब्दवत् रूपं नेयं ॥ ग्रामणि ग्रामणिनी ग्रामणीनि । इत्यादि । टादौ नम्ह्रस्वौ वा न भवतः । ग्रामण्या ग्रामणिना ग्रामणिभ्यां ग्रामणिभिः । ग्रामण्ये ग्रामणिने इत्यादि ॥ उकारान्तत्रपुशब्दः वारिशब्दवत् । त्रपु त्रपुणी त्रपूणि । इत्यादि ॥ एवं तालुजानुकशेरुप्रभृतयः ॥ उपवधुशब्दात् स्वादयः । अव्ययीभावस्येति सुपः लुक् । उपवधु उपवधु उपवधु । इत्यादि ॥ मृदुपटुगुरुलघुप्रभृतीनामाश्रयलिङ्गानां शुचिशब्दवत् प्रक्रिया । मृदु मृदुनी मृदूनि । इत्यादि ॥ ऊकारान्तस्य खलपूशब्दस्य ह्रस्वे कृते ग्रामणिशब्दवत् । खलपु खलपुनी खलपूनि । इत्यादि ॥ ऋकारान्तस्य कर्तृशब्दस्याश्रय-लिङ्गत्वात् शुचिशब्दवत् । कर्तृ कर्तृणी कर्तॄणि । इत्यादि ॥ एवं नेतृ-भर्त्रादयः । उपकर्तृशब्दात् स्वादयः अव्ययीभावस्येति सुपः लुक् । उपकर्तृ

---

१ अस्मिन् सूत्रे चकारेण वाऽनुकर्षणमुत्तरत्राविकल्पार्थम् । 'जरसो वा' इत्यतो वा इति 'इको लुक्' इत्यत इक् इति च चकारः समुच्चिनोति । अतः समुच्चयार्थश्चकारोऽत्र ।

२ वेति विकल्पे । तेन पुंस्त्वे नम्ह्रस्वौ न भवत इत्यर्थः ॥

उपकर्तृ । इत्यादि ॥ ऋकारऌकारॡकारान्ता अप्रसिद्धाः ॥ एकारान्तः परमेशब्दः । तस्य ह्रस्वः आसन्न इति इकारः । ग्रामणिशब्दवत् प्रक्रिया । परमि परमिणी परमीणि ॥ टादौ । परमिणा परमया परमिभ्यां परमिभिः । इत्यादि ॥ ओकारान्तः अतिद्योशब्दः । ततः स्यादयः । ह्रस्वादि । अतिद्यु अतिद्युनी अतिद्यूनि ॥ टादावजादौ वा पुंवद्भावः । अतिद्युना अतिद्यवा ॥ अतिद्युने अतिद्यवे ॥ अतिद्युनः अतिद्योः ॥ अतिद्युनः अतिद्योः अतिद्युनोः अतिद्यवोः अतिद्यूनाम् अतिद्यवाम् ॥ अतिद्युनि अतिद्यवि अतिद्युनोः अतिद्यवोः अतिद्युषु ॥ ऐकारान्तः अतिरैशब्दः तस्य ह्रस्वे । अतिरि अतिरिणी अतिरीणि । टादौ । अतिरिणा अतिराया । हलादौ एकदेशविकृतमनन्यवद्भवति इति न्यायेन रायस्स्मीत्यात् अतिराभ्यामित्यादि ॥ औकारान्तः अतिनौशब्दः । तस्य ह्रस्वे । अतिनु अतिनुनी अतिनूनि । टादौ । अतिनुना अतिनावा अतिनुभ्याम् अतिनुभिः । इत्यादि ॥ ॥ इत्यजन्ता नपुंसकलिङ्गाः ॥

## ॥ अथ हलन्ताः पुल्लिँङ्गाः कथ्यन्ते ॥

तत्र हकारान्तो गुडलिह् शब्दः । ततः स्यादयः । हल्ङ्याब्भ्य इति सोर्लुक्। "इञो लिङ्लुङां घो ढः ।१।२।८१।" इत्यधिकृत्य ॥

२२१ हः ।१।२।८३। हस्य ढो भवति पदान्ते जलि च प्रत्यये परे ॥ जश्त्वचर्त्वे । अजादौ सन्निकर्षः । सुपि चर्त्वं । गुडलिट् गुडलिड् गुडलिहौ गुडलिहः । इत्यादि । गुडलिट्सु गुडलिट्त्सु ॥ एवं मधुलिह् परीषह् इत्यादयः ॥ गोदुह्शब्दात् स्यादयः । सुलुक् ॥

२२२ दादेरेघादेर्घः ।१।२।८४। दकारादेरेघादेर्धातोर्हस्य घो

१ इञः परेषां लिङ्लिट्लुङां घस्य ढकारो भवति, चकृढ्वे ॥

२ एघादेरिति शब्दो धातोरित्यस्याध्याहारार्थः । आदिशब्दस्य प्रकारोऽर्थः । ततश्च एघादेर्धातोर्यो दकारादिरवयवस्तस्य हकारस्य पदान्ते जलि च प्रत्यये परे घकारादेशो भवति ॥ अस्मिन्सूत्रे घविधानं भष्भावार्थम् । दादेरिति किं? गुडलिहौ । एघादेरिति किं? दामलिट् । ह इति किं? दत्तः ॥

भवति पदान्ते जलि च प्रत्यये परे॥

**२२३ बशो भष् झषः स्ध्वोश्चैकाचः प्रत्यये** ।१।२।७६। झषन्तस्यैकाचोऽवयवस्य बशो भष् भवति पदान्ते सादौ ध्वादौ च प्रत्यये परे॥ आसन्नः। जश्त्वचर्त्वे। सुपि चर्त्वषत्वे। गोधुक् गोधुग् गोदुहौ गोदुहः। आमन्त्र्येऽप्येवं। गोदुहं गोदुहौ गोदुहः। गोदुहा गोधुग्भ्यां गोधुग्भिः। गोदुहे गोधुग्भ्यां गोधुग्भ्यः। गोदुहः गोधुग्भ्यां गोधुग्भ्यः। गोदुहः गोदुहोः गोदुहां। गोदुहि गोदुहोः गोधुक्षु॥ एवं रत्नदुह्-कामदुह्गुणदुहादयः॥ मित्रद्रुह्शब्दात् स्वादयः॥

**२२४ द्रुहमुहस्नुहस्निहो वा** ।१।२।८६। द्रुहादीनां हस्य घो वा भवति पदान्ते जलि च परे॥ पक्षे ढः शेषं प्राग्वत्। मित्रध्रुक् मित्रध्रुग् मित्रध्रुट् मित्रध्रुड् मित्रद्रुहौ मित्रद्रुहः॥ एवं प्रमुह्प्रस्नुह्प्रस्निह्-शब्दाः॥ अनडुह्शब्दात् स्वादयः॥

**२२५ वाः** ।१।२।१२८। अनडुह्चतुर्शब्दयोरुतो वा इत्यादेशो भवति श्यनप्सुटि परे॥

**२२६ अनडुहो नम्** ।१।२।११३। अनडुहः सौ परे नम् भवति॥ अमावितौ। मित्त्वादन्त्यादचः परो भवति सुलुक्। पदस्येति हस्य लुक्। न इति नलुचि परविधौ कर्तव्ये॥

**२२७ परे** ।१।२।४९। परे कार्ये कर्तव्ये पूर्वमसद्भवति। इति पदस्येत्यन्तलुचोऽसत्त्वान्न नलुक्। अयं न्यायो धर्मानित्यादावपि द्रष्टव्यः। एकामन्त्रणे॥

**२२८ वोऽनडुच्चतुरोः** ।१।२।१२७। अनडुह्चतुरोरुतो वो भवति

---

१ अत्र ध्वशब्दोपादानादिह न भवति दादद्भिः। एकाच इति किं? धामलिट्। प्रत्यये इति किं? दध्वः। चकारः समुच्चयार्थः॥

२ द्रुह जिघांसायाम्। मुह वैचित्त्ये। स्नुह उन्मरणे। स्निह प्रीतौ॥

३ अनडुच्च चतुर्च अनडुच्चतुरौ। तयोः उः अनडुच्चतुरुः। तस्य अनडुच्चतुरोः। हे प्रियचत्वः। हे अतिचत्वः इत्यादि॥

एकामन्त्रणे ॥ नम् । सुलुगन्तलुचौ । हलादौ ॥

**२२९ अनडुद्द्युदुष्णिग्दिग्दृक्स्पृग्दधृक्परिव्राट्** ।१।२।७०। अनडुह् दिव् उष्णिह् दिश् दृश् स्पृश् दधृष् परिव्राज् इत्येते शब्दाः पदान्ते कृतदत्वोत्वगत्वडत्वा निपात्यन्ते[1] ॥ अनड्वान् अनड्वाहौ अनड्वाहः । हे अनड्वन् हे अनड्वाहौ हे अनड्वाहः । अनड्वाहं अनड्वाहौ अनडुहः । अनडुहा अनडुद्भ्याम् अनडुद्भिः । अनडुहे अनडुद्भ्याम् अनडुद्भ्यः । अनडुहः अनडुद्भ्याम् अनडुद्भ्यः । अनडुहः अनडुहोः अनडुहाम् । अनडुहि अनडुहोः अनडुत्सु ॥ यकारान्तोऽप्रसिद्धः[2] ॥ वकारातः सुदिव्शब्दः ॥

**२३० द्यौः** ।१।२।११२। दिवः सौ द्यौरिति निपात्यते[3] ॥ अचि सन्निकर्षः आमन्त्र्येऽप्येवं । हलादौ अनडुदिति निपातनात् दिवो द्युभावः । सुद्यौः सुदिवौ सुदिवः । हे सुद्यौः हे सुदिवौ हे सुदिवः । सुदिवं सुदिवौ सुदिवः । सुदिवा सुद्युभ्यां सुद्युभिः । सुदिवे सुद्युभ्यां सुद्युभ्यः । सुदिवः सुद्युभ्यां सुद्युभ्यः । सुदिवः सुदिवोः सुदिवां । सुदिवि सुदिवोः सुद्युषु ॥ रेफान्तः सुवार्शब्दः । ततः स्वादयः । सुलुचि रस्य विसर्जनीयः । हषि विसर्जनीयस्य रः । सुपि ॥

**२३१ रस्सुप्सि**[4] ।१।२।७४। रस्य रिर्भवति सुपः से परे ॥ इदित्

---

१ अनडुह्शब्दस्य दत्वं दिव्शब्दस्य उत्वं उष्णिहादीनां गत्वं परिव्राज्शब्दस्य डत्वं च निपात्यते ॥

२ यकारान्तः समय्शब्दः । समय् समयौ समयः । हलादौ व्योऽय्येति यलुक् समभ्याम् ॥

३ दिव् इत्यव्युत्पन्नस्य प्रातिपदिकस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा सकारादौ स्यनप्लुटि परे ओकारो निपात्यते । द्यौः । हे द्यौः । प्रियद्यौः । अतिद्यौः । अर्थादक्रियाशब्दस्याव्युत्पन्नस्य निपातनादक्षद्युरित्यत्र न भवति ॥

४ रः इति किं? भित्सु अहस्सु पयस्सु इत्यत्र रेरसत्वान्न भवति ॥ सुप इति किं? गीस्सुनोति धूस्सुनोति । स इति किं? गीः धूः । इदमेव ज्ञापकं सुप्ग्रहणे प्रत्याहारग्रहणमेवेत्यस्य । रेफस्य रिवचनं विसर्जनीयबाधनार्थम् ॥

विसर्जनीयापवादः। सुवाः सुवारौ सुवारः। हे सुवाः हे सुवारौ हे सुवारः। सुवारं सुवारौ सुवारः। सुवारा सुवार्भ्यां सुवार्भिः। सुवारे सुवार्भ्यां सुवार्भ्यः सुवारः सुवार्भ्यां सुवार्भ्यः। सुवारः सुवारोः सुवारां। सुवारि सुवारोः सुवार्षु॥ एवं सुद्वारादयः॥ चतुरशब्दस्य बह्वर्थवाचित्वात्ततो जसादयः। जस्युतो वाः॥

**२३२ रष्णां सङ्ख्यानाम्** ।१।२।३४। रषनान्तानां सङ्ख्यावाचिनां सम्बन्धिन आमो नां भवति॥ अतिसृचतुष्ष इति निषेधात् न दीर्घः णत्वं। सुपि रिः। चत्वारः। हे चत्वारः। चतुरः। चतुर्भिः। चतुर्भ्यः। चतुर्भ्यः। चतुर्णां। चतुर्षु॥ लकारजकारान्तावप्रसिद्धौ॥ मकारान्तः प्रदाम्शब्दः। ततः स्वादयः सुलुक्॥

**२३३ म्वोश्च मो निः** ।१।२।६९। मकरान्तस्य धातोर्नकारो भवति पदान्ते मवयोश्च परतः॥ सुपि॥

**२३४ ङ्नस्तट् सोऽश्चे** ।१।१।१४६। पदान्ते ङनाभ्यां परस्य सस्य तड्वा भवति न श्चः संयोगस्य॥ ट इत् आदिविध्यर्थः। अदुच्चारणार्थः प्रदान् प्रदामौ प्रदामः। हे प्रदान् हे प्रदामौ हे प्रदामः। प्रदामं प्रदामौ प्रदामः। प्रदमा प्रदान्भ्यां प्रदान्भिः। प्रदामे प्रदान्भ्यां प्रदान्भ्यः। प्रदामः प्रदान्भ्यां प्रदान्भ्यः। प्रदामः प्रदामोः प्रदामां। प्रदामि प्रदामोः प्रदान्त्सु प्रदान्सु॥ एवं प्रताम्प्रकाम्प्रशामादयः॥ ञकारातोऽप्रसिद्धः॥

---

२ रष्णामिति किं? त्रिंशताम् चत्वारिंशताम्। रष्णामिति बहुवचनं षष्ठ्यभिव्यक्त्यर्थम्। तेन तत्सम्बन्धिन एव भवति नान्यसम्बन्धिनः॥

२ अश्चः असंयोगस्यावयवश्चेत्सकारो न भवति। अश्च इति किं? अट्श्चोतति षट्श्च्योतति। श्च्युतृ क्षरणे। भवाञ्श्च्योतति॥ नन्वत्र सकार एव नास्ति किं अश्च इति निषेधेनेति चेन्न तत्रान्तरङ्गत्वाद्यद्यपि श्चुत्वेन शकारो भवति तथापि तस्य सकारोपदेशसामर्थ्यात्सकारोपदिष्टं विज्ञायते। अन्यथा सकारोपदेशानर्थक्यात्।

णकारान्तः सुगण्शब्दः । ततः स्वादयः । सुलुगादि । सुपि ॥

**२३५ ङ्णो गक्डक् शरि** ।१।१।१४५। पदान्ते ङ्णयोर्यथासङ्ख्यं गक्डकौ वा भवतः शरि परे ॥ अकावितौ अनुच्चारणार्थः । कोऽन्तविद्ध्यर्थः । चर्त्वे । टोः पदान्त इत्यनेन ष्टुत्वनिषेधः । सुगण् सुगणौ सुगणः । इत्यादि । सुगण्ट्सु सुगण्सु ॥ एवं सुरण्सुभण्विष्वण्णादयः ॥ नकारान्तात् राजन्शब्दात् स्वादयः सुलुक् । न्यगिति दीर्घः । न इति नलुक् । एकामन्त्रणे सुलुचि ' न ङान्लुगिति ' वचनात् न नलुक् । शसादावजादौ ' श्नोऽन ' इति श्नः । श्चुत्वेन नस्य ञः । हलादौ पदत्वेन नलुक् । तस्याः ' न्लुक्सुबाश्रये ' इत्यसत्त्वान्नात्वादि । ङौ वा श्नः । शेषं पूर्ववत् । राजा राजानौ राजानः । हे राजन् हे राजानौ हे राजानः । राजानं राजानौ राज्ञः । राज्ञा राजभ्यां राजभिः । राज्ञे राजभ्यां राजभ्यः । राज्ञः राजभ्यां राजभ्यः । राज्ञः राज्ञोः राज्ञां । राज्ञि राज्ञोः राजसु ॥ एवं मूर्धन्उक्षन्तक्षन्प्रभृतयः ॥ दिवन्शब्दस्य सुटि राजन्शब्दवत् । असुटि श्ने ॥

**२३६ धातोर्य्विग्दीर्घोऽयहल्नि चाच्छुर्कुरोः** ।१।२।६८। छुर्कुरुर्वर्जितस्य धातोरिग्दीर्घो भवति पदान्ते यप्रत्ययवर्जितहल्परयोः नपरयोश्च वकाररेफयोः परतः ॥ शेषं सुगमम् । दिवा दिवानौ दिवानः । इत्यादि दीव्नः । दीव्ना दिवभ्यां दिवभिः । इत्यादि ॥ सुपर्वन्शब्दात् स्वादयः । राजन् शब्दवत् । इयांस्तु भेदः अहल्वमादिति निषेधान्न श्नः । सुपर्वा सुपर्वाणौ सुपर्वाणः । इत्यादि । शसादौ सुपर्वणः । सुपर्वणा इत्यादि । एवं सुशर्मन्श्रीवर्मन्नित्यादयः ॥ पूषन्शब्दात् स्वादयः ॥

**२३७ इन्हन्पूषार्यम्णः शौ** ।१।२।१२६। इन् हन् पूषन् अर्यमन् इत्येतेषां शावेव परे पूर्वोऽन्दीर्घो भवति ॥ इति नियमादत्र दीर्घेऽप्राप्ते ॥

**२३८ सावतोश्च** १।२।१२७ अत्वन्तस्य इन्हन्पूषार्यम्णां च दीर्घो भवति सौ परे न चैकामन्त्रणे ॥ णत्वं शेषं प्राग्वत् । पूषा पूषणौ पूषणः । इत्यादि ॥ एवमर्यमन्शब्दः ॥ ब्रह्महन्शब्दात् स्वादयः पूषन्ब-

ब्दवत् प्रक्रिया । "पूर्वपदस्थाद्वान्तनमसुपः ।१।२।५७।" इत्यधिकृत्य ॥

**२३९ सकैकाचोः** ।१।२।५८। पूर्वपदस्थाभ्यां षूभ्यां परस्य कवर्गवत एकाचश्चोत्तरपदस्यान्तनम्सुपां नस्य णो भवति ॥ असुटि श्वे "दादेरेघादेर्घः ।२२२" इत्यधिकृत्य ॥

**२४० नि घ्नः** ।१।२।८५। हनो हस्य घो भवति नकारे परे ॥

**२४१ घि घ्नः** ।१।२।५२। हनो हस्य घे सति नस्य णो न भवति ॥ शेषं प्राग्वत् । ब्रह्महा ब्रह्महणौ ब्रह्महणः । हे ब्रह्महन् ॥ ब्रह्मघ्नः ॥ ब्रह्मघ्ना ब्रह्महभ्यां ब्रह्महभिः । इत्यादि ॥ एवं भ्रूणहन्वृत्रहन्शब्दौ ॥ करिन्शब्दात् स्वादयः पूषन्शब्दवत्प्रक्रिया । करी करिणौ करिणः । इत्यादि ॥ एवं हस्तिन्दन्तिन्दण्डिन्प्रभृतयः ॥ श्वन्शब्दात् स्वादयः सुटि राजन्शब्दवत् । असुट्यजादौ ॥

**२४२ श्वयुवन्मघोनां वस्येसुप्युश्** ।१।२।१४८। श्वन्युवन्मघवन् इत्येतेषां अपदान्तानां वशब्दस्योश् भवति सुट्छिण्यादिवर्जिते ईप्रत्यये ग्यां च सुपि प्रत्यये च परतः ॥ श इत् सर्वादेशार्थः शेषं प्राग्वत् ॥ श्वा श्वानौ श्वानः । इत्यादि । शुनः ॥ शुना श्वभ्यां श्वभिः । इत्यादि ॥ एवं

---

१ पूर्वपदस्थात्षूात्परो य उत्तरपदस्यान्तो यश्च नम् यश्च सुबवयवो नकारः तस्य वा णो भवति ॥ माषवापिणौ । माषवापिनौ । व्रीहिवापिणौ व्राहिवापिनौ । नम् माषवापाणि माषवापानि । प्रहिन्वन् प्रहिण्वन् । सुप् माषवापेण माषवापेन । व्रीहिवा-पेन व्रीहिवापेण । पूर्वपदस्थादिति किं? कूपवारेणा । अन्तनम्सुपामिति किं? गर्गाणां भगिनी गर्गभगिनी ॥

२ सह कुः कवर्गो येन तत्सकु । एकोऽच् यस्यास्ति न द्वितीय इति तदेकाच् सकु च एकाच् च सकैकाचे तयोः । तथाच पूर्वपदस्थान्निमित्तादुत्तरस्य कवर्गवत्येकाचि चोत्तर-पदे तदन्तस्य नमः सुबवयवस्य च नकारस्य च नित्यं णकारो भवति ॥ कवर्गवतोऽन्त-नम्सुपाम् मोक्षगामिणां स्वर्गकामाणां पुष्पमेघाणां ॥

३ युवन्निति नकारोच्चारणं नकारान्तप्रत्ययार्थम् तेनेह न भवति । युवतीः पश्य । युवत्या युवत्यै । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति प्राप्नोति । तत्त्वहस्वना मातरिश्वना इत्यत्र तु अर्थवद्ग्रहणान्न भवतीत्यमोघवृत्तौ ॥

युवन्शब्दस्यासुड्युशि दीर्घः। युवा युवानौ युवानः। इत्यादि। यूनः। यूना युवभ्यां युवभिः। यूने युवभ्यां युवभ्यः। इत्यादि॥ एवं मघवन्शब्द-स्यासुड्युश्येव्। मघवा मघवानौ मघवानः। इत्यादि। मघोनः। मघोना मघवभ्यां मघवभिः इत्यादि॥ पथिन्शब्दात् स्यादयः॥

**२४३ इयनप्सुट्यन्** ।१।२।१०९। पथिन् मथिन् ऋभुक्षिन् इत्येते-षां अन्त्याजादेरन् भवति शावनपुंसकीये च सुटि परे॥

**२४४ थो नट्** ।१।२।११०। पथ्यादीनां थकारस्य नट् भवति इयन-प्सुटि परे॥ अटाविनौ अदुच्चारणार्थः। ट आदिविध्यर्थः। सौ॥

**२४५ आंस्स्यनः** ।१।२।१११। पथ्यादीनामनः आद्भवति सौ परे। अनलाश्रय इति निषेधात् हल्ङ्याडिति सुलुचि प्राप्तायां न स्थानिवद्भावः। रित्यादि। अन्यत्र न्यगिति दीर्घः। अजादावसुटि॥

**२४६ नः पथिमथ्यृभुक्षः** ।१।२।१०८। नान्तानामपदान्तानां पथ्यादीनामन्त्याजादेर्लुग्भवति॥ हलि पदत्वान्नान्त्याजादिलुक् पुनर्न इति नलुक्। पन्थाः पन्थानौ पन्थानः। हे पन्थाः हे पन्थानौ हे पन्थानः। पन्थानं पन्थानौ पथः। पथा पथिभ्यां पथिभिः। पथे पथिभ्यां पथिभ्यः। पथः पथिभ्यां पथिभ्यः। पथः पथोः पथां। पथि पथोः पथिषु॥ एवं मथिन्ऋभुक्षिन्शब्दौ॥ मन्थाः मन्थानौ मन्थानः। ऋभुक्षाः ऋभुक्षाणौ

---

१ अन इति षष्ठ्यास्स्थानेऽन्तेऽलः। सकारादौ इयनप्सुटि परे अनस्स्थाने आकारा-देशो भवति। सौति किं? पन्थानौ। अन इति किं? थकारस्य मामूत् सकारादौ इयनप्सु-टीति वचनसामर्थ्यात्प्राक् सोर्लुक् न भवति॥

२ पथिन् स् इत्यत्र इयनप्सुट्यन्निति सति पथन् स् इति भवति। थो नडिति नडागमे सति पन्थन् स् इति भवति। आंस्स्यन इति अन आकारे कृते पन्थास् इति भवति। अत्र आंस्स्यन इति विहितस्याकारस्य स्थानीभूतस्य नकारस्य पथन् स इति स्थानिवद्भावं कृत्वा हलः परलक्षणायां सोर्लुचि स्थानिवद्भावाभावान्न भवति॥ अथवा पथन् स् इत्यत्र प्रथमं सोर्लोपं कृत्वा पश्चात्सौ स्थानिवद्भावं कृत्वा आंस्स्यन इत्याकारो भवत्वित्याशंकायां आंस्स्यन इति सकारहल्मात्रग्रहणात् तत्राप्यलाश्रयत्वान्न स्थानिवद्भावः। अत एवोभयत्र सोर्लुक् न भवति॥

ऋभुक्षाणः। इत्यादि॥ पञ्चन्शब्दस्य बहुत्ववाचित्वात्ततो बहुवचनान्येव। ष्णान्ता षडितिष्णां सङ्ख्यानामिति जश्शसोः लुक्। लुचीगेनदिति नियमान्न दीर्घः। न इति नलुक्। आमो ष्णां सङ्ख्यानामिति नाम् न्लुक् दीर्घः। पञ्च। हे पञ्च। पञ्च। पञ्चभिः। पञ्चभ्यः। पञ्चभ्यः। पञ्चानां। पञ्चसु॥ स्त्रीनपुंसकयोरप्येवम्। एवं सप्तन् नवन् दशन् एकादशन् इत्यादयः॥ अष्टन्शब्दात् जसादयः॥

२४७ वाऽष्टन आः।१।२।२१९। अष्टन्शब्दस्य आद्वा भवति सुपि परे॥ एकाल्त्वादन्त्यस्य। दीर्घः॥

२४८ अष्ट औशं।१।२।१५३। अष्टाशब्दात्परयोः जश्शसोरौश् भवति॥ श इत् सर्वादेशार्थः। ऐच् पक्षे पञ्चन्शब्दवत्। अष्टौ अष्ट। हे अष्टौ हे अष्ट। अष्टौ अष्ट। अष्टाभिः अष्टभिः। इत्यादि। आमो नित्यत्वान्नामि पुनराकारः अष्टानाम्। अष्टासु अष्टसु॥ जकारान्तो भिषज्शब्दः। ततः स्वादयः सुलुक्॥

२४९ चोः कुः।१।२।८८। चोः कुर्भवति पदान्ते झलि च परे॥ आसन्न इति घोषवतो जस्य तादृशो गः चर्त्वं च। सुपि कुत्वे षत्वे च कृते चर्त्वं च। भिषक् भिषग् भिषजौ भिषजः। इत्यादि। भिषक्षु॥ एवं जन्मभाज् सुकृतभुज् इत्यादयः॥ युज्शब्दात् स्वादयः॥

२५० युजोऽसमासे।१।२।११५। असमासे युजः श्यनप्सुटि नम्भवति॥ युज्यञ्चीति नस्य ङः। अजादौ श्रुत्वेन ञः। युङ् युञ्जौ युञ्जः। इत्यादि॥ समासे न नम्। वियुक् वियुग् वियुजौ वियुजः। इत्यादि॥ धानाभृस्ज्शब्दात् स्वादयः॥

---

१ अयमौश् स्वसम्बन्धिनोरेव भवतीति विज्ञायते। तेन प्रिया अष्टौ येषां ते प्रियाष्टास्तिष्ठन्तीत्यत्र न भवति॥

२ युजृम् योगे। ऋकारनिर्देशात् युजि समाधावित्यत्र न भवति। युजमापन्नाः। असमास इति किं? अश्वयुक् अश्वयुजौ अश्वयुजः। श्यनप्सुटीति किं? युजीः पश्य। युजी कुले॥

**२५१ संयोगस्यादिस्कोर्लुक्** ।१।२।९१। संयोगस्याद्योः सकयोर्लुग्भवति पदान्ते जलि च परे ॥ व्रश्चभ्रस्जेत्यादिना जस्य षः जश्त्वचर्त्वे। अजादौ श्चुत्वेन सस्य शः पुनर्जश्त्वं । धानाभृट् धानाभृड् धानाभृज्जौ धानाभृज्जः । इत्यादि । धानाभृट्त्सु धानाभृट्सु ॥ विश्वसृज्शब्दात् स्वादयः व्रश्चभ्रस्जेत्यादिना जस्य षः । विश्वसृट् विश्वसृड् विश्वसृजौ विश्वसृजः इत्यादि ॥ एवं कंसपरिमृज् देवेज् सम्राज् विभ्राज् इत्यादयः ॥ परिव्राट्शब्दात् स्वादयः । अनडुदित्यादिना जस्य डः । चर्त्वे । परिव्राट् परिव्राड् परिव्राजौ परिव्राजः । इत्यादि ॥ बगडान्ता अप्रसिद्धाः ॥ दकारान्तः सर्वविद्शब्दः । ततः स्वादयः सुलुगादि सुगमं ॥ सर्ववित् सर्वविद् सर्वविदौ सर्वविदः । इत्यादि एवं तत्त्वविद्वेदविदादयः ॥ द्विपाद्शब्दात् स्वादयः सुटि अविशेषः । शसादावजादौ ॥

**२५२ पादोऽपदस्य ग्यसुट्छिण्यादौ पद्** ।१।२।१४४।अपदस्य पादः पद्भवति सुट्छिण्यादिवर्जिते प्रत्यये ग्यां च परतः ॥ वालि पदत्वान्न पद् । द्विपात द्विपाद् द्विपादौ द्विपादः । हे द्विपात् हे द्विपाद् हे द्विपादौ हे द्विपादः । द्विपादं द्विपादौ द्विपदः । द्विपदा द्विपाद्भ्यां द्विपाद्भिः । इत्यादि ॥ एवं सुपाद्चतुष्पादादयः ॥ झकारान्तोऽप्रासिद्धः ॥ भकारान्तो गर्दभ्शब्दः । ततः स्वादयः । बशो भषिति दस्य धः शेषं प्राग्वत् । गर्धप् गर्धब् गर्दभौ गर्दभः । इत्यादि ॥ घढान्तावप्रसिद्धौ ॥ धकारान्तः सुबुध्शब्दः । ततः स्वादयः भषादि । सुभुत् सुभुद् सुबुधौ सुबुधः । इत्यादि । एवं तत्त्वबुध्विश्वबुध्प्रभृतयः ॥ खफान्तावप्रसिद्धौ ॥ छकारान्तः तत्त्वप्राच्छ्

---

१ यदि पदान्ते जलि चेति विशेषणं संयोगस्य न भवति तर्हि दद्भिस्पातामित्यत्र प्राप्नोति । यदि आदिग्रहणं न क्रियते तर्हि वावश्चीश्यत्र अन्तेऽपि प्राप्नोति ॥

२ गर्द शब्दे इति धातुः । 'कृशृशलिकलिगर्दिभ्योऽभच्' इति शाकटायनीयौणादिसूत्रेण अभच्प्रत्यय इति सुबोधिन्यामुक्तम् ॥ ततो गर्दभ इवाचरतीति पश्चात् क्विपि सति 'अतः' इति सूत्रेणाकारस्य लुचि सति गर्दभ् इति स्यात् ॥ तथाच गर्दस्युभैरिति गर्दभः ॥

शब्दः । ततः स्वादयः । व्रश्चेत्यादिना छस्य षः । जश्त्वादि । अजादौ अजाद्याङ इति द्वित्वं । तत्त्वप्राट् तत्त्वप्राड् तत्त्वप्राच्छौ तत्त्वप्राच्छः । इत्यादि ॥ ठकारान्तोऽप्रसिद्धः ॥ थकारान्तः सूत्रग्रथ्शब्दः ततः स्वादयः जश्त्वचर्त्वे । सूत्रग्रत् सूत्रग्रद् सूत्रग्रथौ सूत्रग्रथः । इत्यादि ॥ एवं अग्निमथादयः ॥ चकारान्तः सुवाच्शब्दः ततः स्वादयः कुत्वजश्त्वादि । सुवाक् सुवाग् सुवाचौ सुवाचः इत्यादि ॥ एवं वारिमुच्बहुसेच्प्रभृतयः ॥ कुञ्चशब्दात्स्वादयः मुलुगन्तलुचौ ॥

२५३ युज्यञ्चिकुञ्चः ।१।२।८९। युज्अञ्च्कुञ्च् इत्येतेषां नस्य कुर्भवति पदान्ते जलि च परे ॥ आसन्न इत्यनुनासिको ङः । अजादौ मुपि । ञामित्यादिना नस्य ञः । मुपि ङ्णो गक् डक् शरीति वा गक् । कुङ् कुञ्चौ कुञ्चः । इत्यादि ॥ मूलवृश्च् शब्दात् स्वादयः । संयोगस्येति सलुक् । व्रश्चभ्रस्जेति चस्य षः जश्त्वादि । अजादौ श्चुत्वं । मूलवृट् मूलवृड् मूलवृश्चौ मूलवृश्चः । इत्यादि ॥ एवं वृक्षवृश्चादयः ॥ प्राच्शब्दात् स्वादयः ॥

२५४ उगिदचोऽनेधादेः ।१।२।११४। उगितोऽञ्चतेश्च नम् भवति शावनप्सुटि परे नैधादेः ॥ अमावितौ । प्राग्वत् मुलुगन्तलुचौ । युज्यञ्चीति नस्य ङः । अजादौ ञामिति ञः । शसादावजादौ ॥

२५५ अोऽचः ।१।२।१४१। पदान्तस्याचः अादेशो भवति ङ्यसुट्ङि-ण्यादौ परे ॥ शतावितौ शः सर्वादेशार्थः अदुच्चारणार्थः ॥

२५६ अे ।१।२।१२९। आदेशे पूर्वोऽग्दीर्घो भवति ॥ सन्निकर्षः । हलादौ कुत्वजश्त्वे मुपि षत्वचर्त्वे । प्राङ् प्राञ्चौ प्राञ्चः । हे प्राङ् हे प्रा-

---

१ अपदसञ्ज्ञकावयवो योऽञ्चतिर्लुप्तनकारस्तस्य अ इत्ययमादेशो भवति ॥

२ योगविभागः शीत्यस्य निवृत्त्यर्थः । अोऽच इति यः शकारानुबन्धश्चकारादेशस्तस्मिन् परे पूर्वोऽग्दीर्घो भवति ॥ शकारानुबन्धोपादानादिह न भवति अग्निचित् ॥ अकारस्तदभिव्यक्त्यर्थः । अन्यथा हि मधुश्चुतमाचष्टे इति मधुक् मधुश्चौ मधुश्चः इत्यत्र स्यात् । आदेशो दीर्घश्च प्रत्यच् इत्यादिशब्देषु योजनीयो । पर्जन्यवल्लक्षणप्रवृत्तिर्जले स्थले च वर्षति ॥

ञ्चौ हे प्राञ्चः । प्राञ्चं प्राञ्चौ प्राचः । प्राचा प्राग्भ्यां प्राग्भिः । इत्यादि ॥ एवमपाच्छब्दः ॥ प्रत्यच्शब्दात् स्वादयः प्राच्शब्दवत् प्रक्रिया । प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः । हे प्रत्यङ् हे प्रत्यञ्चौ हे प्रत्यञ्चः । प्रत्यञ्चं प्रत्यञ्चौ प्रतीचः । प्रतीचा प्रत्यग्भ्यां प्रत्यग्भिः । प्रतीचे । इत्यादि ॥ उदच्शब्दस्य सुप्यविशेषः । असुट्यजादौ ॥

२५७ उद ई ।१।२।१४७। उदः परस्यापदस्याचः आदेरीद्भवति य्यसुट्छिण्यादौ परे ॥ शेषं प्राग्वत् । उदङ् उदञ्चौ उदञ्चः । हे उदङ् हे उदञ्चौ हे उदञ्चः । उदञ्चम् उदञ्चौ उदीचः । उदीचा उदग्भ्याम् उदग्भिः । इत्यादि ॥ देवद्यच्शब्दात् स्वादयः । देव अच् इति स्थिते ॥

२५८ विष्वग्देवसर्वादेर्डद्रिगश्चि क्वौ ।२।२।६५। विष्वग्देवशब्दयोः सर्वादेश्च डद्रिग्भवति क्विबन्तेऽञ्चि परे ॥ डकावितौ डोऽन्त्यादिलुगर्थः । क्वौ देशविध्यर्थः । पुनर्यत्र् । शेषं प्राग्वत् । देवद्यङ् देवद्यञ्चौ देवद्यञ्चः । हे देवद्यङ् हे देवद्यञ्चौ हे देवद्यञ्चः । इत्यादि । असुटि । देवद्रीचः । देवद्रीचा देवद्यग्भ्यां देवद्यग्भिः । इत्यादि ॥ एवं विष्वद्यच्सर्वद्यच्तद्यच्यद्यच्प्रभृतयः ॥ अदद्यच्शब्दस्य ॥

२५९ वाऽद्रेः ।१।२।४५। अद्यन्तस्यादसो दस्य मो वा यथासम्भवं भवति ॥ मात्वालो गुः । स च पिनाम्यामन्यस्मिन्नसनिति यत्रादौ कृते पुनर्गुः । अदमुयङ् अदमुयञ्चौ अदमुयञ्चः । हे अदमुयङ् हे अदमुयञ्चौ हे अदमुयञ्चः । अदमुयञ्चं अदमुयञ्चौ । असुटि श्वे दीर्घे च कृते गोर्गित्त्वात् यत्रोऽभावे प्रकृतिभाव एव । अदमुईचः । अदमुईचा अदमुयग्भ्याम् अदमुयग्भिः । इत्यादि ॥ एवम् अमुमुयच्शब्दः ॥ अमुद्यच्शब्दस्य । अमुद्यङ् अमुद्यञ्चौ अमुद्यञ्चः । हे अमुद्यङ् हे अमुद्यञ्चौ हे अमुद्यञ्चः । अमुद्यञ्चम् अमुद्यञ्चौ । असुटि श्वे दीर्घः । अमुद्रीचः । अमुद्रीचा अमुद्यग्भ्याम् अमुद्यग्भिः । इत्यादि ॥ एवम् अदद्यच्शब्दः ॥ सम्यच् सहाच् इति स्थिते ॥

**२६० समूसहस्य सध्रिसमि** ।२।२।६६। सम्‌सहशब्दयोः समि सध्रि इत्यादेशौ क्रमेण भवतः क्विबन्ते अञ्चि परे ॥ यत्र् ततः स्वादयः प्राच्शब्दवत् प्रक्रिया । सम्यङ् सम्यञ्चौ सम्यञ्चः । इत्यादि ॥ एवं सध्र्य-च्शब्दः ॥ तिरस् अच् इति स्थिते ॥

**२६१ तिरसस्तिर्य्ये** ।२।२।६७। तिरःशब्दस्य तिरिर्भवति अञ्चे-रति परतः ॥ ततः स्वादयः । तिर्यङ् तिर्यञ्चौ तिर्यञ्चः । इत्यादि ॥ असुटि श्वे अदभावान्न तिर्यादेशः सस्य श्चुत्वं । तिरश्चः । तिरश्चा तिर्य-ग्भ्यां तिर्यग्भिः । इत्यादि ॥ टकारान्तोऽप्रसिद्धः ॥ तकारान्तो मरुच्छब्दः ततः स्वादयः जश्त्वचर्त्वे । मरुत् मरुद् मरुतौ मरुतः । इत्यादि ॥ एवं हरित्प्रभृतयः ॥ भवतु इति स्थिते उदित् नमाद्यर्थः । ततः स्वादयः । सुटि उगिदचोऽनेघादेरिति नम् । सौ सावतोऽश्वेति दीर्घः सुलुगन्तलुचौ । एकामन्त्रणे ॥

**२६२ वोशनोशनन्नघोभगोभोः स्वमश्चैकामन्त्रणे** ।१।२।१२१ उशनस् अघवत् भगवत् भवत् इत्येतेषां एकामन्त्रणे उशन उशनन् अघोर् भगोर् भोरित्येते आदेशाः क्रमेण वा निपात्यन्ते स्वमोश्च लुक् ॥ पक्षे सुलु-गन्तलुचौ । शेषं सुगमं । भवान् भवन्तौ भवन्तः । हे भोः हे भवन् हे भ-वन्तौ हे भवन्तः । असुटि न नम् । भवतः । भवता भवद्भ्यां भवद्भिः ॥ एवमघवतुभगवतुशब्दौ उदनुबन्धौ । गोमतुधनवतुशब्दादीनामुदनुबन्धानां । गोमान् गोमन्तौ गोमन्तः । हे गोमन् । इत्यादि॥ धनवान् धनवन्तौ धनव-न्तः । इत्यादि भवतुशब्दवत्प्रक्रिया ॥ शत्रन्ताद्भवत्शब्दात् स्वादयः । ऋदित नमाद्यर्थः । सुटि नम् । सावत्वन्तत्वाभावान्न दीर्घः । शेषं प्राग्वत् भवन् भवन्तौ भवन्तः । असुटि । भवतः । भवता भवद्भ्यां भवद्भिः । इत्यादि ॥ एवं पचत्पतत्अदत्दीव्यत्सुन्वत्क्रीणत्नुदत्तन्वत्रुन्धत्चोरयित् योजयित्प्रभृतयः शब्दा नेयाः ॥ महत्शब्दात् स्वादयः । ऋदित् उगित् कार्यार्थः । नमादि ॥

---

१ सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम् ॥

**२६३ स्महतः** ।१।२।१३५। सान्तस्य महतश्च नकारे पूर्वोऽग्दीर्घो भवति श्यनप्सुटि परे न चैकामन्त्रणे ॥ शेषं प्राग्वत्। महान् महान्तौ महान्तः। हे महन् हे महान्तौ हे महान्तः। महान्तं महान्तौ महतः। महता महद्भ्याम् इत्यादि ॥ ददत्‌शब्दात् स्वादयः। ऋदित् उगिदच इति नमि प्राप्ते ॥

**२६४ न नम्** ।१।२।१५। द्विरुक्तस्य जक्षादिपञ्चकस्य च शत्रन्तस्य नम् न भवति ॥ ददत् ददतौ ददतः। इत्यादि ॥ एवं दधत्‌जुह्वत्‌बोभवत्‌पापचत्‌जक्षत्‌जाग्रत्‌दरिद्रत्‌चकासत्‌शासत्‌प्रभृतयः शब्दा नेयाः॥ ककारान्तोऽप्रसिद्धः ॥ पकारान्तः स्वप्‌शब्दः ततः स्वादयः सुटि न्स्वसित्यादिना दीर्घः। स्वाप् स्वापौ स्वापः। इत्यादि भादौ "भेऽपोऽद्। २६१।" इत्यद्। स्वद्भ्यां स्वद्भिः। इत्यादि ॥ शकारान्तो विश्‌शब्दः। ततः स्वादयः। व्रश्चेत्यादिना शस्य षः जश्त्वादि शेषं प्राग्वत्। विट् विड् विशौ विशः। इत्यादि ॥ एवं परिव्रश् आक्रुशादयः ॥ तादृश्‌शब्दात् स्वादयः। अनड्डादिति शस्य गः शेषं सुगमं। तादृक् तादृग् तादृशौ तादृशः। इत्यादि ॥ एवं यादृश्‌अमूदृश्‌एकादृश्‌ईदृश्‌एतादृश्‌त्वादृश्‌भवादृश्‌मादृश्‌कीदृश्‌अन्यादृश्‌सदृश्‌सुदृश्‌प्रभृतयः शब्दा नेयाः ॥ तत्त्वदिश्‌शब्दात् स्वादयः। अनड्डादिति शस्य गः। तत्त्वदिक् तत्त्वदिग् तत्त्वदिशौ तत्त्वदिशः। इत्यादि ॥ गुणस्पृश्‌शब्दात् स्वादयः अनुडवादिति शस्य गः। गुणस्पृक् गुणस्पृग् गुणस्पृशौ गुणस्पृशः। इत्यादि ॥ षकारान्तो विद्विष्‌शब्दः ततः स्वादयः जश्त्वादि। विद्विट् विद्विड् विद्विषौ विद्विषः। इत्यादि ॥ एवं रत्नमुष्‌वैरिपिष्‌कन्याश्लिष्‌प्रभृतयः ॥ षष्‌शब्दस्य बहुत्ववाचित्वात्ततो जसादयः। डतिष्णामिति जश्शसोः लुक् जश्त्वादि। रष्णां सङ्ख्यानामिति

---

१ जक्ष भक्षणहसनयोः। जागृ निद्राक्षये। दरिद्रा दुर्गतौ। चकास दीप्तौ। शासु अनुशिष्टौ ॥

आमो नाम् जश्त्वम् । अनाम्नगरीनवतेरिति निषेधेन ष्टुत्वं । प्रत्यये इत्यनुनासिकः । अतिसृचतुष्ष इति निषेधात् नामि न दीर्घः । षट् षड् । षट् षड् । । षड्भिः । षड्भ्यः । षड्भ्यः । षण्णां । षट्त्सु षट्सु ॥ सकारान्तो वेधस्शब्दः । तसः स्वादयः ॥

२६५ असोऽनेधादेः ।१।२।१२८। असन्तस्याग्दीर्घो भवति सौ परे नैधादेः न चैकामन्त्रणे ॥ सुलुचि सस्य रिविसर्जनीयौ । भादौ सुपि सस्य रित्वोत्वयोरेङ् सुपि रिर्विसर्जनीयश्च । तस्य शरि वेति वा सः । वेधाः वेधसौ वेधसः । हे वेधः हे वेधसौ हे वेधसः । वेधसा वेधोभ्यां वेधोभिरित्यादि । वेधस्सु वेधःसु । एवं चन्द्रमस्सुवचस्प्रभृतयः ॥ दोस्शब्दात् स्वादयः सुलुगादि । अजादौ षत्वं । असुटि पद्न्निति वा दोषन्नादेशः । श्नादि । दोः । दोषौ । दोषः । इत्यादि । दोष्णः दोषः । दोष्णा दोषा दोषभ्यां दोर्भ्याम् इत्यादि ॥ उशनस्शब्दात् स्वादयः । ऋत्सखीत्यादिना सोर्डादेशः डित्यन्त्याजादेर्लुक् । एकामन्त्रणे । वोशनोशनान्निति विकल्पेनादेशद्वयं । पक्षे वेधस्शब्दवत् । अन्यत्नाविशेषः । उशना उशनसौ उशनसः । हे उशन हे उशनन् हे उशनः हे उशनसौ हे उशनसः । इत्यादि वेधस्शब्दवत् ॥ पुरुदंशस्शब्दस्य सोर्डादेशः अन्यत् वेधस्शब्दवत् । पुरुदंशा पुरुदंशसौ पुरुदंशसः ॥ एवमनेहस् शब्दस्य । अनेहा अनेहसौ अनेहसः । इत्यादि ॥ पुम्सुशब्दात् स्वादयः । उदित् नमाद्यर्थः ॥

२६६ पुंसो ङुम् ।१।२।११६। पुंस्शब्दस्य ङुम् भवति श्यनप्सुटि परे ॥ ङ इत् अन्त्यादेशार्थः । नम् । स्महत इति दीर्घः सुलुगन्तलुचौ । शल्यनुस्वारः । हलादौ पदस्येति सुलुक् । मस्य परस्वोऽनुनासिकोऽनुस्वारो वा । सुंप्यनुस्वार एव । शर्नम इत्यत्र नम्वचनात् नमादेशानुस्वारस्यैव शरि ग्रहणान्मकारादेशानुस्वारात्परस्य सस्य षिर्न भवति । पुमान्

---

१ ऊष्मणां निरनुनासिकत्वेन 'मम्बो हलि तौ । ४७१' इत्यनुनासिकप्राप्त्यभावात् पुंसो मकारस्य "शल्यनुस्वारः । ४६" इत्यनुस्वारो भवति ॥

पुमांसौ पुमांसः। हे पुमन् हे पुमांसौ हे पुमांसः । पुमांसं पुमांसौ पुंसः। पुंसा पुम्भ्यां पुम्भिः। पुंसे पुम्भ्यां पुम्भ्यः । पुंसः पुम्भ्यां पुम्भ्यः । पुंसः पुंसोः पुंसां । पुंसि पुंसोः पुंसु ॥ श्रेयसुशब्दात् स्वादयः उदित् नमादि । स्महत इति दीर्घः शेषं प्राग्वत् । श्रेयान् श्रेयांसौ श्रेयांसः । हे श्रेयन् हे श्रेयांसौ हे श्रेयांसः । श्रेयांसं श्रेयांसौ श्रेयसः । श्रेयसा श्रेयोभ्यां श्रेयोभिः । इत्यादि ॥ एवं गरीयसुमहीयसुकनीयसुनेदीयसुप्रभृतयः ॥ विद्वसुशब्दात् स्वादयः । उदित् । मुख्यविशेषः । असुटि ॥

२६७ क्वस उस् ।१।२।१४५। अपदस्य क्वस उस् भवति य्यसुट्छिण्यावौ परे ॥ सस्य षिः । हलादौ अक्वसिति प्रतिषेधान्न रिः । जश्त्वेन सस्य दः सुपि चर्त्वं । विद्वान् विद्वांसौ विद्वांसः । हे विद्वन् हे विद्वांसौ हे विद्वांसः । विद्वांसं विद्वांसौ विदुषः । विदुषा विद्वद्भ्यां विद्वद्भिः । विदुषे विद्वद्भ्यां विद्वद्भ्यः । विदुषः विद्वद्भ्यां विद्वद्भ्यः । विदुषः विदुषोः विदुषां । विदुषि विदुषोः विद्वत्सु ॥ एवं पेचिवसु । असुटि क्वस उसि निमित्ताभावान्नैमित्तिकस्याप्यभाव इति नेट् । पेचुषः पेचुषा । इत्यादि ॥ एवमनाश्वसुप्रभृतयः ॥ अनुस्वारविसर्जनीयजिह्वामूलीयोपध्मानीयान्ता अप्रसिद्धाः ॥

॥ इति हलन्ताः पुल्लिङ्गाः ॥

## ॥ अथ हलन्तास्त्रीलिङ्गा उच्यन्ते ॥

तत्र हकारान्तः उष्णिह्शब्दः ततः स्वादयः । अनडुदिति हस्य गः चर्त्वं च शेषं प्राग्वत् । उष्णिक् उष्णिग् उष्णिहौ उष्णिहः । इत्यादि ॥ उपानह्शब्दात् स्वादयः ॥

२६८ नहो धः ।१।२।८७। नहो धातोर्हस्य धो भवति पदान्ते जलि च परे ॥ जश्त्वादि । उपानत् उपानद् उपानहौ उपानहः । इत्यादि ॥ गुहलिहादीनां पुंवद्रूपं नेयं ॥ यान्तोऽप्रसिद्धः ॥ वकारान्तो दिव्शब्दः । ततः स्वादयः सुदिव्शब्दवत् । द्यौः दिवौ दिवः । इत्यादि ॥ रेफान्तो गिर्शब्दः।

ततः स्वादयः । सुलुक् । धातोर्वोरिति दीर्घः । विसर्जनीयः । हलादौ तस्य रः । सुपि दीर्घरेफौ । गीः गिरौ गिरः । इत्यादि । एवं धुर्पुरादयः ॥ चतुर्शब्दाज्जसादयः तस्य त्रिचतुरोः स्त्रियां तिसृचतसृ इति चतसृभावः । रोऽनशोऽच्युरिति ऋतो रेफः । नामि न तिसृचतसृ इति निषेधान्न दीर्घः । शेषं सुगमं । चतस्रः । हे चतस्रः । चतस्रः । चतसृभिः । चतसृभ्यः । चतसृभ्यः । चतसृणां । चतसृषु ॥ लवान्तावप्रसिद्धौ ॥ मकारान्तः प्रियप्रदाम्शब्दः । ततः स्वादयः पुंवत् । प्रियप्रदान् प्रियप्रदामौ प्रियप्रदामः । इत्यादि ॥ ङकारान्तोऽप्रसिद्धः ॥ णकारान्तः सुगण्शब्दः पुंवत् । नकारान्तः सीमन्शब्दः । ततः स्वादयः राजन्शब्दवत् ॥ सीमा सीमानौ सीमानः । इत्यादि ॥ एवं सुदामन्सुराजन्बहुतक्षन्प्रभृतयः ॥ जकारान्तः स्रज्शब्दः । ततः स्वादयः भिषज्शब्दवत् । स्रक् स्रग् स्रजौ स्रजः । इत्यादि । एवं रुग्भाजादयः ॥ बगडान्ता अप्रसिद्धाः ॥ दकारान्तो विद्शब्दः ततः स्वादयः । वित् विद् विदौ विदः । इत्यादि । एवं दृषद्शरद्सम्पद्विपद्रुदादयः ॥ झकारान्तोऽप्रसिद्धः ॥ भकारान्तः ककुभ्शब्दः । ततः स्वादयः । ककुप् ककुब् ककुभौ ककुभः । इत्यादि । एवं त्रिष्टुभ्अनुष्टुभ्प्रभृतयः ॥ घढान्तावप्रसिद्धौ ॥ धकारान्तः समिध्शब्दः । ततः स्वादयः । समित् समिद् समिधौ समिधः । इत्यादि । एवं युध्क्रुध्क्षुध्प्रभृतयः ॥ खफान्तावप्रसिद्धौ ॥ छकारान्तः तत्त्वप्राच्छ्शब्दः पुंवत् ॥ ठकारान्तोऽप्रसिद्धः ॥ थकारान्तोऽग्निमथशब्दः । ततः स्वादयः पुंवत् ॥ चकारान्तो रुच्शब्दः । ततः स्वादयः । रुक् रुग् रुचौ रुचः । इत्यादि । एवं वाच्त्वच्स्रुच्प्रभृतयः ॥ टान्तोऽप्रसिद्धः ॥ तकारान्तः विद्युत्शब्दः ततः स्वादयः ॥ विद्युत् विद्युद् विद्युतौ विद्युतः । इत्यादि । एवं त्रिंशत्चत्वारिंशत्पञ्चाशत्प्रभृतयः ॥ कान्तोऽप्रसिद्धः ॥ षकारान्तोऽरुष्शब्दः । ततो रुढिवशा-

१ यद्यपि अतिसृचतुष्ष इत्यत्र चतुर् शब्दस्यैव निषेधः स्यात् । तथापि 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति न्यायात्तदादेशभूतस्य चतसृशब्दस्यापि दीर्घनिषेधः ॥

जसादयः । जसि तपूस्वसित्यादिना दीर्घः । भादौ सुपि ॥

२६९ भेऽपोऽत् ।१।२।११८। अपोऽद्भवति भादौ सुपि परे॥ आपः । हे आपः । अपः । अद्भिः । अद्भ्यः । अद्भ्यः । अपाम् । अप्सु ॥ शकारान्तो दृश्शब्दः तादृश्शब्दवत् । एवं दिश्स्पृश्प्रभृतयः ॥ षकारान्तो रुष्शब्दः । ततः स्वादयः सुलुक् । रुट् रुड् रुषौ रुषः । इत्यादि । एवं त्विष्विप्रुष्गुणमुष्प्रभृतयः ॥ दधृष्शब्दात् स्वादयः । अनडुदिति षस्य गः । दधृक् दधृग् दधृषौ दधृषः । इत्यादि ॥ सकारान्तोऽर्चिस्शब्दः । ततः स्वादयः । सुलुक् सस्य रिविसर्जनीयौ ॥ अजादौ सस्य षिः । हलादौ विसर्जनीयस्य रः । अर्चिः अर्चिषौ अर्चिषः । हे अर्चिः हे अर्चिषौ हे अर्चिषः । अर्चिषम् अर्चिषौ अर्चिषः । अर्चिषा अर्चिर्भ्याम् अर्चिर्भिः । इत्यादि ॥ सुवयस् सुपयस् इत्यादीनां वेधस्शब्दवत् ॥ अनुस्वाराद्यन्ता अप्रसिद्धाः ॥

॥ इति हलन्ताः स्त्रीलिङ्गाः ॥

## ॥ अथ हलन्ता नपुंसकलिङ्गा उच्यन्ते ॥

तत्र हकारान्तो गोदुह्शब्दः । ततः स्वादयः । स्वमोश्च लुक् । हस्य घः । बशो भष् । अक्षरादि । औतो शी । जश्शसोश्शी ॥

२७० जश्लाम् ।१।२।१२। अचः परा या जश्जातिः तदन्तस्य नपो नम् नित्यं भवति शौ परे ॥ नस्यानुस्वारः टादौ पुंवत् । गोधुक् गोधुग्

१ भादौ सुपीति किं? अप्सु । अब्भक्षः । अब्भिक्षुः ।

२ जश्लामिति "जातिर्बहुवद्वाऽऽख्यायाम् ।१।३।९४। आत्यर्थः एक आख्यायां नामधेये अभिधेयत्वेन वर्तमानो बहुवद्वा भवति ॥ सम्पन्नो यवः । सम्पन्ना यवाः । सम्पन्नो व्रीहिः । सम्पन्ना व्रीहयः । एकेति किं? शोभने अक्षिणी कलिङ्गेषु । अत्र सर्वेतरत्रैव पुंस्त्वबहुवचनिविक्षा ॥" इति सूत्रेण जातौ बहुवचनम् । जश्लामिति बहुवचनेन या जश्जातिर्जातिवचनेन जकारादयो वर्णाः सा जातिः बहुग्रहणेन निर्दिश्यते ॥ प्रक्रियायां अचः परा इति किं? बहूर्जे सूर्जे । अत्र बहव ऊर्जा एषां ते, शोभना ऊर्जा एषां ते इति समासे शिः । तत्रोकारादचः परो रेफः न तु जल् । अतः तु जकारो नासावर्चः पर इत्यत्र नम् न स्यात् । असंस्पर्शिनम् नम् स्यादेव ॥

गोदुही गोदुंहि। हे-२। पुनरपि। गोधुक् गोधुग् गोदुही गोदुंहि। गोदुहा गोधुग्भ्यां गोधुग्भिः। इत्यादि। एवं विश्वलिहादयः॥ यवान्तावप्रसिद्धौ॥ रेफान्तो वार्शब्दः। ततः स्वादयः। स्वमोश्च लुक्। जश्शसोश्शी अजलन्तत्वान्न नुम्। शेषं प्राग्वत्। वाः वारी वारि। हे वाः हे वारी हे वारि। पुनरपि। वाः वारी वारि। वारा वार्भ्यां वार्भिः। इत्यादि॥ चतुर्शब्दा-ज्जसादयः। जश्शसोश्शी उतो वाः। शेषं प्राग्वत्। चत्वारि। हे चत्वारि। चतुर्भिः। इत्यादि॥ लशान्तावप्रसिद्धौ॥ मकारान्तः प्रियप्रदाम्शब्दः। ततः स्वादयः। पूर्ववत्प्रक्रिया। प्रियप्रदान् प्रियप्रदामी प्रियप्रदामि। इत्यादि॥ ङकारान्तोऽप्रसिद्धः॥ णकारान्तः सुगण्शब्दः। ततः स्वादयः। सुगण् सुगणी सुगणि। इत्यादि॥ नकारान्तः कर्मन्शब्दः ततः स्वादयः। स्वमोः लुचि। नलुक्। शौ न्यगिति दीर्घः। एकामन्त्रणे॥

२७१ अलुग्वा।१।२।३। एकामन्त्रणे न ङान्लुगिति या नकारस्या-लुक् सा नपुंसके वा भवति॥ पक्षे नस्य लुक् शेषं प्राग्वत्। कर्म कर्मणी कर्माणि। हे कर्मन् हे कर्म हे कर्मणी हे कर्माणि। कर्म कर्मणी कर्माणि। कर्मणा कर्मभ्यां कर्मभिः। इत्यादि। एवं चर्मन्वर्मन्नर्मन्शर्मन्प्रभृतयः॥ अहन्शब्दात् स्वादयः। स्वमोः लुक्। सजूरहस्स इति नस्य रिः तस्य विसर्जनीयः। भ्यां ङियोर्वेति वा श्नः। हलादौ नस्य रिः उत्वमेङ् च। सुपि विसर्जनीयः सश्च वा। अहः अह्नी अहनी अहानि। हे अहः हे अह्नी हे अहनी हे अहानि। अहः अह्नी अहनी अहानि। अह्ना अहो-भ्याम् अहोभिः। अह्ने अहोभ्याम् अहोभ्यः। अह्नः अहोभ्याम् अहोभ्यः। अह्नः अह्नोः अह्नाम्। अह्नि अहनि अह्नोः अहस्सु अहःसु॥ जकारान्तः असृज्शब्दः। ततः स्वादयः। जसादि। टादौ पद्भित्यादिना वा असन्ना-देशः। पुनः प्राग्वत् श्नादि। शेषं सुगमम्। असृक् असृग् असृजी असृञ्जि। हे असृक् हे असृग् हे असृजी हे असृञ्जि। असृजा अस्ना असृग्भ्याम् असभ्याम् असृग्भिः असभिः। असृजे अस्ने असृग्भ्याम् असभ्याम् असृग्भ्यः असभ्यः। असृजः अस्नः असृग्भ्याम् असभ्याम्

पुनरनुस्वारषत्वे । आर्चिः अर्चिषी अर्चींषि । इत्यादि । एवं सर्पिर्मुहुवि-सम्भृतरः ॥

॥ इति हलन्ता नपुंसकलिङ्गाः ॥

## ॥ अथालिङ्गौ युष्मदस्मच्छब्दावुच्येते ॥

ततः स्वादयः " युष्मदस्मद्भ्यामाकम् ।२८७ ,, इत्यधिकृत्य ॥

**२७२ त्वाहौ सौ** ।१।२।१८७। युष्मदस्मदित्येतयोः त्व अह इत्येतावादेशौ यथासङ्ख्यं भवतः तत्सम्बन्धिन्यन्यसंबन्धिनि वा सौ परे ॥ युष्मदस्मत्प्रकरणासमाप्तेः सुपः तत्सम्बन्ध्यन्यसम्बन्धित्वं वाच्यं ॥

**२७३ ङेसुटोऽम्** ।१।२।१८०। युष्मदस्मद्भ्यां परयोर्ङेसुटोरम् भवति ॥ मत्वलुचौ ॥

**२७७ मन्तस्य युवावौ द्वयोः** ।१।२।१८५। द्वित्वे युष्मदस्मदोर्मपर्यन्तस्य रूपस्य युवावौ भवतः सुपि परे ॥

**२७८ अमौत्हल्या:** ।१।२।१८३। युष्मदस्मदोराद् भवति अमि औति हलादौ च सुपि परे ॥ 'एद्' इत्यतो लुक् । अमूदावौ । जसि ॥

**२७९ यूयवयौ जसि** ।१।२।१८८। युष्मदस्मदोर्यूयवयौ भवतो जसि परे ॥ अमादि । आमन्त्रणेऽप्येवम् । अमि ॥

---

१ अलिङ्गावव्ययकालिङ्गौ लिङ्गनिमित्तशब्दसंस्कारानर्हावित्यर्थः । पञ्च, षट्, कति, उच्चैः, नीचैः, यूयं वयम् ॥

२ अतिक्रान्तस्त्वामतित्वम् । अत्यहम् । अतिक्रान्तौ युवामतित्वं अत्यहम् । अतिक्रान्तो युष्मानतित्वं अत्यहम् ॥

३ द्वित्वविशिष्टेऽर्थे वर्तमानयोर्युष्मदस्मदोर्यो मकारोऽवसानावयवस्तस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा सुपि परे यथाक्रमं युव अव इत्येतावादेशौ भवतः ॥ अतिक्रान्तो युवां अतियुवाम् । अत्यावाम् ॥ अतिक्रान्तं युवां अतियुवाम् अत्यावाम् ॥ अतिक्रान्तान् युवां अतियुवान् अत्यावान् ॥ एवं अतियुवया अत्यावया इत्यादि नेयम् । मन्तस्येति किं? युवयोरित्यादि ॥

४ अमौत्हलीति किं? त्वं अहं त्वत् मत् ॥ औतिग्रहणेन "ङेसुटोऽम्" इति सूत्रेण कृतेऽमि परे भवतीत्यर्थः ॥

५ सर्वनाम्नामामन्त्रणं नास्तीति मन्यन्ते इति रूपसिद्धावुक्तत्वादामन्त्रणविधिर्विकल्पनीयः ॥

२८० त्वमौ प्रत्ययोत्तरपदे चैकस्मिन् ।१।२।१८६। एकत्वे वर्तमानयोर्युष्मदस्मदोर्मपर्यन्तस्य त्वमौ भवतः सुपि प्रत्ययोत्तरपदयोश्च परतः ॥ अत्वादि औटि पूर्ववत् । शसि ॥

२८१ ङेङशोभ्यसोऽम्नाम्यं ।१।२।१७८। युष्मदस्मद्भ्यां परस्य ङ्पोऽश् भवति शस आदेर्नः चतुर्थीबहुवचनस्य भ्यसः अभ्यम् ॥ आत्वादि । टायां त्वमौ ॥

२८२ यौसि यः ।१।२।१८४। युष्मदस्मदोर्यो भवति ङिटौस्सु परतः ॥ अदित् एद इत्यतो लुक् । भ्यामि युवावौ आत्वदीर्घौ । भिस्यभ्यात्वदीर्घौ ॥ ङयि ॥

२८३ तुभ्यमह्यौ ङयि ।१।२।१८९। युष्मदस्मदोस्तुभ्यमह्यौ भवतो ङयि परे ॥ ङेरमादि । भ्यामि प्राग्वत् भ्यसः अभ्यमि ॥

२८४ दोर्लुङ् ।१।२।१८१। दान्तयोः युष्मदस्मदोर्लुग्भवति सुपि परे ॥ एद इति लुक् ॥ ङसौ त्वमौ ॥

२८५ भ्योऽस तोऽत् ।१।२।१७९। युष्मदस्मद्भ्यां परस्य ङसेः भ्यसश्च अत् भवति ॥ दोर्लुगलुग्गौ । वा चर्वे । भ्यामि प्राग्वत् । भ्यसोऽदादि । ङसि ॥

२८६ तवममौ ङसि ।१।२।१९०। युष्मदस्मदोस्तवममौ भवतो ङसि परे ॥ ङसोऽश् । शित्वात्सर्वस्य । एद इति लुक् । ओसि युवावौ यत्वादि । आमि ॥

२८७ युष्मदस्मद्भ्यामाकं ।१।२।१७७। युष्मदस्मद्भ्यां परस्याम आकं भवति ॥ दोर्लुगादि । ङौ त्वमौ यत्वादि । ओसि प्राग्वत् सुप्यात्वादि । त्वं युवां यूयं । हे त्वं हे युवां हे यूयं । त्वां युवां युष्मान् । त्वया युवाभ्यां युष्माभिः । तुभ्यं युवाभ्यां युष्मभ्यं । त्वत् त्वद् युवाभ्यां युष्मत् युष्मद् ।

१ भ्यसा सहचरितोऽस् । भ्योऽस् तस्य भ्योसः । असः पञ्चम्येकवचनस्य न तु षष्ठ्येकवचनस्य । असहचरितस्य भ्यसः पञ्चमीबहुवचनस्य ग्रहणं न तु चतुर्थीबहुवचनस्य । तयोरेकस्वरूपेण व्यवस्थानेऽपि साहचर्यान्निर्णीयते ॥

तव युवयोः युष्माकं। त्वयि युवयोः युष्मासु ॥ अहम् आवां वयम्। माम् आवाम् अस्मान्। मया आवाभ्याम् अस्माभिः। मह्यम् आवाभ्याम् अस्मभ्यम्। मत् मद् आवाभ्याम् अस्मत् अस्मद्। मम आवयोः अस्माकं। मयि आवयोः अस्मासु ॥

२८८ तिङा वाक्यं ।१।१।६१। तिङन्तस्य विशेषणं तेन सह वाक्यसंज्ञं भवति ॥

२८९ पदाद्वाक्यस्य वस्नसौ युष्विभक्तेः ।१।२।१९१। स्ववाक्यावयवात्पदात्परयोः द्वितीयाचतुर्थीषष्ठयन्तयोर्युष्मदस्मदोर्वस्नसौ यथासङ्ख्यं वा भवतः ॥ धर्मो वो रक्षतु। धर्मो युष्मान् रक्षतु। दानं वो दीयते। दानं युष्मभ्यं दीयते। तिङन्तादिपदाप्रयोगेऽपि तदर्थान्वयाद्वाक्यत्वं। शीलं वः स्वं। शीलं युष्माकं स्वं। धर्मो नो रक्षतु। धर्मोऽस्मान्रक्षतु। दानं नो दीयते। दानं अस्मभ्यं दीयते। शीलं नः स्वं। शीलमस्माकं स्वं ॥

२९० वान्नावौ द्वित्वे ।१।२।१९२। द्वित्वे वर्तमानयोर्यथोक्तविशेषणयोः युष्मदस्मदोः वान्नावित्येतावादेशौ यथासङ्ख्यं वा भवतः ॥ धर्मो वां रक्षतु। धर्मो युवां रक्षतु। दानं वां दीयते। दानं युवाभ्यां दीयते। शीलं वां स्व। शीलं युवयोः स्वं। धर्मो नौ रक्षतु। धर्मः आवां रक्षतु। दानं नौ दीयते। दानमावाभ्यां दीयते। शीलं नौ स्वं। शीलमावयोः स्वं ॥

२९१ तेमयावेकत्वे ।१।२।१९३। एकत्वे वर्तमानयोर्यथोक्तविशेषणयोर्युष्मदस्मदोर्यथासङ्ख्यं ते मे इत्यादेशौ वा भवतः ॥ दानं ते दीयते।

---

२ एकवचनसामर्थ्यादेकक्रियया वाक्यम्। आकांक्षायोग्यतासत्तिसमन्वयोत्र कारणत्रयम्। एतल्लक्षण यस्मिन्वर्तते तदेव वाक्यम्। इह साक्षात्परम्परया वा तिङन्तस्य विशेषणं प्रयुज्यमानमप्रयुज्यमानं वा तेन तिङन्तेन प्रयुज्यमानेनाप्रयुज्यमानेन वा सह वाक्यसञ्ज्ञं भवति ॥ धर्मो वो रक्षतु। शालीनां ते ओदनं ददाति। देवदत्तेन वो दातव्यम्। साकांक्षत्वेऽपि तिङन्तभेदे वाक्यभेदार्थं वचनम्। ओदनं पच तव भविष्यति। पच तव भविष्यति। ओदनं भविष्यति मम भविष्यति। अर्थात्प्रकरणाद्वाऽवगतावप्रयोगः ॥

दानं तुभ्यं दीयते । शीलं ते स्वं । शीलं तव स्वं । दानं मे दीयते । दानं मह्यं दीयते । शीलं मे स्वं । शीलं मम स्वं ॥

**२९२ त्वामौ द्वितीयायाः** ।१।२।१९४। एकत्वे वर्तमानयोः यथोक्तविशेषणयोर्युष्मदस्मदोर्यथासङ्ख्यं द्वितीयान्तयोः त्वा मा इत्यादेशौ वा भवतः ॥ धर्मस्त्वा रक्षतु । धर्मस्त्वां रक्षतु । धर्मो मा रक्षतु । धर्मो मां रक्षतु ॥

**२९३ नेवामन्त्र्यं पूर्वं** ।१।२।१९५। युष्मदस्मद्भ्यां पूर्वमामन्त्र्यपदं नेव असदिव भवति ॥ असत्त्वे पदात्परत्वाभावात् तयोर्वस्नसादि न भवति । हे जना युष्मान्रक्षतु धर्मः इत्यादि । हे जना अस्मान्रक्षतु धर्म इत्यादि । यत्र त्वामन्त्र्यपदात्पूर्वं पदान्तरमस्ति तत्र पदात्परत्वाद्वस्नसादि भवति । धर्मो हे जना वो रक्षतु । धर्मो हे जना नो रक्षतु इत्यादि । राजते

---

१ इवग्रहणमामन्त्र्यशब्दश्रवणार्थम् । पूर्वस्याविद्यमानवद्भावो व्यवहितस्यापि अविद्यमानवद्भावार्थः । अन्यथा हि नामन्त्र्यादित्येवोच्येत । तेन, देवदत्त धर्मो नो रक्षतु इत्यत्र "पदात्प्रथमाया वा ।१।२।२०२। पदात्परं यत्प्रथमान्तं पदं तस्मात्परयोर्युष्मदस्मदोरन्वादेशे यदुक्तं वस्नसादि तद्वा भवति ॥ यूयं विनीतास्तद्गुरवो वो । यूयं विनीतास्तद्गुरवो युष्मान् । वयं विनीतास्तद्गुरवो नः । वयं विनीतास्तद्गुरवोऽस्मान् । युवां सुशीलौ तद्गुरवो वां । तद्गुरवो युवां । आवां सुशीलौ तद्गुरवो नौ । तद्गुरवो आवां मानयन्ति ॥ अथो क्षमा तत् श्रमणास्ते-तुभ्यम् । अथो क्षमा तत् श्रमणा मे । अथो क्षमा तत् श्रमणा मह्यम् ज्ञानं प्रयच्छन्ति ॥ धनवाँस्त्वं तल्लोकस्त्वा-त्वां । धनवानहं तल्लोको मा तल्लोको मां मानयति ॥ इति चिन्तामणौ" इति विकल्पो न भवति ॥ स्वरूपश्रुत्यर्थमामन्त्र्यपदं आदेशाभावार्थं नेवेति पदम् । आमन्त्र्यते सम्बोध्यते यत्पदं तदामन्त्र्यम् । अविद्यमानत्वे प्रयोजनं वस्नसाद्यभावादि । इवग्रहणं श्रवणार्थम् । आमन्त्र्यमिति किं? धर्मो वो रक्षतु ॥ पूर्वमिति किं? मयैतत्सर्वमाख्यातं युष्माकं मो मुनिपुङ्गवाः । अस्याsसत्त्वेऽत्र पादाद्योरिति प्रतिषेधो न स्यात् ॥

जिनराज ते ॥ "ने ।१।२।१९७।" इत्यधिकृत्य ॥

**२९४ पादाद्योः** ।१।२।१९८। पादाद्योः तयोः वस्नसादि न भवति ॥

त्रिलोकनगराधीशो युष्मान् पातु जिनेश्वरः ।

तस्यैव शासनं पुण्यमस्माकं मोक्षकारणम् ॥ इत्यादि ॥

**२९५ मनसीक्षार्थैः** ।१।२।१९९। मनसीक्षार्थैः धातुभिर्योगे तयोर्वस्नसादि न भवति ॥ जनो युष्मान् समीक्षते । जनोऽस्मान् प्रेक्षते इत्यादि ॥ मनसीति किं? जनो वः पश्यति चक्षुषा ॥

**२९६ चवाऽहहैवयोगे** ।१।२।२००। चादिभिर्योगे सम्बन्धे सति तयोर्वस्नसादि न भवति ॥ जनो युष्मांश्च पश्यति । दानं युष्मभ्यं वा दीयते । इदं युष्माकमह शीलं । जनो युवां ह पश्यति । जनस्त्वामेव पश्यति इत्यादि । एवमस्मदोऽपि ॥

**२९७ नित्यमन्वादेशे** ।१।२।२०१। कथितस्य कथनमन्वादेशः तस्मिन् यथोक्तविशेषणयोर्युष्मदस्मदोर्वसन्नादि नित्यं भवति । यूयं विनीतास्तद्वो गुरवो मानयन्ति । वयं विनीतास्तन्नो गुरवो मानयन्ति इत्यादि ॥ अन्वादेशे नित्यविधानात्पूर्वत्र विकल्पः ॥

## ॥ अथाव्ययान्युच्यन्ते ॥

**२९८ तस्वैनङामघण्तस्याङ्क्त्वान्तुन्तिसुङ्सस्वाभस्वरा-**[3]

१आमन्त्र्यपदं विशेष्यं । युष्मदस्मद्भ्यां पूर्वमामन्त्र्यपदे तद्विशेषणे परे न नेव अविद्यमानवन्न भवति । भोः साधू सुविहितौ वां शरणं प्रपद्ये । भोः साधो सुविहित त्वां शरणं प्रपद्ये । भोः साधो सुविहित नो रक्ष । भोः साधो सुविहित मा रक्ष ॥

२ ईक्षा दर्शनं तदर्थैर्धातुभिः सहितं यद्वाक्यं तस्य पदात्परयोर्युष्मदस्मदोर्यदुक्तं वस्नसादि तन्न भवति । सा चेदीक्षा मनसि मनोविषया भवति ॥

३ तस् वत् ङम् अघण्तसि आम् क्त्वा अम् तुम् इति प्रत्ययाः । प्रत्ययश्च प्रकृत्यविनाभावीति एतत्प्रत्ययान्तं शब्दस्वरूपमिति विज्ञेयम् । द्विवारं तस् किं? इति चेत् "व्याश्रयो तस् ।९८१" इति यः तस् सः अघण्तसीति प्रत्याहारे उपात्तः । अतः "एकदिशि ।७४४" इत्यनेन कृततसन्तस्य ग्रहणार्थं पुनस्तस्ग्रहणम् ॥ वत् इत्यादिप्रत्ययांसमपि तद्धित एव गृह्यते तेन पचतः इत्यादावव्ययत्वं नास्ति ॥ आमिति

**दीन्यव्ययम्**।१।१।३९। ॥ तस् वत् ङां इत्येतदन्तानि धण्वर्जिततस्यन्तानि आम् क्त्वा अम् तुम् इत्येतदन्तानि तिसंज्ञानि सुङ्सुप्रतिरूपाणि स्वरादीनि च शब्दरूपाण्यव्ययसंज्ञानि भवन्ति ॥ तस् पीलुमूलतस् इति स्थिते ॥

**२९९ अव्ययात्स्वौजस्**[1] ।१।३।९७। अव्ययात् स्वौजसः प्रत्ययाः परे भवन्ति ॥

**३०० अव्ययस्य** ।१।२।१५४। अव्ययस्य सम्बन्धिनः सुपः लुग्भवति॥ पदसंज्ञायां सस्य रित्वादि। पीलुमूलतो विद्योतते विद्युत्। एवमन्यत्रापि॥ वत मुनिवद्वृत्तमस्य ॥ ङाम् । किंतरां ॥ तसि। रावणतः रामतः बहुशः ॥ आम्। द्रयांचक्रे ॥ क्त्वा भूत्वा ॥ अम्। पूर्वभोजं ॥ तुम् । कर्तुं ॥ ति। पटपटाकृत्य प्राध्वंकृत्य ॥ सुङ्प्रतिरूपं । रात्रौ । वेलायाम् ॥ अस्ति स्यात् ॥ ससुप्रतिरूपाणि ततः। कथं ॥ स्वरादि । स्वस्तिष्ठति अन्तस्तिष्ठति प्रातर्गच्छतीत्यादि ॥

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥

॥ इति नामसंग्रहः ॥

---

लिङ्लेडादेशस्य ग्रहणम् न तु षष्ठीबहुवचनस्य। तत्कथमिति चेत् ऐकान्तिकानैकान्तिकसम्भवे हि ऐकान्तिकप्रत्ययो भवति। षष्ठीबहुवचनं तु क्वचिदाम् क्वचिदाकमित्यादेशकं प्राप्नोतीत्यनैकान्तिकामिति तस्य ग्रहणं न भवति। लिङ्लेडादेशस्याम् ऐकान्तिक एवेति तस्य ग्रहणम्। क्त्वा इति ककारोऽसन्देहार्थः। त्वामित्युच्यमाने भावेत्वतलिति त्वप्रत्ययो वेति सन्देहः ॥ अमिति न द्वितीयैकवचनग्रहणम्। अनुबन्धस्याप्रत्ययरूपत्वात् णमुल्खमुञावनुबन्धौ हित्वा अमिति रूपस्य ग्रहणम् ॥ पीलुर्गुडफलस्रंसीति कोशः ॥

1 सूत्रपाठो द्विविधः अवग्रहपाठः संहितापाठश्चेति। तत्रावग्रहपाठः पदभ्रान्तिव्युदासार्थः। संहितापाठो ग्रन्थग्रहणार्थः। जसो जकारोऽवग्रहपाठ औकारस्यासन्देहार्थः। अत्र औजस्ग्रहणमुत्तरार्थम् ॥

## ॥ अथ स्त्रीप्रत्ययान्ता उच्यन्ते ॥

“ त्रिचतुरः स्त्रियां तिसृचतसृ १९२ ” इत्यधिकृत्य ॥

**३०१ गुरूपोत्तमस्यानार्षेऽपत्येऽणिञः ष्यङ्** ।१।३।२। अनार्षेऽपत्ये अणिञन्तस्य गुरूपोत्तमस्य स्त्रियां ष्यङ् भवति ॥ त्र्यादीनां वर्णानाम् अन्त्यमुत्तमं तस्य समीपमुपोत्तमं । षङावितौ । षकारः ष्यदिति प्रत्याहारार्थः । ङकारः अन्त्यादेशार्थः । आङ् कारीषगन्ध्या देवदत्त्या । गुरूपोत्तमस्येति किम् औपगवी दाक्षी ॥

**३०२ नृदुगिदञ्चोऽस्वस्रादेर्ङी** ।१।३।७। स्त्रियां वर्तमानान्नान्तादृदन्तादुगिदन्तादञ्चत्यन्ताच्च ङीप्रत्ययः परो भवति न स्वस्रादेः ॥ ङ इत् । नान्तात् राज्ञी । श्वादि । सोर्हल्ङ्याडिति लुक् । ऋतः ॥

**३०३ क्रोष्टोर्ॠ** ।१।३।१। स्त्रियां वर्तमानस्य क्रोष्टुशब्दस्य ऋदादेशो भवति ॥ क्रोष्ट्री कर्त्री । उगितः । भवती यान्ती याती भवन्ती । अञ्चः । प्राची अपाची प्रतीची उदीची समीची सध्रीची तिरश्ची । अस्वस्रादेरिति किं । स्वसा दुहिता ननान्दा माता याता ॥

**३०४ पादो वा** ।१।३।९। स्त्रियां पादन्तात् ङी वा भवति ॥ ङ्यां पादोऽपदस्येति पद्भावः । द्विपदी द्विपाद् ॥

---

१ अनुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः । इति गुरुलक्षणम् ॥ उत्तमशब्दोऽव्युत्पन्नः । त्र्यादीनां वर्णानामन्त्य उत्तमः । उत्तमस्य समीपमुपोत्तमं गुरुसञ्ज्ञकमुपोत्तमं यस्यासौ तस्य ॥ ऋषिसम्बन्धि आर्षम् । अनार्ष इति किं? वासिष्ठः । अपत्य इति किं? अहिच्छत्रेण जाता आहिच्छत्री । स्त्रिया इति अणिञ इति विशेषणत्वादत्र न भवति । करीषगन्धेरपत्यं पुमान् कारीषगन्धः बहवः कारीषगन्धाः यस्यां स्थाल्यां बहुकारीषगन्धी इत्यत्र टिड्ढाणिति ङी । सौधर्मी गौरादित्वात् ङी ॥

२ ऋदिति तकारः किं? गॄ इत्यत्र न भवति । भवती महती इत्यव्युत्पन्नं प्रातिपदिकं व्यपदेशिवद्भावाद्भवति । उगित्वात्सिद्धे अञ्चतिग्रहणं धातोरुगितो अग्रहणार्थम् उखास्रत् । अस्वस्रादेरिति किं स्वसा परमस्वसा अतिस्वसा । तिस्रः चतस्रः। तिसृचतस्रोः स्वस्रादिषु पाठः सन्निपातपरिभाषाया अनित्यत्वज्ञापनार्थः ॥

३०५ **कुम्भपद्यादौ** ।१।३।१०। कुम्भपद्यादयः स्त्रियां ङ्यन्ता निपात्यन्ते ॥ कुम्भपदी कलशपदी इत्यादि[1] ॥ ऋच्याङित्यधिकृत्य ॥

३०६ **मन्नन्तबहुव्रीहेर्न च** ।१।३।१२। स्त्रियां मन्नन्तादन्नन्तबहुव्रीहेश्च आङ् प्रत्ययो वा भवति प्राप्तश्च न भवति ॥ ङ इत् अन्त्याजादिलुगर्थः । दामा दामे दामाः । दामा दामानौ दामानः । बहुराजा बहुराजे बहुराजाः । बहुराजा बहुराजानौ बहुराजानः । अजेत्याङ् अजा अश्वा एलका मूषिका उष्णिहा कुञ्चा इत्यादि ॥

३०७ **टिड्ढण्ढेञणञ्गौरादिभ्यः** ।१।३।१४। स्त्रियां टितः ठण्ढण्भ्याम्[2] इञितः अणतः अञः गौरादिभ्यश्च ङी भवति ॥ टितः उभयट् इति स्थिते । ट इत् ङ्यर्थः ॥

३०८ **लुगतः** ।१।३।७८। अतो लुग्भवति ङ्यां परतः ॥ उभयी । ठणः आक्षिकी । ढणः नादेयी । इञः दाक्षी । अणः औपगवी कुम्भकारी । अञः औत्सी । गौरादिभ्यः गौरी । मत्स्य ङी इति स्थिते अल्लुचि ॥

३०९ **मत्स्यतद्धितस्य हलो यः** ।१।३।७९। मत्स्यशब्दस्य तद्धितप्रत्ययस्य च हलः परस्य यस्य लुग् भवति ङ्यां परतः ॥ मत्सी मनुषी ॥

३१० **सूर्यागस्त्ययोश्छे च**[3] ।१।३।८०। सूर्यागस्त्ययोर्ङ्यां छे प्रत्यये च यस्य लुग्भवति ॥ सौरी आगस्ती ॥

३११ **वयस्यनन्त्ये** ।१।३।१७। स्त्रियामनन्त्ये वयसि वर्तमानात्

---

१ आदिशब्देन एकपदी, शतपदी, मुनिपदी, गोधापदी इत्यादिशब्दानां ग्रहणम् ॥

२ ठण् इत्यत्र ठढ इत्येतयोर्द्वयोर्मध्ये स्थितो यो णकारः स इह देहलीदीपन्यायेन द्वयोरपि सम्बध्यते । तेन ठण् ढण् इति गृह्यते । इञ इञ् न ईञ् । अत्रेकारप्रश्लेषः किं? वाराह्या । बालाक्या इत्यत्र ङी न भवति ॥

३ छे इति किं? सौर्यः आगस्त्यः । सूर्यस्येयं सौरी । छे प्रत्यये सूरीयः । आगस्तीयः ॥

अकारान्तात् ङी भवति ॥ कुमारी तरुणी । अनन्त्य इति किं? स्थविरा ॥

३१२ ऊध्नः ।१।३।२०। स्त्रियामूधन्नन्ताद्बहुव्रीहेर्ङी भवति ॥ घ्नः । घटोध्नी ॥

३१३ श्ववनो वा ।१।३।२२। श्ववतोऽन्नन्ताद्बहुव्रीहेः स्त्रियां ङी वा भवति ॥ बहुराज्ञी बहुराजा । श्ववत इति किं? बहुश्वा बहुश्वे बहुश्वाः । बहुश्वा बहुश्वानौ बहुश्वानः ॥

३१४ अनाच्छादनाज्जातेः पूर्वपदात् क्तादजातकृतमितप्रतिपन्नात् ।१।३।२४। अनाच्छादनाज्जातिवाचिनः पूर्वपदात्परो यः क्तान्तः जातकृतमितप्रतिपन्नवर्जितः शब्दः तदन्ताद्बहुव्रीहेः स्त्रियां ङी भवति ॥ शङ्खभिन्नी केशलूनी । अनाच्छादनादिति किं? वस्त्रच्छन्ना । जातेरिति किं? मासयाता । जातादिप्रतिषेधः किं? दन्तजाता दन्तकृता स्तनमिता गुणप्रतिपन्ना ॥

३१५ पाणिगृहीतीति पत्नी ।१।३।२५। स्त्रियां पाणिगृहीतीत्येवंप्रकाराः पत्नीवाचकशब्दा ङ्यन्ता निपात्यन्ते ॥ पाणिगृहीती करगृहीती पाण्यात्ती ॥

३१६ वाऽस्वाङ्गात् ।१।३।२६। अस्वाङ्गवाचिनो यः क्तान्तः तदन्ताद्बहुव्रीहेरुक्तविशेषणात् स्त्रियां ङी वा भवति ॥ पलाण्डुभक्षिती पलाण्डुभक्षिता । अस्वाङ्गादिति किं? शङ्खभिन्नी ॥

३१७ [2]सहनञ्विद्यमानान्नासिकोदरोष्ठजङ्घादन्तकर्णशृ-

---

१ 'अतः' इत्यनुवर्तनादकारान्तात् ङी भवतीत्यर्थः । अत इति किं शिशुः बाला इत्यादिरजादिः । अभिन्नरजस्का पुरुषेणासम्प्रयुक्ता स्त्री कुमारी । प्राणिनां कालकृतावस्था बाल्यादिर्वयः । तद्द्विविधं वृद्धिमत् हानिमच्च । तत्र वृद्धिमदनन्त्यम् । हानिमदन्त्यमिति ज्ञेयम् ॥

२ सह च नञ् च विद्यमानं च सहनञ्विद्यमानं यस्मिन् तत् तस्मात् । पूर्वपदविशेषणमिदं । बहवोऽचो यस्य स बह्वच् । अन्त्यस्य समीपे वर्तत इत्युपान्त्यः संयोग उपान्त्यो यस्य स संयोगोपान्त्यः बह्वच्च स संयोगोपान्त्यः स न विद्यते यस्य तत् तथोक्तं । पुनः नासिकादीनां द्वन्द्वं कृत्वा पश्चादनेन द्वन्द्वः ॥

**नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठावह्वच्संयोगोपान्त्यात् स्वाङ्गात् समासात्** ।१।३।२७। सहनञ्विद्यमानवर्जितादस्वाङ्गवाचिनः परं यन्नासिकादि यच्चा-बह्वचः संयोगोपान्त्याच्चान्यत्स्वाङ्गवाचि तदन्तादन्तात्समासात् स्त्रियां ङी वा भवति ॥ दीर्घनासिकी दीर्घनासिका । तलोदरी तलोदरा । बिम्बोष्ठी बिम्बोष्ठा । समजङ्घी समजङ्घा । चारुदन्ती चारुदन्ता । लम्बकर्णी लम्बकर्णा । पटुशृङ्गी पटुशृङ्गा । नताङ्गी नताङ्गा । तनुगात्री तनुगात्रा । कलकण्ठी कलकण्ठा । अबह्वच् संयोगोपान्त्यात् स्वडी स्वडा वृश्चिकी । स्निग्धकेशी स्निग्धकेशा । पृथुस्तनी पृथुस्तना रामा । बहुकेशी बहुकेशा रथ्या । दीर्घमुखी दीर्घमुखा प्रतिमा । असहनञ्विद्यमानादिति किं? सहनासिका अनासिका विद्यमाननासिका । अबह्वच्संयोगोपान्त्यादिति किं? पृथुजघना चारुगुल्फा । स्वाङ्गादिति किं बहुशोभा पुरी । बहुशोफा जरती । बहुकफा बहुज्ञाना कन्या । अत इति किं? कल्याणपाणिः ॥

**अविकारोऽद्रवं मूर्तं प्राणिस्थं स्वाङ्गमुच्यते ॥**
**च्युतं च प्राणिनस्तत्तन्निभं च प्रतिमादिषु ॥ १ ॥**

---

१ विकारो वातादिक्षोभजन्मा तत्स्वाङ्गं न भवति । न विद्यते विकारोऽस्यासावविकारः । अथवा विशेषेण द्रव्यस्यावस्थान्तरं करोतीति विकारः न विकारोऽविकारः । शोफादीनां विकारत्वान्न ङी ॥ द्रवणं द्रवः न विद्यते द्रवोऽस्येत्यद्रवं । द्रवतीति वा द्रवं न द्रवमद्रवं तत्स्वाङ्गम् । द्रवरूपं कफादि तत्र ङी न भवति ॥ रूपादियोगो मूर्तिः । असर्वगतद्रव्यपरिणामो वा मूर्तिः तद्योगान्मूर्तं पुद्गलद्रव्यं तत्स्वाङ्गम् । तेनेह ङी न भवति बहुज्ञाना । ज्ञानं ह्यात्मधर्मो न मूर्तम् ॥ आयुरुच्छ्वासबलेन्द्रियाणि प्राणाः ते येषां सन्ति तेप्राणिनः ते इह द्वित्रिचतुरिन्द्रियाः प्राणिनस्तेषु तिष्ठतीति प्राणिस्थम् ॥ प्राणिस्थस्यैवावयवस्य स्वाङ्गत्वव्यपदेशात् बहुकेशी रथ्या इत्यत्र कथं ङी भवतीति चेत् अपरं लक्षणद्वयमुच्यते । प्राणिनश्च्युतं चलं अङ्गं तदविकारादिलक्षणयुक्तं स्वाङ्गं भवति तेन बहुकेशी रथ्या इत्यत्र ङी भवत्येव ॥ प्रतिमादिषु स्थितं च स्वाङ्गवाचि यदङ्गं तन्निभं तदविकारादिलक्षणसन्निभमङ्गं स्वाङ्गमुच्यते । तेनेह ङी भवति दीर्घमुखी प्रतिमा ॥ आदिशब्देन आलेख्यादिपरिग्रहः चित्रादिविलेखितपरिग्रह इत्यर्थः ॥

**३१८ द्विगोः** ।१।३।३६। अदन्ताद् द्विगोः स्त्रियां ङी भवति ॥ त्रिलोकी अष्टसहस्री ॥

**३१९ नः पत्यन्तस्य** ।१।३।४०। पत्यन्तस्य स्त्रियां नो भवति ॥ नान्तत्वे नृदुगिदिति ङी । दृढपत्नी दृढपतिः ॥

**३२० सपत्न्यादौ** ।१।३।४१। सपत्न्यादिः स्त्रियां साधुर्वेदितव्यः ॥ सपत्नी एकपत्न्यादिः ॥

**३२१ पतिवत्न्यन्तर्वत्न्यावविधवागर्भिण्योः**[1] ।१।३।४२। अविधवायां पतिवत्नीति निपात्यते गर्भिण्यामन्तर्वत्नीति ॥

**३२२ रोहिणरेवतान्नक्षत्रे** ।१।३।४३। रोहिणरेवताभ्यां स्त्रियां ङी भवति नक्षत्रे वाच्ये ॥ रोहिणी रेवती । नक्षत्र इति किं । रोहिणा रेवता ॥

**३२३ नीलात्प्राण्योषध्योः** ।१।३।४४। नीलशब्दात् स्त्रियां ङी भवति प्राणिन्योषधौ चार्थे ॥ नीली गौः नील्योषधिः । अन्यत्राङ् । नीला मेघमाला ॥

**३२४ आर्यक्षत्रियाद्वाऽऽन्**[2] ।१।३।४८। आर्यक्षत्रियशब्दाभ्यां स्त्रियामान्प्रत्ययो वा भवति ॥ नान्तत्वे ङी । पक्षे आङ् । आर्याणी आर्या । क्षत्रियाणी क्षत्रिया ॥

**३२५ धवाद्योगादज्येष्ठादिभ्यः** ।१।३।४९। धववाचिनो योगात्तत्सम्बन्धात् स्त्रियां वर्तमानाच्छब्दात् ङी भवति न ज्येष्ठादिभ्यः ॥ गणकस्य भार्या गणकी क्षत्त्रियस्य भार्या क्षत्त्रियी । अज्येष्ठादिभ्य इति किं? ज्येष्ठस्य भार्या ज्येष्ठा । एवं कनिष्ठा ॥

---

१ पतिरस्यातीति पतिवत्नी विवाहात्तभर्तृमती । उदरान्तरे गर्भोऽस्या अस्तीत्यन्तर्वत्नी गर्भिणी । एतौ मतुप्रत्ययान्तौ निपात्येते ॥ अन्यत्र पतिमती भूमिः । अन्तरमस्यां शालायां वर्तते इति अन्तरवती शाला ॥

२ अर्यते गम्यते गुणैर्गुणवद्भिरिति वा आर्यः । क्षतादपायात्त्रायते रक्षतीति क्षत्रः क्षत्रस्यापत्यं पुमान् क्षत्रियः । पुनर्द्वन्द्वः । अधवयोगेऽयं विधिः । धवयोगे तु परत्वात् ङी आर्यी क्षत्रियी । आर्याणी स्वयमार्या स्यात्क्षत्रिया क्षत्रियाण्यपि । अतः आर्यस्य भार्या क्षत्रियस्य भार्या इति वा नार्थः । स्वयमेवार्या स्वयमेव क्षत्रिया इत्यर्थः ॥

**३२६ पूतक्रत्वाग्निवृषाकपिकुसितकुसीदादैङ् च** ।१।३।५०। पूतक्रत्वादिभ्यो धवयोगात् स्त्रियां वर्तमानेभ्यो ङी भवति तेषामैङ् चादेशः ॥ ङ इत् आदेशत्वज्ञापनार्थः। आय्। पूतक्रतोर्भार्या पूतक्रतायी। एवमग्नायी वृषाकपायी कुसितायी कुसीदायी ॥

**३२७ मनोर्वा ङैच्** ।१।३।५१। मनुशब्दाद्धवयोगात् स्त्रियां ङी वा भवति ङैचान्तादेशः ॥ ङ इत्। मनायी मनावी मनुः ॥

**३२८ मातुलाचार्योपाध्यायादान् च** ।१।३।५२। मातुलादिभ्यो धवयोगात् स्त्रियां ङी आन् च भवतो वा ॥ नान्तत्वे पुनर्ङी पक्षे आङ्। मातुलस्य भार्या मातुली मातुलानी मातुला। एवम् आचार्यी आचार्यानी। क्षुभ्नादित्वान्न णत्वं। आचार्या उपाध्यायी उपाध्यायानी उपाध्याया ॥

**३२९ वरुणेन्द्रमृडभवशर्वरुद्रादान्** ।१।३।५३। वरुणादिभ्यो धवयोगे स्त्रियां नित्यमान् भवति ॥ ङी। वरुणस्य भार्या वरुणानी। एवमिन्द्राणी मृडानी भवानी शर्वाणी रुद्राणी ॥

**३३० हिमारण्याद्दुरौ** ।१।३।५७। उरौ महत्यर्थे वर्तमानाभ्यां हिमारण्यशब्दाभ्यां स्त्रियामान् भवति ॥ ङी। उरु हिमं हिमानी। उर्वरण्यमरण्यानी ॥

**३३१ वेदक्तिनो ङी** ।१।३।५८। स्त्रियामिदन्तात् ङी वा भवति न क्तिनः ॥ दीर्घः। शक्तिः शक्ती। यष्टिः यष्टी। अङ्गुलिः अङ्गुली। अक्तिन इति किं? कृतिः बुद्धिः ॥

---

१ वा इदक्तिनः ङी इति पदच्छेदः। वा इति विकल्पार्थः। इदक्तिन इति न विद्यते क्तिन् यस्य स अक्तिन् इकारमात्रं इत् इचासावक्तिन् च इदक्तिन् तस्मादिदक्तिनः। क्तिन्प्रत्ययरहितेकारान्तात् स्त्रियां ङी वा भवतीत्यर्थः। इदिति किं हनुः। तकारः किं सेनानीः स्त्री। क्तिमिति नकारः किं 'वाम्नि क्तिः' इति क्तिप्रत्ययान्तनिषेधार्थं क्तिमन्तात्प्राप्त्यर्थं च न ग्रहणम् ॥ शक्तिरिति स्थिते तस्मात् ङीप्रत्ययः। शकनं शक्ती ॥ पूर्वो ङी प्रत्ययो व्यवहित इति ङीग्रहणम् ॥

**३३२ गुणादुतोऽच्योऽखरोः** ।१।३।५९। अचः परो यः उत् तदन्ताद्गुणवाचिनः स्त्रियां ङी वा भवति न खरोः ॥ यत्र् । मृद्वी मृदुः । पट्वी पटुः । गुणादिति किं? आखुरियम् इषुरियं चिकीर्षुरियम् । अखरोरिति किं? खरुरियम् । अच इति किं? पाण्डुरियं बभ्रुरियं ॥

**३३३ बह्वादेः** ।१।३।६१। बह्वादिभ्यः स्त्रियां ङी वा भवति ॥ बह्वी बहुः । पद्धती पद्धतिः । चण्डी चण्डा । कल्याणी कल्याणा ॥

**३३४ क्नोऽसितपलितात्** ।१।३।६३। असितपलिताभ्यां वर्णवाचिभ्यां स्त्रियां ङी वा भवति तकारस्य क्नादेशश्च ॥ असिक्नी असिता । पलिक्नी पलिता ॥

**३३५ कालशबलसारङ्गपिशङ्गपिङ्गलकल्माषात्** ।१।३।६४। कालादिभ्यो वर्णवाचिभ्यः स्त्रियां नित्यं ङी भवति ॥ काली शबली सारङ्गी पिशङ्गी पिङ्गली कल्माषी ॥

**३३६ जातेरस्त्रीयशूद्रात्** ।१।१।६५। अदन्ताज्जातिवाचिनः स्त्रियां

---

१ अखुरोरिति उत इत्यस्य विशेषणम् । गुणमात्रवृत्तेः शब्दस्य स्त्रीत्वव्यपदेशाभावात् गुणादित्यस्य गुणवति द्रव्ये वर्तमानाच्छब्दात् ङीप्रत्ययो ज्ञातव्यः ॥ अत्र मृदु पटु इत्यादीनामन्त्यस्योकारस्याचः परत्वं नास्ति कथं ङीप्रत्ययः? इति चेत् येन नाव्यवधानं तेन व्यवहितेऽपि आचार्याणां वचनप्रामाण्याद्भवतीत्येकेन वर्णेन व्यवधानमाश्रीयत इति मृदु इत्यत्र ऋकारात्परस्य दकारस्य व्यवधानं कृत्वा उकारस्याचः परत्वं तस्मात् ङी ॥

२ अत्र आखुरिति जातिवाची । इषुरिति द्रव्यवाची । चिकीर्षुरिति क्रियावाची अतो ङी न भवति ॥ खरुरिति गर्ववाची गर्वो गुण इति गुणवाचिनः प्राप्ते निषेधः ॥ पाण्डुः बभ्रुः इत्यत्र हल्द्वयव्यवधानेन उकारस्याचः परत्वं नास्तीति ङी न भवति । खनत्यवधीरयति परेषां चित्तानीति खरुः । अथवा खादति ग्रसते परमात्मकार्यमिति खरुर्गर्वः । चेतुमिच्छुः चिकीर्षुः चीञ् चयने ॥

३ य इत्यस्य यान्तमित्यर्थः । अत इत्यधिकारादुपान्त्यस्यापि यकारस्यान्तोपचारः । यूका इति पूर्वस्मिन्नेव स्त्रीलिङ्गं । क्षत्रिया इति यान्तोऽयम् ॥ महाशूद्रीति समुदायात् ङी भवत्येव जातिलक्षणस्यैवायं निषेधः । धवयोगलक्षणो ङी भवत्येव शूद्रस्य भार्या शूद्री इति ॥

ङी भवति स्त्रीलिङ्गं यान्तं शूद्रशब्दं च वर्जयित्वा ॥ कुक्कुटी तटी हरीतकी बिभीतकी आमलकी ॥ अस्त्रीयशूद्रादिति किं? यूका क्षत्रिया शूद्रा ॥ जातेरिति किं? धवला देवदत्ता जाता ॥

**३३७ नुरितः** ।१।३।७०। इदन्तान्मनुष्यजातिवाचिनः स्त्रियां ङी भवति ॥ कुन्ती दाक्षी ॥

**३३८ ऊरुतोऽप्राणिनश्चायुरज्ज्वादिभ्यः** ।१।३।७१। मनुष्यजातिवाचिनः अप्राणिजातिवाचिनश्च स्त्रियामुदन्तादूद् भवति युशब्दान्तं रज्ज्वादींश्च वर्जयित्वा ॥ कुरूः इक्ष्वाकूः अलाबूः कर्कन्धूः। अप्राणिन इति किम्? आखुः। अयुरज्ज्वादिभ्य इति किम्? अध्वर्युरियं रज्जुः हनुः ॥

**३३९ ऊरूत्तरपदादौपम्ये** ।१।३।७२। ऊरूत्तरपदात् स्त्रियाम् ऊद्भवति औपम्ये द्योत्ये ॥ रम्भास्तम्भोरूः करिकरवृत्तोरूः ॥

**३४० सहसफसहितसंहितलक्ष्मणवामादेः** ।१।३।७३। सहादिपूर्वादूरूत्तरपदात् स्त्रियां ऊद्भवति ॥ सहोरूः सफोरूः सहितोरूः संहितोरूः लक्ष्मणोरूः वामोरूः ॥

**३४१ नारी सखी पङ्गूः श्वश्रूः** ।१।३।७५। एते स्त्रियां प्रत्ययान्ता निपात्यन्ते ॥ नारी सखी पङ्गूः श्वश्रूः ॥

**३४२ यूनस्तिः** ।१।३।७६। युवन्शब्दात् स्त्रियां तिर्भवति ॥ त इत्। प्यत्प्रत्याहारार्थः। न इति नलुक्। पुनः वेदाक्तिनो ङीति ङी न भवति। युवतिः ॥

॥ इति स्त्रीप्रत्ययान्तसङ्ग्रहः ॥

---

१ युश्च रज्ज्वादयश्च युरज्ज्वादयः न युरज्ज्वादयः अयुरज्ज्वादयः। रज्ज्वादयस्तु प्रयोगगम्याः ॥ "नुरितः" इत्यतो नुरित्यनुवर्तते। अप्राणिन इति व्याकरणशास्त्रे स्थावराणां प्राणित्वं नास्ति त्रसानामेव ॥ २ सफशब्दः संश्लिष्टार्थः।

३ युवन्शब्दात् नृदुगीति प्राप्तौ तद्बाधनार्थं तिद्विधानात् सकृद्बाधितो विधिर्बाधित एवेति युक्त्या पुनर्वेदाक्तिनो ङीति ङी न भवति ॥

## ॥ अथ विभक्त्यर्थाः संगृह्यन्ते ॥

**३४३ त्रयीत्रयी विभक्तिः** ।१।३।१८१। स्वादीनां त्रयीत्रयी विभक्तिर्भवति ॥

**३४४ प्रथमादिः** १।३।१८२ सा विभक्तिः प्रथमा द्वितीयेत्यादिसंज्ञा भवत्या सप्तम्याः ॥ कस्मिन्नर्थे प्रथमा ॥

**३४५ योगे** ।१।३।९३। योगे सम्बन्धे पदानां परस्परापेक्षालक्षणे गम्यमाने इतो वक्ष्यमाणं कार्यं भवति इति वेदितव्यम् । एकद्विबहाविति प्रधानेऽर्थे प्रथमाविभक्तिर्भवति । धर्मः धर्मौ धर्माः । सुखयति सुखयतः सुखयन्ति इत्यादिक्रियायोगो द्रष्टव्यः । आमन्त्रणेऽपि आमन्त्र्ये इति प्रथमैव । हे धर्म हे धर्मौ हे धर्माः । मां रक्ष । मां रक्षतं । मां रक्षत । इत्यादिक्रियासम्बन्धो योज्यः ॥ कस्मिन्नर्थे द्वितीया ॥

**३४६ हाधिक्समयानिकषोपर्युपर्यध्यध्यधोऽधोऽत्यन्तरान्तरेणतसुपर्यभिसर्वोभयैश्चाप्रधानेऽमौट्शस्** ।१।३।१००। हादिभिस्तसन्तैश्च पर्यादिभिर्योगेऽप्रधाने अनभिहितेऽर्थे वर्तमानादमौट्-

---

१ विभज्यन्ते विभागीक्रियन्ते संख्याकर्मादयोऽर्था आभिरिति विभक्तयः । विभक्तीनामर्था विभक्त्यर्थाः । उच्चरितात्सुबन्ताद्गुणप्रधानभावेनावस्थिताः स्वार्थद्रव्यलिङ्गसंख्याकर्मादिलक्षणाः पञ्च अर्थाः प्रतीयन्ते ॥ तत्र स्वार्थद्रव्यलिङ्गलक्षणाः प्रकृत्यर्थाः । संख्याकर्मादिलक्षणा विभक्त्यर्थाः । उक्तं च— जातिर्व्यक्तिश्च लिङ्गं च प्रकृत्यर्थोऽभिधीयते ॥ संख्या च कारकं चैव प्रत्ययार्थोऽभिधीयते ॥

२ योगे इत्यस्य सम्बन्धे इत्यर्थः । स च सम्बन्धो द्विविधः एकार्थता व्यपेक्षा च । तत्र ऐकपद्ये एकार्थता अन्यत्र व्यपेक्षा ॥ प्रक्रियायां वक्ष्यमाणं कार्यमित्यस्य योग इति सूत्रादग्रे क्रमसूत्रापेक्षया वक्ष्यमाणं कार्यमित्यर्थः ॥

३ अभिहितं क्रियया कथितं प्रधानं । अभिहितत्वादेव कारकमतिरोहितमात्मानमादर्शयतीति प्राधान्यमनुभवति । अनभिहितं तु तिरोहितं न प्राधान्यमनुभवति ॥

शसो भवन्ति ॥ हा चैत्रं वर्धते व्याधिः । धिक् चैत्रं विकृतं । पर्वतं स-मया नदी वहति । ग्रामं निकषा वनं । स्वर्गमुपर्युपरि स्वर्गाः । लोकमध्यधि जीवाद्यर्थाः । नरकभूमिमधोऽधो नरकभूमयः । अति वृद्धन्तु कुरून् महद् बलं । निषधं नीलं चान्तरा विदेहाः । धर्ममन्तरेण न वै सुखं । ग्रामं परितो वनानि । ग्राममभितो ग्रामाः । ग्रामं सर्वतो ग्रामाः । सीता-मुभयतः प्राग्विदेहाः । चकारादनुक्तेऽपि "बुभुक्षितं न प्रतिभाति कि-ञ्चित्" इत्यादि ॥

**३४७ वीप्स्यलक्षणेत्थंभवनेष्वभिना** ।१।३।१०१। साक-ल्येन व्याप्तीच्छा वीप्सा तत्कर्म वीप्स्यं । लक्ष्यते वस्तु येन तल्लक्षणम् । इत्थंभावविषयः इत्थंभवनम् । एष्वप्रधानार्थेषु वर्तमानात् द्वितीया भवत्यभि-ना योगे ॥ वृक्षंवृक्षमभि सिञ्चति । वृक्षंवृक्षमभि विद्योतते विद्युत् । मातरं परि मातरमभि साधुश्चैत्रः ॥

**३४८ भागिनि च प्रतिपर्यनुभिः** ।१।३।१०२। भागोऽस्या-स्तीति भागी तस्मिन् वीप्स्यादिषु चार्थेषु द्वितीया प्रतिपर्यनुभिर्योगे ॥ मां प्रति मां परि मामनु देवदत्त यत्तद्देयं । वृक्षंवृक्षं प्रति वृक्षंवृक्षं परि वृक्षंवृक्ष-मनु सिञ्चति । वृक्षं प्रति वृक्षं परि वृक्षमनु विद्योतते विद्युत् । मातरं प्रति मातरमनु साधुश्चैत्रः ॥

**३४९ उत्कृष्टेऽनूपेन** ।१।३।१०४। उत्कृष्टेऽधिकेऽप्रधानेऽर्थे व-र्तमानात् द्वितीया भवति अनूपाभ्यां योगे ॥ अनु समन्तभद्रं तार्किकाः । उप शाकटायनं वैयाकरणाः ॥ कर्मणीति क्रियाविषये अप्रधाने द्वितीया

---

१ सूत्रे पर्यादीनां द्वन्द्वं कृत्वा तसा कर्मधारयसमासः । ततश्च तेषां तसन्तानामिति प्रतिपत्तिः । ततो हादीनां द्वन्द्वः ॥ परार्थमप्रधानं प्रधानमुपकार्यं यदर्थमन्यदुपादीयते ततोऽन्यत्तस्योपकारकं, यत्तदर्थं तद्विशेषणं तत्प्रधानम् । अप्रधानमिति किं प्रधाने न भवति । हा तात, धिङ्मातरित्यादौ न तातादेरामन्त्र्यतया विवक्षा न हादेर्युक्तत्वेने-ति न भवति ॥ हा कृतं देवदत्तस्य विकृतं देवदत्तस्येत्यत्र हादेः कृते न्यग्भूतस्य न स्वयं योगः । कस्य तर्हीति चेत् तद्विशिष्टस्येत्यभोपपत्तौ ॥

भवति ॥ तच्च कर्म द्विविधं । निर्वर्त्यं[1] गम्यं चेति । कार्यविकार्यप्रध्वंस्यादिकं निर्वर्त्यं । प्राप्यप्रकाश्यज्ञेयादिकं गम्यं । घटं करोति । शरं लुनाति । दुरितं हन्ति । वनं दहति ॥ ग्रामं गच्छति । गृहं प्रकाशयति दीपः । अर्थं जानाति । शिष्यं प्रबोधयति इत्यादि ॥

**३९० दिवः करणे वा** ।१।३।१०६। दिवो धातोः करणे[2]ऽप्रधाने वर्तमानात् द्वितीया वा भवति ॥ अक्षान् दीव्यति अक्षैर्दीव्यति ॥

**३९१ पणे[3]र्व्यवहो**ः ।१।३।११०। पणतेर्व्यवहरतेश्च कर्म कर्म वा

---

१ यन्निर्वर्त्यते प्रागसदवस्थं सत्प्रादुर्भाव्यते तन्निर्वर्त्यम् । यथा कुम्भं करोति, नगरं करोति । अत्र हि कुम्भादयः प्रागसन्तः प्रादुर्भाव्यन्ते । यद्यपि मृदादिरूपेण कुम्भादयः सन्ति तथापि न तेन रूपेण ते कुम्भादय उच्यन्ते । अपि तु केनचित्पर्यायेणैव । न तेन ते प्राक् सन्ति । स्वात्मनाऽसन्नेव निष्पाद्यते तत्कार्यं भवति ॥ यत्सदुत्तरमवस्थान्तरं नीयते तद्विकार्यमिति । तच्च द्विविधं उपमृद्यद्रूपमनुपमृद्यद्रूपं चेति । तत्रोपमृद्यद्रूपं यथा पलालं दहति । पतितं हन्ति । एतत्प्रध्वस्यं भवतीत्युपमृद्यद्रूपं भवति ॥ अनुपमृद्यद्रूपं यथा काशात्कटं करोति शरं लुनाति । न हि यद्रूपमादाय काशेषु काशशब्दप्रवृत्तिः तस्य कटावस्थायामभाव इत्यनुपमर्दः । तदेव विकार्यम् ॥

२ करण इति किं? गृहे दीव्यति । करणं साधकतमम् । ननु च “कर्म च ।१।३।१०७। दीव्यतेर्यत्करणं तत्कर्म च करणं च भवति ॥ अक्षाणां देवनं अत्र कर्मत्वे परत्वात् करणतृतीयां बाधित्वा कर्मषष्ठी । देवना अक्षाः । अत्र करणेऽनट् । अक्षैर्देवयते देवदत्तो गुरुदत्तेन । अत्र करणत्वात्तृतीया । इति चिन्तामणौ” इति सूत्रेण तस्य करणस्य करणत्वं कर्मत्वं चाभ्यनुज्ञायते । तत्र कर्मत्वे द्वितीया करणत्वे तृतीया च भवति तत्किमनेनेति चेत्सत्यम् । यदीदं नारभ्येत तदा अक्षान् दीव्यतीत्यत्र द्वितीयातृतीयाविध्योरन्यत्र सावकाशयोरुपनिपतितयोः परत्वात्करणलक्षणस्य तृतीयैव स्यात् न कर्मलक्षणा द्वितीया ॥ अतो द्वितीयाप्राप्त्यर्थमिदम् ॥

३ न विनिमेयद्यूतपणम् ।१।३।१०८। यद्विनिमेयं क्रयविक्रेयं द्यूतपण्यं द्यूतजेयं तदा कर्म न भवति । कर्मकार्यं न करोतीत्यर्थः ॥ शतस्य दीव्यति । सहस्रस्य दीव्यति । क्रयविक्रयद्यूतपणत्वे वा तद्विनियुङ्क्ते इत्यर्थः । कर्मत्वाभावे षष्ठी । शतस्य दीव्यते । शतस्य द्यूतं । शतस्य देवितव्यम् । शतस्य सुदेवम् । शतस्य द्यूतो देवदत्तः । विनिमेयद्यूतपणमिति किं? देवान् दीव्यति स्तौतीत्यर्थः ॥ शलाकां व्यवहरति विगणयन् गौः पालयतीत्यर्थः ॥ इति चिन्तामणौ ॥

भवति ॥ शतं पणते । शतस्य पणते । शतं व्यवहरति । शतस्य व्यवहरति ॥

३५२ **स्मृत्यर्थदयीशां कर्म**[1] ।१।३।१११। स्मृत्यर्थानां धातूनां दयीश्योश्च यत्कर्म तद्वा कर्म भवति ॥ कर्मत्वे द्वितीया । अन्यत्र षष्ठी । धर्मं स्मरति । धर्मस्य स्मरति । देवं ध्यायति । देवस्य ध्यायति इत्यादि । धर्मं दयते । धर्मस्य दयते । लोकमीष्टे लोकस्येष्टे ॥

३५३ **कृञः प्रतियत्ने**[2] ।१।३।११२। प्रतियत्ने अर्थे कृञः कर्म कर्म वा भवति ॥ एधो दकमुपस्कुरुते । एधो दकस्योपस्कुरुते ॥

३५४ **हिंसायां जौसनाटक्राथपिषनिप्रघ्नाम्**[3] ।१।३।११४। हिंसायां वर्तमानानाम् एतेषां कर्म वा कर्म भवति ॥ चोरमुज्जासयति चोरस्योज्जासयति । चोरमुन्नाटयति चोरस्योन्नाटयति । चोरमुत्क्राथयति चोरस्योत्क्राथयति । चोरं पिनष्टि चोरस्य पिनष्टि । चोरं निहन्ति चोरस्य निहन्ति चोरं प्रहन्ति चोरस्य प्रहन्ति । चोरं निप्रहन्ति चोरस्य निप्रहन्ति ॥

३५५ **आशिषि नाथः** ।१।३।११५। नाथतेः कर्म वा कर्म भवति आशिषि गम्यमानायाम् ॥ धर्मं नाथते धर्मस्य नाथते ॥ धर्मो मे भूयादित्याशास्त इत्यर्थः ॥

---

१ धर्मं दयते रक्षतीत्यर्थः । लोकमीष्टे लोकमुद्धरतीत्यर्थः ॥

२ सतोऽतिशयाधानं प्रतियत्नः । अथवा सतो गुणान्तराधानायापायपरिहाराय वा समीहा पुनःपुनर्यत्नः स एव प्रतियत्नः । प्रथमं तावदर्थस्यात्मलाभाय यत्नो भवति । लब्धात्मनो यो यत्नः स पुनर्यत्नः ॥ कृञ इति किं? कृञ् हिंसायामिति स्वादिः । स तु प्रतियत्ने नास्तीत्यत एवास्योपस्कुरुते इति पदं न भवति किंतु ' डुकृञ् करणे ' इत्यस्यैव भवति । ततस्तस्यैव ग्रहणं कर्तव्यम् । अन्यथा एकानुबन्धग्रहणे न द्व्यनुबन्धस्येति कृणोतेर्हिंसार्थकस्यैव ग्रहणं स्यात् । प्रतियत्न इति किं कुम्भं करोति ॥

३ जस ताडने । जस हिंसायाम् । नट अवस्यन्दने । क्रथ हिंसायाम् । पिष् संञ्चूर्णने । हन हिंसागत्योः । बहुवचनं सर्वभङ्गार्थम् ॥

**३५६ शीङ्स्थासोऽधेराधारः** ।१।३।१२२। अधिपूर्वाणां शीङ् स्था आस् इत्येतेषां धातूनां आधारः कर्म भवति ॥ धर्ममधिशेते । धर्ममधितिष्ठति । धर्ममध्यास्ते ॥

**३५७ वसोऽनूपाध्याङः** ।१।३।१२३। अनूपाध्याङ्पूर्वस्य वसतेराधारः कर्म भवति ॥ धर्ममनुवसति । धर्ममुपवसति । धर्ममधिवसति । धर्ममावसति ॥

**३५८ अभिनिविशश्च** ।१।३।१२४। अभिनिपूर्वस्य विशेराधारः कर्म भवति ॥ धर्ममभिनिविशते । चशब्दात् क्वचिन्न भवति । अन्त्येऽभिनिविशते ॥

**३५९ कालाध्वभावदेशं वा कर्म चाकर्मणाम्** ।१।३।१२५। अकर्मकाणां धातूनां आधारः कालाध्वक्रियादेशरूपः कर्म वा भवति अकर्म च ॥ मासमास्ते । क्रोशं स्वपिति । गोदोहमास्ते । ग्रामं वसति ॥ पक्षे सप्तमी मासे आस्ते इत्यादि ॥

**३६० कालाध्वनोर्व्याप्तौ** ।१।३।१२७। कालाध्वनोर्द्वितीया भवति व्याप्तौ नैरन्तर्ये गम्यमाने ॥ मासमध्यगीष्ट । क्रोशं गिरिः ॥ कास्मिन्नर्थे तृतीया ॥

**३६१ टाभ्यांभिस्सिद्धौ** ।१।३।१२७। कालाध्वनोरप्रधानयोर्वर्त-

---

१ वसतेरिति अदाद्यनदाद्योरनदादेरेव ग्रहणमिति वस् निवासे इत्यनदादेरेव ग्रहणम् वसि निवासे इत्यस्मात्कुतो न भवतीति चेत् अदादित्वान्न भवतीत्याह वसतेरिति प्रक्रियायाम् ॥ अन्वादिसाहचर्यादुपेत्यस्य स्थानार्थस्यैव ग्रहणात् ग्रामे उपवसति भोजननिवृत्तिं करोतीत्यत्र न भवति ॥

२ कालाध्वनोरिति किं? स्थाल्यां पचति । व्याप्ताविति किं? मासेऽधीते । मासस्याधीते । क्रोशे क्रोशस्य वा । अत्र व्याप्तिरिति षष्ठ्याः सप्तम्या वा अयमपवादः । अव्याप्तौ सम्बन्धमात्रविवक्षायां षष्ठी । आधारविवक्षायां सप्तमी ॥

३ सिद्धिः क्रियाफलनिष्पत्तिः । ततश्च क्रियाव्याप्तावेवायं विधिर्न द्रव्यगुणव्याप्ताविति क्रियाव्याप्तिरेवोदाह्रियते । सिद्धाविति किं? मासमधीतम् । अत्र व्याप्तिमात्रं गम्यते न सिद्धिः । पूर्वेण द्वितीयाप्राप्तौ तद्बाधनार्थं योगः । क्रोशेन सूत्रपाठमाम्नत् । म्ना अभ्यासे इति धातुः ॥

मानात् टाभ्यांभिसो भवन्ति सिद्धौ क्रियानिष्पत्तौ गम्यमानायाम् ॥ मासेन व्याकरणमध्यगीष्ट। क्रोशेन सूत्रपाठमामनत् ॥ हेतुकर्तृ इत्यादिना हेत्वादिष्वप्रधानेषु वर्तमानात्तृतीया भवति। कारणं हेतुः तत्र धर्मेण सुखं विद्यया यशः ॥ स्वतन्त्रः कर्ता तत्र चैत्रेण क्रियते कटः। आत्मना स्थीयते ॥ साधकतमं करणं तत्र देवदत्तः परशुना छिनत्ति। आत्मा ज्ञानेन परिच्छिनत्ति ॥ अर्थविशेषचिह्नमित्थंभूतलक्षणं श्वेतच्छत्रेण राजानमद्राक्षीत्। ज्ञानेनात्मा लक्ष्यते ॥

३६२ **सहार्थेन** ।१।३।१२९। सहार्थेन युक्तात् तृतीया भवति ॥ पुत्रेण सहागतः। पुत्रेण सह स्थूलः। पुत्रेण सार्धं। पुत्रेण साकं। पुत्रेण समं। पुत्रेण सत्रा। पुत्रेणामा भुङ्क्ते ॥

३६३ **यद्भेदैस्तद्वदाख्या** ।१।३।१३०। यस्य भेदैः प्रकारैस्तद्वतोऽर्थस्याख्या संज्ञा भवति तस्मिन् प्रकारवत्यप्रधाने अर्थे वर्तमानात्तृतीया भवति ॥ अक्ष्णा काणः। जात्या क्षत्रियः ॥

३६४ **प्रसितावबद्धोत्सुकैः** ।१।३।१३२। प्रसितादिभिर्युक्ते आधारे वर्तमानात् तृतीया वा भवति ॥ पक्षे सप्तमी। केशैः प्रसितः केशेषु प्रसितः। केशैरवबद्धः केशेष्ववबद्धः। धर्मेणोत्सुकः धर्मे उत्सुकः। तत्रासक्त इत्यर्थः ॥ कस्मिन्नर्थे चतुर्थी ॥ ङेभ्यांभ्यसिति सम्प्रदाने अप्रधानेऽर्थे वर्तमानात् ङेभ्यांभ्यसो भवन्ति ॥ वृक्षाय जलं ददाति। साधुभ्यो दानं वितरति। राज्ञे दण्डं वितरति छात्त्राय। चपेटां ददाति। मातापितृभ्यां कशिपू प्रयच्छते। मृगेभ्यः तोयं वितरति ॥

३६५ **स्थानिवुणः** ।१।३।१३६। यस्याप्रयुक्तस्यार्थः प्रतीयते सः स्थानी। तस्य वुणन्तस्य कर्मणि वर्तमानाच्चतुर्थी भवति ॥ एधेभ्यो व्रजति। एधानाहारको व्रजतीत्यर्थः ॥

---

१ यः करोति स कर्ता। क्रियासिद्धौ स्वतन्त्रमगुणभूतं परैरप्रयोज्यं कारकमित्यर्थः। यद्व्यापारं धातुराह तत्कारकं वा कर्ता। आत्मा ज्ञानेन परिच्छिनत्ति। अत सातत्यगमने अतति सततं गच्छति जानातीत्यात्मा ॥

**३६६ क्रुध्द्रुहेर्ष्यासूयार्थैर्यं प्रति कोपो न च कर्म** ।१।३।१३७। क्रोधाद्यर्थैर्धातुभिर्युक्ते यं प्रति कोपो भवति तस्मिन्नप्रधाने अर्थे वर्तमानाच्चतुर्थी भवति । तद्विषयः कर्म न भवति च ॥ देवदत्ताय क्रुध्यति । देवदत्ताय कुप्यति । देवदत्ताय द्रुह्यति । देवदत्ताय अपचिकीर्षति । देवदत्ताय ईर्ष्यति । देवदत्तायासूयति ॥ न च कर्मेति किं? देवदत्ताय कुप्यते ॥

**३६७ क्रुद्द्रुहा नोपसर्गात्** ।१।३।१३८। उपसर्गात्पराभ्यां क्रुद्द्रुहाभ्यां युक्ताच्चतुर्थी न भवति ॥ चैत्रमभिक्रुध्यति । चैत्रमभिद्रुह्यति ॥

**३६८ स्पृहेर्वा** ।१।३।१३९। स्पृहेर्धातोः कर्मणि वर्तमानाच्चतुर्थी वा भवति ॥ धर्माय स्पृहयति । धर्मं स्पृहयति ॥

**३६९ मन्यस्याकाकादिषु यतोऽवज्ञा** ।१।३।१४०। यस्मादवज्ञाऽन्यस्य ज्ञायते तस्मिन् मन्यतेः कर्मणि वर्तमानाच्चतुर्थी वा भवति न काकादेः ॥ तृणाय मन्यते भोगान् । तृणं मन्यते भोगान् । अकाकादिष्विति किं? काकं मन्यते याचकं ॥

**३७० भद्रायुष्यक्षेमसुखार्थहितार्थहितैराशिषि** ।१।३।१४१। भद्राद्यर्थैर्हितशब्देन युक्ते अप्रधाने अर्थे वर्तमानाच्चतुर्थी वा

---

१ अमर्षः क्रुध् । अपचिकीर्षा द्रोहः । अक्षमा ईर्ष्या । गुणेषु दोषाविष्करणमसूया । एतदर्थैर्धातुभिर्योगे । यं प्रतीति किं? मनसा क्रुध्यति । मनसा द्रुह्यति ॥ नो चेत् यं प्रतीत्यकृत्वा कोपे इति सप्तम्या निर्दिश्येत ॥ तत्र क्रुधिः साक्षात्कोपविषयः । द्रुहादयः परंपरया । तदर्थानां कोपकार्यतया कोपविषयत्वादिति ॥ कोपविषयैरेतैर्योगे इति शक्यं प्रतिपत्तुं तर्हि मनसेत्यत्रापि स्यात् । यं प्रतीति सति न स्यात् । मनः प्रति कोपाभावात् यस्मिन्कोप इति तदर्थाच्च । न च कर्मेत्युक्ते किं प्रतिग्रहणेनेति चेत् कर्तर्यपि स्यात् ॥ कोप इति किं? धनिनो द्रुह्यति धनेच्छया भार्यामीर्ष्यति कार्येण । देवदत्तमसूयति लिप्सया । कर्मप्रतिषेधो भावादौ लाद्यर्थः । देवदत्तायासूयते । असु मानस उपतापे ॥

२ स्पृहयतेर्धातोर्यदाप्यं प्राप्यं कर्म तस्मिन्निति । स्पृहेरिति षष्ठ्या व्यवहितमप्याप्ये इत्यपेक्ष्यते । अन्यथा योगे इत्येतदभिसम्बन्धे प्रक्रमाभेदेन तृतीया निर्दिश्येत यथा "क्रुद्द्रुहा नोपसर्गात्" इति । आप्ये इति किं पुष्पेभ्यः स्पृहयति मनसा । स्पृह ईप्सायाम् ॥

भवति आशिषि प्रयुज्यमानायाम्॥ पक्षे षष्ठी। धर्माय भद्रमस्तु धर्मस्य वा। धर्माय शुभमस्तु धर्मस्य वा। चैत्रायायुर्भूयात् चैत्रस्य वा। चैत्राय जीवितं भूयात् चैत्रस्य वा। धर्माय क्षेमं भूयात् धर्मस्य वा। धर्माय कुशलं भूयात् धर्मस्य वा। सङ्घाय सुखमस्तु सङ्घस्य वा। सङ्घाय शर्मास्तु सङ्घस्य वा। चैत्रायार्थो जायतां चैत्रस्य वा। चैत्राय फलं सम्पद्यतां चैत्रस्य वा। चैत्राय हितमस्तु चैत्रस्य वा। चैत्राय पथ्यं भूयात् चैत्रस्य वा।

**३७१ शक्तार्थवषणनमःस्वस्तिस्वाहास्वधाहितैः** ।१।२।-१४२। शक्तार्थैर्वषडादिभिश्च युक्तेऽप्रधानार्थे वर्तमानाच्चतुर्थी नित्यं भवति॥ चैत्राय शक्तो मैत्रः। मल्लाय प्रभवति मल्लः। पुरुषायालं युवतिः। अग्नये वषट्। अर्हते नमः। धर्माय स्वस्ति। इन्द्राय स्वाहा। गुरुभ्यस्स्वधा। सर्वस्मै हितं॥

**३७२ रुचिक्लृप्यर्थधारिभिः प्रेयविकारोत्तमर्णेषु** ।१।२।१४३। रुच्यर्थैर्धातुभिर्युक्ते प्रेये क्लृप्यर्थैर्विकारे धारिणा चोत्तमर्णे वर्तमानाच्चतुर्थी भवति॥ साधवे रोचते धर्मः। सुदृशे स्वदते तत्त्वं। श्लेष्मणे कल्पते दधि। बन्धाय जायते रागः। चैत्राय शतं धारयते मैत्रः॥

**३७३ उत्पातेन ज्ञाप्ये** ।१।२।१४७। उत्पातेन ज्ञाप्ये वर्तमानाच्चतुर्थी भवति॥

॥ श्लोकः॥ वाताय कपिला विद्युदातपायातिलोहिनी॥
पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत्॥ १॥

---

१ नमश्शब्दोऽव्ययानव्ययस्वरूपः। तत्र वषडादिभिः साहचर्यादनव्ययरूपः। तद्योगे चतुर्थी भवति। नमः सिध्देभ्यः। तैर्न साहचर्यादनव्ययरूपः। तद्योगे द्वितीया। सिध्दं नमः॥

२ प्रेय इति किं? देवदत्ताय रोचते मोदको माधुर्येण। अत्र माधुर्ये न प्रीयमाणमतो न स्यात्। सर्वेषामेतद्रोचते इत्यत्र प्रतिभातीति दीप्त्यर्थत्वान्न भवति। रुचि अभिप्रीत्यां दीप्तौ च वर्तते। तत्र न स्यात्॥ ऋणे उत्तमः उत्तमर्णः धनिक इत्यर्थः॥

**३७४ श्लाघह्नुङ्स्थाशपां प्रयोज्ये** ।१।३।१४८। श्लाघादिभिर्युक्ते प्रयोज्ये वर्तमानाच्चतुर्थी भवति ॥ देवदत्ताय श्लाघते । स्वगुणादिकं धर्मं विज्ञापयितुमिच्छतीत्यर्थः ॥ चैत्राय ह्नुते । नास्ति न जाने न मया कृतमिति तस्य ज्ञापयतीत्यर्थः ॥ छात्रेभ्यस्तिष्ठते कन्या स्वाभिप्रायं ज्ञापयतीत्यर्थः । मैत्राय शपते पित्राद्यस्पर्शनादिना शपथं करोतीत्यर्थः ॥

**३७५ गल्हादिभिर्बहुलम्** ।१।३।१४९। गल्हादिभिर्धातुभिर्युक्ते अप्रधानेऽर्थे वर्तमानाच्चतुर्थी बहुलं यथासम्भवं भवति ॥ पापाय गल्हते । युद्धाय सन्नह्यते । चैत्राय कथयति । क्वचिन्न भवति मनसा निगल्हते । क्वचिद्विकल्पः चैत्राय धर्मं ब्रूते चैत्रं वा । शास्त्रे प्रणमति शास्तारं वा ॥

क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ॥
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥

**३७६ यदर्थम्** १।३।१५०। यत्प्रयोजनं किञ्चिद्विवक्ष्यते तस्मिन्नप्रधानेऽर्थे वर्तमानाच्चतुर्थी भवति । रथाय दारु । रन्धनाय स्थाली ॥ कस्मिन्नर्थे पञ्चमी ॥

**३७७ ङसिभ्यांभ्यस्तोकाल्पकतिपयकृच्छ्रादसत्त्वे** ।१।३।१५२। असत्त्वे अद्रव्ये वर्तमानेभ्यः स्तोकादिभ्यः ङसिभ्यांभ्यसो भवन्ति वा ॥ पक्षे करणत्वात् तृतीया । स्तोकान्मुक्तः स्तोकेन मुक्तः । अल्पान्मुक्तः अल्पेन मुक्तः । कतिपयान्मुक्तः कतिपयेन मुक्तः । कृच्छ्रात्पठाति कृच्छ्रेण पठति । असत्त्व इति किं? । स्तोकेन विषेण हतः ॥

**३७८ आरादर्थैः** ।१।३।१५३। दूरार्थैस्समीपार्थैश्च युक्तात्पञ्चमी वा भवति ॥ पक्षे षष्ठी । ग्रामाद्दूरं ग्रामस्य दूरं । ग्रामाद्विप्रकृष्टं ग्रामस्य वा । ग्रामादन्तिकं ग्रामस्य वा । ग्रामात्समीपं ग्रामस्य वा ॥

**३७९ हेतौ गुणेऽस्त्रियाम्** ।१।३।१५४। अस्त्रीलिङ्गे हेतौ गुणे द्रव्याश्रये धर्मे वर्तमानात्पञ्चमी वा भवति ॥ रत्नत्रयान्मोक्षः रत्नत्रयेण वा भवति ॥ अज्ञानाद्बन्धः अज्ञानेन वा। अस्त्रियामिति किं? बुद्ध्या व्यवहरति ॥[1]

**३८० ऋणे** ।१।३।१५५। हेतौ[2] ऋणे वर्तमानात्पञ्चमी नित्यं भवति ॥ शताद्बद्धः सहस्राद्बद्धः ॥ अपादाने अपायेऽवधाविति पञ्चमी । ग्रामादपैति वृक्षादवतरति धर्मादपैति । पापाद्बिभेति साधुः । कुसूलात्[3]पचति । ततो गृहीत्वा पचतीत्यर्थः ॥

**३८१ आख्यातर्युपयोगे** ।१।३।१५७। उपयोगो नियमपूर्वकं विद्याग्रहणं तस्मिन् गम्यमाने आख्यातर्यप्रधानेऽर्थे वर्तमानात्पञ्चमी भवति॥ उपाध्यायादधीते । आचार्याच्छृणोति ॥

**३८२ आङा** ।१।३।१५८। आङा युक्तात्पञ्चमी भवति अवधौ[4] ॥ आ ग्रामात् गच्छति । आ सूत्रग्रन्थ्यो यशो गतं समन्तभद्रस्य ॥

**३८३ वर्ज्येऽपपरिणा** ।१।३।१५९। अपपरिभ्यां युक्ताद्वर्ज्येऽर्थे[5] वर्तमानात्पञ्चमी भवति ॥ अपग्रामाद्वर्षति परिग्रामाद्वर्षति ॥

**३८४ प्रतिनिधिप्रतिदाने प्रतिना** ।१।३।१६०। प्रतिना युक्तात्पञ्चमी भवति प्रतिनिधौ प्रतिदाने च गम्यमाने ॥ वासुदेवात्प्रति प्रद्युम्नः । तिलेभ्यः प्रति माषानाददाति ।

---

१ अस्त्यत्राग्निर्धूमात् । नास्त्यत्र घटोऽनुपलब्धेः । इत्यादौ नाग्न्यादेर्धूमादिः हेतुः। कस्य तर्हि? तज्ज्ञानस्य । तत्र प्रासादात्प्रेक्षते इत्यादिवद्भवति । इह हेतुः हिनोति गच्छति कार्यं कारणत्वेन, ज्ञाप्यं ज्ञापकत्वेन इति । फलसाधनयोग्यः पदार्थ इति वा । हेताविति किं? जाड्यस्यैतद्रूपं । गुण इति किं? धनेन कुलम् ॥

२ हेताविति किं? शतेन बद्धः। अत्र शतं ऋणं बन्धकत्वेन विवक्षितं कर्तृ । अतः कर्तृकरणेत्यादिना तृतीया एव भवति ॥

३ कुसूलोऽन्तर्गृहं तस्मात्तण्डुलान् गृहीत्वा पचतीत्यर्थः ॥

४ आ पाटलीपुत्रात् वृष्टो देव इत्यत्र नापाय इति तत्र कथं पञ्चमी? इति चेत् अत्र अवधौ पञ्चमी नापाये । पाटलीपुत्रमवधीकृत्य तद्व्याप्य वृष्ट इत्यर्थः ॥

५ वर्ज्ये इति किं? अपशब्दो देवदत्तस्य । अपग्रामाद्वर्षतीत्यस्य ग्रामं वर्जयित्वा वर्षतीत्यर्थः ।

**३८५ स्थानिप्यकर्माधारे**[1] ।१।३।१६१। स्थानिप्यान्तस्य कर्मण्याधारे च वर्तमानात्पञ्चमी भवति ॥ प्रासादात्प्रेक्षते आसनात्प्रेक्षते प्रासादमारुह्य आसने उपविश्य प्रेक्षत इत्यर्थः ॥

**३८६ दिक्छब्दान्यार्थाराद्बहिरितरैः**[2] ।१।३।१६२। दिक्छब्दैरन्यार्थैराराद्बहिरितरैश्च युक्तात्पञ्चमी भवति ॥ ग्रामात्पूर्वः। ग्रामादपरः। ग्रामाद्दक्षिणः। ग्रामादुत्तरः। मासात्पूर्वं। बाल्यात्परं। चैत्रादन्यः। चैत्राद्भिन्नः। ग्रामादारात्। ग्रामाद्बहिः। चैत्रादितरः॥ कस्मिन्नर्थे षष्ठी। ङसोसामिति योगे अप्रधानेऽर्थे वर्तमानात् षष्ठी भवति ॥ राज्ञः पुत्रः। राज्ञः पुरुषः। चैत्रस्य पुत्रः। अपवादविनिर्मुक्तोऽस्य विषयः॥

**३८७ स्तात्ता** १।३।१६४। स्तात्प्रत्याहारगृहीतप्रत्ययान्तैर्युक्तात् षष्ठी भवति ॥ ग्रामस्य परस्तात्। ग्रामस्य दक्षिणतः। ग्रामस्याधरात्। ग्रामस्य पश्चात्। ग्रामस्य पुरः। ग्रामस्य पुरस्तात्। ग्रामस्योपरि। ग्रामस्योपरिष्टात् ॥

**३८८ करणे ज्ञोऽज्ञाने** ।१।३।१६५। अज्ञानार्थस्य जानातेः करणेऽर्थे वर्तमानात् षष्ठी भवति ॥ धर्मस्य जानीते धर्मेण वर्तत इत्यर्थः॥

**३८९ कृत्कामुकस्याक्तुणलक्षण्वात्थौव्ययैव्यद्गृणेनःकर्मकर्त्रोः** ।१।३।१६६। कृदन्तस्य कामुकशब्दस्य च कर्मणि कर्तरि चाप्रधानेऽर्थे वर्तमानात् षष्ठी भवति न वुणादेः॥ धर्मस्य प्रणेता

---

१ अर्थे प्रतीते सति शब्दो न दृश्यते स स्थानी। स चासौ प्यश्च स्थानिप्यः। कर्म-चाधारश्च कर्माधारम् ॥

२ दिशि दृष्टाः शब्दाः दिक्शब्दाः। दिशि यो वाचकत्वेन दृष्टः शब्दः स इति विज्ञायते। न तु वर्तमान एव ॥ तेन दिशो वाचकत्वेन दृष्टस्य शब्दस्य देशे कालेऽपि वृत्तिसत्त्वेन "दिक्शब्दा इति देशकालादिवृत्तावपि भवतीति अमोघवृत्तौ" अस्मिन् वाक्ये विहितेनादिक्शब्देन भावे द्रव्ये च वृत्तावपि तद्योगे पञ्चमी भवति। दिशि दृष्ट इति कुतो विज्ञायते? दिक्शब्द इति शब्दस्योपादानात्। दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगादय इत्यमरः। आराच्छब्दस्यार्थैरिति विकल्पापवादः। अन्यार्थ इति सिध्दे इतरशब्दः किमर्थः? इति चेत् उपलक्षितयोर्द्वयोरन्यतरवचन इतरशब्दो नान्यार्थः। षष्ठ्यपवादो योगः।

भूभृतां भेत्ता । भगवतो देशना । गुरोरासिका । विद्यायाः कामुकः ॥ न वुणादेरिति किं? । वुण् एधानाहारको व्रजति धर्मं कुर्वन् । क्तादारभ्य आ उकणः क्तण् । धर्मः कृतो देवदत्तेन । धर्मं कृतवान् देवदत्तः । धर्मं यजमानः । तर्कमधीयन् । धर्मं वदिता । धर्ममभिलाषुकः ॥ खार्थः सुकरो धर्मो भवता । सुज्ञानं शास्त्रं भवता । अव्ययं धर्मं ज्ञात्वा । धर्मं कर्तुं ॥ एष्यादिन् ग्रामङ्गमी ॥ ऋणेन् शतं धारी ॥

**३९० क्तस्य सदाधारे** ।१।३।१६७। वर्तमाने आधारेऽपि विहितो यः क्तः तदन्तस्य कर्मणि कर्तरि च वर्तमानात् षष्ठी भवति ॥ राज्ञां मतः । सक्तूनां पीतं । गुरूणामासितं ॥ कस्मिन्नर्थे सप्तमी ॥

**३९१ क्तेनो ङ्योस्सुप्** ।१।३।१७१। क्तेनन्तस्य कर्मण्यप्रधाने वर्तमानात् ङ्योस्सुपो भवन्ति ॥ धर्मे कृती । प्रवचनेऽधीती ॥

**३९२ हेतौ कर्मणा** ।१।३।१७२। कर्मणा युक्ते हेतौ वर्तमानात् सप्तमी भवति ॥ मोक्षे धर्ममाराधयति । ज्ञाने प्रवचनमधीते ॥

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
वालेषु चमरीं हन्ति सीम्नि पुष्क(सीम) लको हतः ॥

**३९३ स्वेशेऽधिना** ।१।३।१७४। अधिना युक्तात् स्वे ईश्वरे च वर्तमानात् सप्तमी भवति ॥ अधिमगधेषु श्रेणिकः अधिश्रेणिके मगधाः । आधारे इति अप्रधाने अधिकरणे वर्तमानात् सप्तमी भवति । धर्मे आस्ते । गृहे शेते स्थाल्यां पचत्योदनं ॥

**३९४ सुजर्थैः काले वा** ।१।३।१७७। सुजर्थैर्युक्ते काले आधारे

---

१ क्तात्प्रत्ययान्ताद्विहित इन् क्तेन् तस्य । यः इन्प्रत्यः क्तान्ताद्विहितस्तदन्तस्य ॥

२ हेताविति किं? देवदत्तस्य कटं करोति । कर्मणेति किं? अन्नेन वसति । विद्यया वसति । तृतीयाऽपवादो योगः । सीमलको नाम वृषलः । अत्र निमित्तस्य क्रियां प्रति विषयभावविवक्षायां आधार इत्येव सिद्धे हेतुविवक्षायां तृतीया प्राप्नोतीति तद्बाधको योगः

३ सुजप्रत्ययस्यार्थो येषां ते सुजर्थास्तैर्युक्ते इत्यर्थः । बहुव्रीहिरयमिति बहुवचनात् विज्ञायते तत्रैव बहुत्वोपपत्तेः । एतदर्थमेव बहुवचनम् । सुजर्थैरिति किं? अहनि भुङ्क्ते बहुव्रीह्याश्रयणं किं? अप्रयोगे गम्यमानेऽर्थे माभूत् । मासे पञ्चकृत्वो भुङ्क्ते । मासस्य पञ्चकृत्वो भुङ्क्ते ॥

वर्त्तमानात् सप्तमी वा भवति । द्विरह्नि भुङ्क्ते । द्विरह्नो भुङ्क्ते ॥

**३९५ स्वामीश्वराधिपतिदायाद[1]साक्षिप्रतिभूप्रसूतैश्च** ।१।३।१७९। स्वाम्यादिभिर्युक्तात् सप्तमी वा भवति ॥ पक्षे षष्ठी । गोषु स्वामी । गोष्वीश्वरः गोष्वधिपतिः । गोषु दायादः । गोषु साक्षी । गोषु प्रतिभूः । गोषु प्रसूतः । गवां स्वामीत्यादिः ॥

**३९६ यद्भावो भावलक्षणम्** ।१।३।१८०। भावः क्रिया यस्य भावो भावान्तरस्य लक्षणं ज्ञापकं[2] भवति तस्मिन्नर्थे वर्तमानात् सप्तमी भवति ॥ गोषु दुह्यमानासु गतः । दुग्धास्वागतः ॥

**३९७ षष्ठी चानादरे[3]** ।१।३।१८३। यस्य भावो भावान्तरस्य लक्षणं तस्मात् सप्तमी षष्ठी च भवतोऽनादरे गम्यमाने ॥ रुदति लोके प्राव्राजीत् । रुदतो लोकस्य प्राव्राजीत् ॥

**३९८ कारक[4]मध्येऽध्वकाले पञ्चमी च** ।१।३।१८६। द्वयोः कारकयोर्मध्ये अध्वनि काले च वर्तमानात् सप्तमी पञ्चमी च भवतः ॥ बाणोऽयं क्रोशे लक्ष्यं विध्यति । बाणोऽयं क्रोशाल्लक्ष्यं विध्यति । मुनिरयं द्व्यहे भोक्ता मुनिरयं द्व्यहाद् भोक्ता ॥

---

१ दायमादत्ते इति दायादः । अथवा दायति भुङ्क्ते इति दायादः । चकारेण वाऽनुकृष्यते । स्वामीश्वराधिपतीति पर्यायग्रहणात् पर्यायान्तरयोगे न भवति । आदौ षष्ठी सिध्दैव सप्तमी तु नास्ति क्रियाप्रतीत्यभावादनधिकरणत्वादिति पक्षे सप्तम्यर्थं वचनम् ॥

२ ज्ञापकं प्रसिध्दं लक्षणं अप्रसिध्दं लक्ष्यं लक्षयति । अत्र गवां दोहेन भावेन कालतः प्रसिध्देन अप्रसिद्धं देवदत्तादेर्गमनं लक्ष्यते ॥

३ चकारः सप्तमीसमुच्चयार्थः । असति चकारे षष्ठ्या सप्तम्यपवादकतया बाध्येत ॥ मण्डूकप्लुत्या यद्भावो भावलक्षणमित्यनुवर्तते । क्रोशति बन्धुवर्गे क्रोशतो बन्धुवर्गस्य प्राव्राजीत् ॥ क्रोशतोऽनादृत्य प्राव्राजीदित्यर्थः ॥

४ क्रियानिर्वर्तकं कारकं । कारकं च कारकं च कारके तयोर्मध्यं कारकमध्यं तस्मिन् द्वयोः कारकयोर्मध्ये योऽध्वा कालश्च तस्मिन्वर्तमानादित्यर्थः । चकारः पञ्चमीसप्तम्योः समुच्चयार्थः । इह कर्तृकर्मणोः कर्माधिकरणयोः कर्मापादानयोर्मध्येऽध्वा कालश्चेत्यादि । मुनिरयं द्व्यहे भोक्तेत्यत्र भुजिक्रियाकर्तृशक्त्योर्मध्ये द्व्यहः कालः । सम्प्रदानमपादानं करणाधिकरणं तथा ॥ भावः कर्म च कर्ता च सप्तधा विद्धि कारकम् ॥

**३९९ चेष्टागत्याप्येऽनाक्रान्ते द्वितीयाचतुर्थ्यौ** ।१।३।१८७। चेष्टारूपायाः गतेराप्ये कर्मणि वर्तमानात् द्वितीयाचतुर्थ्यौ भवतः नाक्रान्ते ॥ ग्रामं गच्छति ग्रामाय गच्छति । अनाक्रान्त इति किं? स्त्रियं गच्छति आक्रम्य भुङ्क्त इत्यर्थः । चेष्टागत्याप्य इति किं? । ग्रामं मनसा प्रपद्यते ॥

**४०० तुल्यार्थैस्तृतीया** ।१।३।१८८। तुल्यार्थैर्युक्तात्तृतीया भवति ॥ मात्रा तुल्यः । पित्रा समानः ॥

**४०१ षष्ठी** ।१।३।१८९। तुल्यार्थैर्युक्तात् षष्ठी भवति ॥ मातुस्तुल्यः। पितुस्समानः ॥

**४०२ द्वितीया चैनेनानञ्चेः** ।१।३।१९०। एनप्रत्ययान्तेन युक्तात् द्वितीया षष्ठी वा भवतः नाञ्चेः ॥ ग्रामं पूर्वेण । ग्रामस्य पूर्वेण । अनञ्चेरिति किं? प्राग्ग्रामात् ॥

**४०३ पञ्चमी चर्ते** ।१।३।१९१। ऋतेयुक्तात् द्वितीयापञ्चम्यौ भवतः ॥ ऋते धर्मं कुतस्सुखम् । ऋते धर्माद्वा ॥

**४०४ पृथग्नाना तृतीया च** ।१।३।१९२। पृथग्नानायुक्तात् तृतीया-

---

१ चतुर्थी वेत्युक्त्वा पक्षे कर्मणि द्वितीया सिद्धेति विज्ञाने कृति कर्मणि द्वितीयाप्राप्तौ कृत्कामुकेत्यादिना षष्ठी द्वितीयापवादत्वात् । द्वितीयाग्रहणे तु द्वितीयाग्रहणस्यान्यथाऽनर्थक्यात् परत्वाच्च षष्ठीं बाधित्वा द्वितीयैव स्यात् इति षष्ठीबाधनार्थं द्वितीयाग्रहणम् ॥ पुनर्द्वितीयाग्रहणात् द्वितीया षष्ठीं बाधते । इह चतुर्थी कथं षष्ठीं बाधते? इति चेत् कर्ता कटस्येत्यत्र षष्ठी सावकाशा ग्रामाय गच्छतीत्यत्र चतुर्थी च ॥ ग्रामाय गन्तेत्यत्रोभयप्राप्तौ परत्वाच्चतुर्थी षष्ठीं बाधते । चतुर्थ्यां विकल्पः कृति षष्ठीबाधनार्थः । तेन ग्रामं गन्ता, ग्रामाय गन्ता, एवं सर्वत्र द्रष्टव्यम् । चेष्टाग्रहणं किं? मनसा पाटलीपुत्रं गच्छति । आप्य इति किं? ग्रामादागच्छति । गतिग्रहणं किं? ओदनं पचति ॥

२ तुल्यशब्द उपमेयवाची तस्यार्थो येषां ते तुल्यार्थास्तैः । अर्थग्रहणं पर्यायार्थम् । उपमाऽस्ति कृष्णस्य उपमा नास्ति कृष्णस्येत्यत्रोपमाशब्दो न तुल्यार्थ इति न भवति ॥ उपमा तुला इव वत् यथा तथा न तुल्यार्थाः। तेन गुरुणा समः सदृक् इत्यादौ द्रष्टव्यम्॥

३ तृतीयाप्रविकल्प्य षष्ठीविधानं सप्तमीबाधनार्थं । तेन गवां तुल्यः स्वामी । गोभिस्तुल्यः स्वामी इत्यत्र स्वामीश्वरेति सप्तमी न स्यात् । योगविभाग उत्तरार्थः ।

पञ्चम्यौ भवतः ॥ पृथक् देवदत्तेन देवदत्ताद्वा । नाना देवदत्तेन देवदत्ताद्वा॥

४०५ **विनेमास्तिस्रः** ।१।३।१९३। विनायुक्तात् इमा अनन्तरोक्तास्तिस्रो विभक्तयो द्वितीयातृतीयापञ्चम्यो भवन्ति ॥ विना धर्मं । विना धर्मेण । विना धर्माद्वा कुतस्सुखं ॥

४०६ **सप्तमी चासत्त्वारादर्थात्** ।१।३।१९४। अद्रव्यवाचिनो दूरान्तिकार्थात् द्वितीयातृतीयापञ्चमीसप्तम्यो भवन्ति ॥ ग्रामस्य दूरं दूरेण दूरात् दूरे वा गच्छति । ग्रामस्य समीपं समीपेन समीपात् समीपे वा गच्छति ॥

४०७ **हेतौ हेत्वर्थैः सर्वाः प्रायः** ।१।३।१९५। हेत्वर्थैर्युक्ते हेतौ वर्तमानात् प्रायेण सर्वा विभक्तयो भवन्ति ॥ धर्मेण हेतुना । धर्माय हेतवे । धर्माद्धेतोः । धर्मस्य हेतोः । धर्मे हेतौ वर्तते ॥ एवं किं निमित्तं । किं कारणं इत्यादि ॥

॥ इति कारकसंग्रहः ॥

---

## ॥ अथ समाससंग्रहोऽभिधीयते ॥

परस्परापेक्षाणां पूर्वोत्तरपदानां सुबन्तानां कथञ्चिदैकपद्यं समासः[1] । स च षोढा । बहुव्रीहिरव्ययीभावस्तत्पुरुषः कर्मधारयो द्विगुर्द्वन्द्वश्चेति । तत्र बहुव्रीहिस्त्रिधा । उत्तरपदार्थप्रधानः उभयपदार्थप्रधानः अन्यपदार्थप्रधानश्चेति । तत्र उत्तरपदार्थप्रधानो यथा । द्वि दशन् इति स्थिते द्वि शब्दादौट् दशन्शब्दाज्जस् द्वौ वारौ दशेति विगृह्य । "सुप्सुपा समासो बहुलं ।२।१।११"[2] इत्यधिकृत्य ॥

---

१ समनं संक्षेपणं । परस्परापेक्षयोः पूर्वोत्तरपदयोरेकत्वेन न्यसनं समासः ॥

२ सुबन्तं सुबन्तेन सह बहुलं समस्यते तत्समसनं समाससञ्ज्ञं भवति ॥ बहुलमिति प्रयोगानुसरणार्थम् । बहुलग्रहणात् क्वचित्सुप् सुपा । असुप् सुपा । सुप् असुपा । असुबप्यसुपाऽपि समस्यते । तद्यथा- राजपुरुषः । मासकं नमः । अनुव्यचलत् । अश्नीत पिबता । भास्करोऽस्मिन्निति एकार्थं चेति समासः । भास्यर्कमिति समासेऽस्ति विशेषः । अन्यपदार्थप्रधानत्वाभावान्न सुकुरूपसिरिति । अनुव्यचलदिति तिङन्तम् । अभिव्यक्तार्थं 'द्वन्द्वः सहोक्तौ ।२।१।८०।' इति वक्ष्यते ॥

**४०८ सुज्वार्थे सङ्ख्या सङ्ख्यया सङ्ख्येये बहुव्रीहिः** ।२।१।२। वारः सुजर्थः विकल्पस्संशयो वा वार्थः। वाराद्यर्थेषु वर्तमानं सङ्ख्यावाचि सुबन्तं सङ्ख्येये वर्तमानेन सङ्ख्यावाचिना सुबन्तेन समस्यते स समासो बहुव्रीहिः॥

**४०९ प्रत्ययस्य च सुपः श्लुक्** ।२।२।१। समासस्य प्रत्ययस्य च निमित्तस्य सुपः श्लुक् भवति॥

**४१० सूक्तं पूर्वं** ।२।१।१०८। समासविधौ प्रथमानिर्दिष्टं पदं पूर्वं प्रयोज्यम् इति॥ द्विशब्दस्य पूर्वनिपातः। "बहुव्रीहेः काष्ठेटः ।२।१।१८६।" इत्यधिकृत्य॥

**४११ प्रमाणीसङ्ख्याड्डः** ।२।१।१८९। प्रमाणीशब्दान्तात्सङ्ख्यावाचिशब्दान्ताच्च बहुव्रीहेर्डप्रत्ययो भवति॥ ड इत्। अन्त्याजादिलुगर्थः बहुव्रीहेराश्रयलिङ्गत्वात्त्रिलिङ्ग्यां रूपं नेयम्। अस्य बहुत्ववाचित्वाज्जसादयः। द्विदशाः पुमांसः। द्विदशाः स्त्रियः। द्विदशानि वस्त्राणि। एवं त्रिदशचतुर्दशादयः॥ उभयपदार्थप्रधानो यथा। द्वि त्रि इति स्थिते। द्विशब्दादौ त्रिशब्दाज्जस्। द्वौ वा त्रयो वेति विगृह्य। सुज्वेति समासः। सुपः श्लुक्॥

**४१२ सङ्ख्याऽल्पा समासे** ।२।१।१२२। समासे अल्पा सङ्ख्या महत्याः सङ्ख्यायाः पूर्वं निपतति इति॥ द्विशब्दस्य पूर्वनिपातः।

---

१ उपगु अस् इति स्थिते तद्धितप्रत्ययान्तावयवस्य सुपः श्लुक्। पुत्रमिच्छत्यात्मनः पुत्रकाम्यतीति धातुप्रत्ययान्तावयवस्यापि। समासस्य हि आरम्भकमाद्यं पदमिति वैयाकरणानां प्रसिद्धिः। समासप्रत्ययान्तान्तोत्पन्नस्य सुपः श्लुक् न भवति। अव्ययीभावस्येत्यारम्भात् प्रत्ययस्येति सुपोऽन्यः प्रत्ययः परिगृह्यते। चकारः समासार्थः। अस्य योगस्याव्ययस्येत्यत्राकृत्वा इह पृथगारम्भः श्लुचः प्रतिषेधे प्राप्त्यन्तरानुमानबाधनार्थः। अन्यथा विशेषासर्वविषयं प्राप्त्यन्तरमनुमीयेत॥

२ अङ्गुल्यन्ताद्बहुव्रीहेः काष्ठे वर्तमानात् टः समासान्तो भवति॥ द्वे अङ्गुली यस्य तद्द्व्यङ्गुलं त्र्यङ्गुलमित्यादि। धान्यानां कण्टकानां वा विक्षेपणं काष्ठमुच्यते। दीर्घाङ्गुली तीक्ष्णागुंली यष्टिः। काष्ठ इति किं? पञ्चाङ्गुलिर्हस्तः॥

प्रमाणीतिं ड इत्यादि । द्वित्राः पुरुषाः । द्वित्राः स्त्रियः । द्वित्राणि वस्त्राणि । एवं पञ्चषाः षट्सप्ताः सप्ताष्टाः अष्टनवाः नवदशाः दशैकादशाः इत्यादयः ॥ अन्यपदार्त्थप्रधानो यथा । उप विंशति इति स्थिते । उभाभ्यां सुः । उप समीपं गता विंशतिर्येषामिति विगृह्य ॥

**४१३ अव्ययम्** ।२।१।४। अव्ययं सुबतं सङ्ख्यावाचिना सुबन्तेन सह समस्यते द्वितीयाद्यन्यान्यपदार्त्थेऽभिधेये स च समासो बहुव्रीहिः ॥ शेषं प्राग्वत् । प्रमाणीति डस्य ॥

**४१४ इजाद्यायास्तद्धितः** ।१।१।४२। इज्युद्ध इत्यत आरभ्य आ आयप्रत्ययान्ताद्विहितः प्रत्ययस्तद्धितसंज्ञो भवति इति । तद्धितसंज्ञायाम् ॥

**४१५ विंशतेस्तेर्डिति** ।२।३।७३। विंशतेस्त्तेर्लुग्भवति डिति तद्धिते परे ॥ पुनरेरिति लुक् । उपविंशाः । एवमुपत्रिंशादयः ॥ प्राप्त उदक । ऊढ रथ । उपहृत बलि । उद्धृत ओदन । आयत बाहु । बहु वृक्ष । उच्चैस् मुख इति स्थिते । प्राप्तादिभ्यः सुः आयतबाहुभ्यामौ बहुवृक्षाभ्यां जस् । प्राप्तमुदकं यम् । ऊढो रथो येन । उपहृतो बलिर्यस्मै । उद्धृत ओदनो यस्मात् । आयतौ बाहू यस्य । बहवो वृक्षा यस्मिन् । उच्चैर्मुखं यस्येति क्रमेण विगृह्य ॥

**४१६ एकार्त्थे च** ।२।१।५। एकार्त्थे समानाधिकरणमव्ययं च

---

१ एकः समानोऽर्थो द्रव्यमधिकरणं यस्य तत् एकार्थं सलिंगसंख्याविभक्त्यर्थम् । एकार्थं इति किं? पञ्चभिर्भुक्तमस्य बहुलाधिकारात् अमा सार्धं सत्रा साकं पुत्रोऽस्येत्यत्र न भवति । क्वचिदन्यत्रापि भवति करे कृतं येन सः कृतकरः । क्वचिन्नित्यः प्रपतितानि पर्णानि प्रपर्णः उष्ट्रस्येव मुखं यस्य स उष्ट्रमुखः । पितृस्थान इत्यादौ उष्ट्रादिपदं उष्ट्रमुखतुल्ये वर्तत इत्येकार्थत्वम् । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकार्थप्रवृत्तिः सामानाधिकरण्यम् । प्राप्तमित्याद्युदकमित्यादिना समानाधिकरणं । यमित्यादि द्वितीयान्तमन्यपदम् । ग्राम इत्यादिरन्यपदार्थः । प्रचुरविषयप्रदर्शनार्थमेकार्थे चेत्युच्यते । अन्यथा यद्यनेकार्थेऽपि भवति किमेकार्थग्रहणेनेति ॥

सुबन्तं सुबन्तेन सह समस्यते द्वितीयाद्यन्तान्यपदार्थेऽभिधेये स च समासो बहुव्रीहिः ॥ सुपः लुक् ॥

**४१७ विशेषणसर्वादिसङ्ख्यं बहुव्रीहौ** ।२।१।११०। विशेषणं सर्वादि सङ्ख्यावाचि च सुबन्तं बहुव्रीहौ पूर्वं प्रयोज्यं ॥ भेदकं विशेषणं भेद्यं विशेष्यं । प्राप्तोदको ग्रामः । ऊढरथोऽनड्वान् । उपहृतबलिर्यक्षः । उद्धृतौदनः शरावः । आयतबाहुः पुमान् । बहुवृक्षो ग्रामः । उच्चैर्मुखश्चैत्रः । सुप्रजाभ्यां सुः शोभना प्रजा अस्येति विगृह्य समासे ॥

**४१८ अस्प्रजायाः** ।२।१।१९७। नञ् दुस् सु इत्येतेभ्यः परो यः प्रजाशब्दः तदन्ताद्बहुव्रीहेरस्वा भवति ॥ एरिति लुक् । सुप्रजाः सुप्रजसौ सुप्रजस इत्यादि । पक्षे न्यग्गोषत इति ह्रस्वः सुप्रजः । एवं दुःप्रजस्प्रजस्शब्दौ ॥ अल्पा मेधा अस्येति विगृह्य । समासे ॥

**४१९ अल्पाच्च मेधायाः** ।२।१।१९८। नञ् दुस् इत्येतेभ्यः अल्पशब्दाच्च परो यो मेधाशब्दः तदन्ताद्बहुव्रीहेरस् भवति ॥ अल्पमेधाः अल्पमेधसौ अल्पमेधसः इत्यादि ॥ एवममेधस्दुर्मेधस्सुमेधस्शब्दाः ॥ तुल्या जातिर्येषामिति विगृह्य समासे ॥

**४२० जातेश्छस्सामान्यवति** ।२।१।२०२। जातिशब्दाद्बहुव्रीहेश्छप्रत्ययो भवति सामान्यवत्यर्थे ॥ च्छ ईय् । तुल्यजातीयाः । एवं

---

१ मन्दाच्च मेधाया अस् भवतीत्येके मन्दमेधस इति । तथाच प्रयोगः । यत्तदेवास्ति चेदत्र विषमं मन्दमेधसाम् । इति नागकुमारकाव्ये ॥ यशोधरकाव्यादावप्येवमेवोक्तम्॥ मानिक्येकार्थेति पुम्भावः ॥

२ दुर्जातेः सूतपुत्रस्यैवेत्यत्र यो जातिशब्दो जन्मपर्यायः सः । न सामान्यवान् । सामान्यवतीति सामान्यमात्रसम्बन्धिन्यन्यपदार्थे समासे वाच्ये इत्युच्यते । न तु विधीयमानसामान्यसम्बन्धिनीति । तत्र सामान्यं विधीयमानं वाऽस्तु प्रतिषिध्यमानं वाऽस्तु सर्वथा तत्सम्बन्धिन्यन्यपदार्थे च्छः । अजातीयः सजातीय इत्यादि ॥ सामान्यवतीति किं? बहुजातिर्ग्रामः । अत्र ग्रामो न सामान्यवान् किं तर्हि तदधिष्ठिताः पुरुषाः । सामान्यग्रहणं किं? दुर्जातेः सूतपुत्रस्य । अत्र जातिशब्दो जन्मपर्यायः । जातीयसन्दस्य धर्मादिषु पठितत्वात् यज्जातीयः तज्जातीय इति सिध्यति ॥

सजातीयः । विजातीयः । यज्जातीयः । तज्जातीयादयः ॥ सुधर्मशब्दाभ्यां सुः शोभनो धर्मोऽस्येति विगृह्य प्राग्वत्समासः ॥

**४२१ धर्मादन् द्विपदात्** ।२।१।१९१। धर्मशब्दान्ताद्द्विपदबहुव्रीहेरन् भवति ॥

**४२२ न हृस्यन्तः** ।१।१।६५। समासान्तं पदं पदसंज्ञं न भवति॥

**४२३ एः** ।२।३।७४। अपदान्तेऽवर्णेवर्णयोर्लुग्भवति तद्धिते परे ॥ पुनस्ततः स्वादयः । सुधर्मा सुधर्माणौ सुधर्माणः इत्यादि । एवम् अनन्तधर्मेत्यादयः । द्विपदादिति किं? कृतसर्वधर्मः ॥ समानो धर्मोऽस्येति बहुव्रीहौ ॥

**४२४ सः समानस्य धर्मादिषु च** ।२।२।१०९। समासे समानशब्दस्य सो भवति धर्मादिषु दृगादिषु च परेषु ॥ सधर्मा । सपक्षः । सदेशः इत्यादि ॥ चित्रागोशब्दाभ्यां जम् चित्रा गावोऽस्येति विगृह्य पूर्ववत्समासादि ॥

**४२५ मानिस्त्र्येकार्थ्ययोः स्त्र्यन्यतोऽनूः** ।२।२।४१। अन्यतो विशेष्यवशात् स्त्रियां वर्तमानः शब्दः समासे पुंवद्भवति मानिशब्दे स्त्रीलिङ्गैकार्थे विशेष्ये च परे । नोदन्तः ॥ पुंवत्त्वादाडभावः ॥

**४२६ न्यग्गोण्यतोऽनंशीयोबहुव्रीहेर्ह्रस्वः** ।२।१।१२३। न्यक्क्प्रधानं यो गोशब्दः यश्च ण्यत् स्त्रीप्रत्ययस्तदन्तस्य समासस्य

---

१ द्विपदबहुव्रीहेरित्युक्तत्वाद्बहुपदबहुव्रीहिरप्यस्तीति विज्ञायते तत्र न भवतीत्यर्थः । तत्रोदाहरणं यथा- परमः स्वो धर्मो यस्य सः परमस्वधर्मः । कृतः सर्वो धर्मो येन सः कृतसर्वधर्मः ॥ धर्मादिति किं? लम्बकर्णः ॥

२ न्यञ्चतीति न्यक् । गच्छतीति गौः । अप्रत्याहारगृहीतप्रत्ययः ण्यत् । गौश्च ण्यत् च गोण्यत् । न्यक् च तत् गोण्यत् च न्यग्गोण्यत् तस्य न्यग्गोण्यतः । ईयाश्चासौ बहुव्रीहिश्च ईयोबहुव्रीहिः । अंशी चासौ ईयोबहुव्रीहिश्च अंशीयोबहुव्रीहिः न विद्यते अंशीयोबहुव्रीहिर्यस्य तदनंशीयोबहुव्रीहि तस्य । न्यग्ग्रहणं किं? सुगोः । ण्यद्ग्रहणं किं? अतितन्त्रिः । अतिलक्ष्मीः । अतिधीः । अतिभूः ॥ अनंशीयोबहुव्रीहेरिति किं? अर्धपिप्पली । तुर्यभिक्षा ॥

ह्रस्वो भवति नांशिसमासस्य ईयसन्तस्य च बहुव्रीहेः ॥ आसन्नः । चित्रगुर्देवदत्तः । रूपवती भार्याऽस्येति विगृह्य । प्राग्वत्समासादि । पुंवद्भावो ह्रस्वश्च । रूपवद्भार्यः । एवं दिव्यवाणिः । प्रियनारिरित्यादयः ॥ बहव्यः प्रेयस्यो यस्येति विगृह्य पूर्ववत्समासादि । अनंशीयोबहुव्रीहेरिति निषेधान्न ह्रस्वः ॥

४२७ ईयसः ।२।१।१३०। ईयसन्तात् कन् न भवति ॥ बहुप्रेयसी पुमान् ॥ शोभनो गन्धोऽस्येति विगृह्य प्राग्वत्समासादि ॥

४२८ सूत्पूतिसुरभेर्गन्धादिद्गुणे ।२।१।२०४। स्वादिभ्यः परो यो गन्धशब्दः तदन्ताद्बहुव्रीहेरिद्भवति गुणे वाच्ये ॥ तद्दत् । एरित्यतो लुक् । सुगन्धिः । एवमुद्गन्धिः । पूतिगन्धिः । सुरभिगन्धिः ॥

४२९ वाऽल्पे ।२।१।२०५। अल्पेऽर्थे गन्धशब्दान्ताद्बहुव्रीहेरिद्वा ॥ घृतस्य गन्धोऽल्पो यस्मिन्निति घृतगन्धिः घृतगन्धः ओदनः ॥

४३० वोपमानात् ।२।१।२०६। उपमाने गन्धशब्दान्ताद्बहुव्रीहेरिद्वा भवति ॥ पद्मस्येव गन्धो यस्य पद्मगन्धिः पद्मगन्धः ॥ द्वौ पादावस्येति विगृह्य समासः ॥

४३१ सुसङ्ख्यावाहस्त्यादेः पादस्य लुक् ।२।१।२०७। सोः सङ्ख्यावाचिनः उपमानाच्च परो यः पादशब्दः तदन्तस्य बहुव्रीहेर्लुग्भवति न हस्त्यादेः । द्विपाद् । एवं सुपाद्चतुःपाद्व्याघ्रपादादयः । न हस्त्यादेरिति किं? हस्तिपादः । प्रिया जायाऽस्येति विगृह्य समासादि ॥

४३२ जायाया जानिः ।२।१।२१६। बहुव्रीहेरन्तस्य जायाशब्दस्य जानिर्भवति ॥ प्रियजानिः ॥

४३३ वाऽन्यार्थे ।२।२।११३। अन्यार्थे बहुव्रीहौ सहस्य सो

१ सुत्पूतिसुरभेरिति किं? तीव्रगन्धो हिङ्गुः । उग्रगन्धा वचा । शोभनगन्धाः कुसुमगन्धादयः । समासस्यान्त इत्यधिकारे वा पादपरिसमाप्तेरिति चिन्तामणौ ॥

२ पुनर्वाग्रहणमुत्तरत्र वा इत्यधिकारनिवृत्त्यर्थम् ॥

वा भवति उत्तरपदे परे ॥ सह जायया वर्तत इति सजानिः सहजानिरित्यादयः ॥

४३४ **वोर्ध्वात्** ।२।१।२२३। ऊर्ध्वशब्दाज्जानोर्बहुव्रीहौ ज्ञुज्ञौ वा भवतः ॥ ऊर्ध्वे जानुनी अस्य ऊर्ध्वज्ञुः । ऊर्ध्वज्ञः । ऊर्ध्वजानुः ॥ घट इव ऊधोऽस्या इति विगृह्य समासादि ॥

४३५ **स्त्रियामूधसोऽनङ्** ।२।१।२२५। बहुव्रीहेरन्तस्योधसः स्त्रियामनङ् भवति ॥ अङावितौ ङित्त्वादन्त्यादेशः । ऊध्न इति ङीं भः। घटोध्नी गौः । एवं पीवरोध्न्यादयः ॥

४३६ **इनः कच्** ।२।१।२२६। इन्नन्ताद् बहुव्रीहेः कच् भवति ॥ च इत् न कचीति विशेषणार्थः । बहवः करिणोऽस्मिन् बहुकरिको देशः ॥

४३७ **उरःप्रभृत्युन्नित्याटः** ।२।१।२२७। उरस् इत्याद्यन्तात् ऋदन्तात् नित्याङन्ताच्च बहुव्रीहेः कच् भवति ॥ व्यूढमुरोऽस्य व्यूढोरस्कः । बहुसर्पिष्कः । एकपितृकः । बह्वी लक्ष्मीरस्येति विगृह्य समासे कचि ॥

४३८ **न कचि** ।१।३।८४। अण्ङ्योः कचि ह्रस्वो न भवति ॥ बहुलक्ष्मीकः । बहुकुमारीकः । बहुकर्कन्धूकः ॥

४३९ **नञोऽर्थात्** ।२।१।२२८। नञोऽर्थान्ताद्बहुव्रीहेः कच् भवति ॥ अनर्थकः । स्त्रियामाङि ॥

---

१ "सम्प्राज्जानोर्ज्ञुज्ञौ ।२।१।२२२।" सम्प्राभ्यां परस्य जानुशब्दस्य बहुव्रीहौ ज्ञुज्ञावित्यादेशौ भवतः । इत्यतो ज्ञुज्ञावित्यादेशावनुवर्तेते ॥ ऊर्ध्वज्ञुरूर्ध्वजानुः स्यादित्यमरः । बहुलाधिकारादेकार्थं चेति समासः ॥

२ उरःप्रभृति आ लक्ष्मीशब्दान्तात् । उरःप्रभृतिर्गणः । नित्येति किं? पृथुश्रीः पृथुश्रीकः । लम्बभ्रूः लम्बभ्रूकः । पूर्ववदत्र स्त्रियामिति योगविभागः ॥ उरस्, सर्पिस्, उपानह् दधि, मधु, शालि, पुमान्, अनड्वान्, पयः, गौः, लक्ष्मीः इत्युरःप्रभृतिः । अत्र पुमादीनामेकवचनान्तानामेव पाठः । तेन वचनान्तरे 'शेषात्सिद्धनन्दिनः' इति विकल्पो भवति । द्विपुंस्कः । बहुलक्ष्मीकः । कश्चिल्लक्ष्मी स्त्रीति च प्रातिपदिके पठन्ति ॥

**४४० त्यायदाघतः** ।१।३।९०। त्यप्रत्ययस्यायदादेश्चातः इद्भवति आट्परे प्रत्ययावयवे के परे अनिति[1] ॥ अनर्थिका ॥ गुणवती भार्याऽस्येति विगृह्य समासादि ॥

**४४१ शेषोत्सिद्धनन्दिनः** ।२।१।२२९। यस्य समासान्तो न विहितः तस्मात् बहुव्रीहेः कच् वा भवति[2] ॥

**४४२ वाऽऽङः** ।१।३।८५। आङन्तस्य ह्रस्वो वा भवति कचि परे ॥ पक्षे ह्रस्वः । गुणवद्भार्याकः गुणवद्भार्यः ॥

अव्ययीभावोऽपि त्रेधा ॥ अन्यपदार्थप्रधानः पूर्वपदार्थप्रधानः उत्तरपदार्थप्रधानश्चेति । तत्रान्यपदार्थप्रधानो यथा । केश केश दण्ड दण्ड इति स्थिते सर्वेभ्यो जस् । केशाश्च केशाश्च परस्परस्य ग्रहणं यस्मिन् युद्धे । दण्डाश्च दण्डाश्च परस्परस्य प्रहरणं यस्मिन् युद्धे इति विगृह्य ॥

**४४३ मिथो ग्रहणे प्रहरणे च सरूपं युद्धेऽव्ययीभावः** ।२।१।६। अन्योऽन्यस्य ग्रहणे प्रहरणे च वर्तमानं सरूपं सुबन्तं तादृशा सुबन्तेन सह समस्यते अन्यपदार्थे युद्धे वाच्ये स च समासोऽव्ययीभावः । सुपः श्लुगादि ॥

**४४४ इज्युद्धे** ।२।१।१३५। युद्धे विहितात्समासादिच् प्रत्ययो भवति ॥ च इत् ॥

**४४५ आदिजन्ते** ।२।२।८७। इजन्ते उत्तरपदे पूर्वपदस्यात् भवति ॥ केशाकेशि । दण्डादण्डि । एवं मुष्टामुष्टिखड्गाखड्गिप्रभृतयः । बहुलाधिकारात् कचिदाकारो न भवति । अस्यसि ॥ पूर्वपदार्थप्रधानो यथा । गङ्गाया-

---

१ न इत् यस्य स नित् न नित् अनित् तस्मिन् अनिति । अनितीति किं? अनुकम्पिता देवदत्ता । अनीति पर्युदासेन प्रत्ययग्रहणादिह न भवति । शक्नोतीति शका ॥

२ शेषादिति किं? प्रियनगरो व्याघ्रपाद् । यत्र समासान्तरं नास्ति तत्र सावकाशः । सिध्दनन्दिन इति सिध्दनन्द्याचार्यसम्मतमित्यर्थः । तेन बहुखट्वक इत्यादौ सिध्दनन्द्याचार्यग्रहणं विकल्पार्थम् । न कचीत्यनेन पूर्वेण योगेन ह्रस्वनिषेधे पक्षे वा ह्रस्वोऽनेन भवतीत्ययं विकल्पार्थः ।

ङ्सात् ङस् पारशब्दात्सुः गङ्गायाः पारमिति विगृह्य ॥

**४४६ पारे मध्येऽन्तः षष्ठ्या** ।२।१।९। पारे मध्ये अन्तर् इत्येतानि सुबन्तानि षष्ठ्यन्तेन सह समस्यन्ते पूर्वपदार्थे वाच्ये ॥ शेषं प्राग्वत् । निपातनादेत्वं । ह्रस्वादि । पारेगङ्गम् । एवं समुद्रस्य मध्यं मध्येसमुद्रं । वधूनामन्तः अन्तर्वधु ॥ यावत् अमत्र इति स्थिते उभाभ्यां जम् यावन्त्यमत्राणीति विगृह्य ॥

**४४७ यावदवधारणे** ।२।१।१०। यावदित्येतत्सुबन्तं सुबन्तेन सह समस्यते । अवधारणे सङ्ख्यानियमे द्योत्ये ॥ यावदमत्रं भोजयातिथीन् ॥ आङः सुः संसार इत्यतो ङसिः आ संसारादिति विगृह्य ॥

**४४८ बहिष्पर्यपाङ्च्** ।२।१।११ बहिरादिसुबन्तं सुबन्तेन सह समस्यते ॥ शेषं प्राग्वत् । आसंसारं । बहिर्ग्रामात् । बहिर्ग्रामं । परिग्रामात् । परिग्रामं । अपग्रामात् अपग्रामं । प्राग्ग्रामात् प्राग्ग्रामं ॥ अभि सु मित्र अम् इति स्थिते मित्रमभिमुखमिति विगृह्य ॥

**४४९ लक्षणेनाभिप्रत्याभिमुख्ये** ।२।१।१२। अभि प्रति इत्येते सुबन्ते लक्षणवाचिना सुबन्तेन सह समस्येते आभिमुख्ये द्योत्ये ॥ अभिमित्रं गच्छति । एवं प्रत्यग्नि पतन्ति शलभाः ॥ अनु सु विदेह शस् इति स्थिते अनु विदेहान् आयते इति विगृह्य ॥

**४५० दैर्घ्येऽनुः** ।२।१।१३। अन्विति सुबन्तं लक्षणवाचिना सुबन्तेन सह समस्यते दैर्घ्ये गम्यमाने ॥ अनुविदेहं सीता सीतोदा च ॥ अनु सु मेरु ङस् इति स्थिते मेरोः समीप इति विगृह्य ॥

**४५१ समीपे** ।२।१।१४। समीपे वर्तमानं अन्वित्येतत् सुबन्तं समीपवाचिना सुबन्तेन सह समस्यते ॥ अनुमेरु कुरवः ॥ इति अकलङ्कः । सह क्षत्र । सु मद्र । दुस् यवन । निस् जन । नि वात । अति कम्बल । अधि स्त्री । अनु रथ । सह चक्र । अनु रूप । प्रति अर्थ । अनु ज्येष्ठ । सह शील । सह तृण । उप कुम्भ । सह षड्जीवनिकाय । इति स्थिते

एतेभ्यो यथायोगं स्वादयः। अकलङ्कस्य शब्दप्रथा। क्षत्रस्य सम्पत्। मद्राणां समृद्धिः। यवनानाम् ऋद्ध्यभावः। जनानामभावः। वातस्य अत्ययः। कम्बलस्यायमकालः। स्त्रीषु अधिकृत्य। रथस्य पश्चात्। चक्रेण सह। रूपस्य योग्यम्। अर्थमर्थं प्रति। ज्येष्ठानामनतिवृत्त्या। शीलस्य सदृशं। सकलं तृणं। कुम्भस्य समीपं। षड्जीवनिकायस्यान्तं कृत्वा इति विगृह्य ॥

**४५२ शब्दप्रथासम्पत्समृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिसुप्पश्चाद्युगपद्यथासदृक्साकल्यान्तेऽव्ययम्** ।२।१।१८। शब्दप्रथादिष्वर्थेषु वर्तमानमव्ययं सुबन्तं सुबन्तेन सह समस्यते स च समासोऽव्ययीभावः॥ शेषं प्राग्वत्। शब्दस्य प्रथा नामाख्यातिः तत्र इत्यकलङ्कं। सम्पदन्यूनत्वं तत्र ॥

**४५३ सहस्याकालेऽव्ययीभावे** ।२।२।१११। अव्ययीभावे सहशब्दस्य सो भवति न काले गम्यमाने॥ सक्षत्रम्[१]। ऋद्धेराधिक्यं समृद्धिः तत्र सुमद्रम्। ऋद्धेरभावो व्यृद्धिः तत्र दुर्यवनम्। अर्थस्यासत्त्वम् अर्थाभावः तत्र निर्जनम्। अत्ययोऽतिक्रमः तत्र निवातं। भोगादवर्तमानत्वमसम्प्रति तत्रातिकम्बलं। कर्मादयः सुबर्थाः तत्राधिस्त्रि। हूस्वादि ॥ पश्चादर्थं तत्रानुरथं। सहभावो यौगपद्यं तत्र सहस्य सः सचक्रं। योग्यता वीप्सा पदार्थानतिवृत्तिः यथाऽर्थाः। तत्र क्रमेण अनुरूपं। प्रत्यर्थम्। अनुज्येष्ठं॥ सादृश्ये सदृक् सशीलं सहस्य सः। साकल्यमनवयवः तत्र सतृणं सहस्य सभावः। अन्तः समीपमवसानं च तत्र उपकुम्भं। सषड्जीवनिकायं सहस्य सः॥

**४५४ जराया ङश्च** ।२।१।१५२। जराशब्दान्तादव्ययीभावादद्भवति ङसादेशश्च ॥ ङ इत्। जरायास्समीपमुपजरसम् इत्यादि ॥

---

१ सक्षत्रमित्यत्र संपन्नं क्षत्रं क्षत्रस्य सम्पदिति वा विग्रहः। अत्र सहयोगेऽपि न तृतीया अर्थान्तरस्वीकारात्॥

**४५५ अनः** ।२।१।१५३। अनन्तादव्ययीभावादद्भवति ॥ नोऽपद-स्येत्यन्त्याजादिलुक्। आत्मन्यधिकृत्य वर्तमानम् अध्यात्मं। एवमुपरा-जमित्यादि ॥

**४५६ नपुंसकाद्वा** ।२।१।१५४। नपुंसकलिङ्गादनन्तादव्ययीभावा-दद्वा भवति ॥ कर्म प्रति नियतं प्रतिकर्मं प्रतिकर्म ॥

**४५७ गिरिनदीपौर्णमास्याग्रहायणीजय्यः** ।२।१।१५५। गिर्याद्यन्ताज्जयन्ताच्चाव्ययीभावादद्वा भवति ॥ गिरेस्समीपमुपगिरम् उपगिरि। एवमुपनदम् उपनदि। एवमुपपौर्णमासम् उपपौर्णमासि। उपाग्रहायणम् उपाग्रहायणि। उपभिषजम् उपभिषक्। उपमरुतम् उपमरुत् ॥

**४५८ सरजसोपशुनानुगवम्** ।२।१।१५७। एते अव्ययीभावे अदन्ता निपात्यन्ते ॥ रजसा सह सरजसं। शुनः समीपमुपशुनं। गवाम-नुयानम् अनुगवं। सरजसशब्दः समासान्तरेऽपि ॥ यथा सु काल अम् इति स्थिते। कालमनतिक्रम्य इति विगृह्य ॥

**४५९ यथाऽथाः** ।२।१।१९। अथाप्रत्ययान्तं यथेत्यव्ययं सुबन्तेन सह समस्यते ॥ यथाकालम्। अथा इति किं? यथा चैत्रस्तथा मैत्रः ॥

उत्तरपदार्थप्रधानो यथा ॥ सूप सु प्रति सु इति स्थिते अल्पः सूपः इति विगृह्य ॥

**४६० नित्यं प्रतिनाऽल्पे** ।२।१।१६। अल्पार्थे वर्तमानेन प्रतिना सह सुबन्तं नित्यं समस्यते स च समासोऽव्ययीभावः ॥ शेषं प्राग्वत् सूपप्रति। एवं दधिप्रतिघृतप्रत्यादयः ॥

तत्पुरुषसमासो द्वेधा। पूर्वपदार्थप्रधान उत्तरपदार्थप्रधानश्चेति। तत्र पूर्वपदार्थप्रधानो यथा। नञ् सु अश्व सु इति स्थिते नाश्व इति विगृह्य ॥

---

१ जय्प्रत्याहारगृहीतवर्णरूपप्रत्ययान्तात्। उपगिरि इत्यत्र 'नपोऽचो ह्रस्वः' इति ह्रस्वः। उपदृषद उपदृषत्। उपसमिधं उपसमित्। उपकुम्भं उपकुम्भम्। इत्यादिद्रष्टव्यम् ॥

**४६१ नञ्** ।२।१।२४। नञ् सुपा समस्यते स च समासो बहुव्री-ह्यादिलक्षणरहितस्तत्पुरुषः ॥ शेषं प्राग्वत् । ञ इत् । हल्यनञ्समासे लुक्तः सादित्यादिविशेषणार्थः ॥

**४६२ नञोऽश्** ।२।२।६०। नञोऽश् भवति समासे सुबन्ते परे ॥ शित्त्वात्सर्वस्य ॥

**४६३ अशोऽचि नट्** ।२।२।६४। नञादेशादशः परस्याचो नट् भवति ॥ अटावितौ । टित्त्वादादौ । पुनः स्वादिः । अनश्वः । एवमनेकः इत्यादि ॥ पूर्व सु काय ङस् इति स्थिते पूर्वः कायस्येति विगृह्य ॥

**४६४ पूर्वापराधरोत्तरमंशिनाऽभिन्नेन** ।२।१।२५। पूर्वा-द्यंशवाचि सुबन्तं अभिन्नावयविना अंशिवाचिना सुबन्तेन सह समस्यते स समासस्तत्पुरुषः ॥ पूर्वकायः । एवमपरकायः । अधरकायः । उत्त-रकायः ॥ अर्ध सु देश ङस् इति स्थिते अर्धं देशस्येति वि॒गृह्य ॥

**४६५ समेऽर्धम्** ।२।१।२६। समेंऽशे वर्तमानोऽर्धशब्दः अंशिवाचिना सुपा समस्यते स च तत्पुरुषः ॥ अर्धदेशः । समे इति किं? देशार्धः ॥

उत्तरपदार्थप्रधानो यथा ॥ दुस् जन इति स्थिते द्वाभ्यां सुः । निन्दितो जन इति वि॒गृह्य ॥

**४६६ तिदुस्स्वत्याङ्कन्यस्तत्पुरुषः** ।२।१।२०। तिसंज्ञं दुस् सु अति आङ् कु इत्येतानि चाव्ययानि सुबन्तानि सुपा समस्यन्ते स

---

१ नकारो निषेधप्रतिपत्तिनिवृत्त्यर्थः । नेति ह्युच्यमाने पूर्वोत्तरपदस्य विधिर्निषेधो जायते । तदन्यतद्विरुद्धतदभावेषु नञ् । बहुव्रीह्यादिलक्षणरहित इति किं? न विद्यते अङ्गं यस्य स अनङ्गः ॥

२ अंशिनेति किं पूर्वं नाभेः कायस्य । अभिन्नेति किं? पूर्वंच्छात्राणां । अत्रांशस्यां-शिनः पृथग्भावो वा अपृथग्भावो वाऽस्तु न तद्विवक्षा । अंशिन एकत्वे सति अत्र समासो न नानार्थे इति सूत्राभिप्रायः ॥ प्रसज्यप्रतिषेधत्वादत्र न भवति पूर्वं पाणिपाद-स्य । अत्र समासवशादेकत्वेऽपि वस्तुवृत्त्या भेद एवेति समासो न भवति । प्राणितु-र्यांगमिति समासस्यैकत्वेऽपि पाणिः पाद इति भिन्नमेव ॥ पूर्वादिग्रहणं किं? दक्षिण-कायस्य ॥

च समासो बहुव्रीह्यादिलक्षणरहिततत्पुरुषः ॥ सर्वं प्राग्वत् । दुर्जनः । एवं शोभनो जनः सुजनः । अतिशयितं महत् अतिमहत् । ईषदुष्णम् ओष्णं । कुत्सितो मार्गः कुमार्गः ॥ दुस् राजन् इति स्थिते । पूर्ववत्समासादि ॥

**४६७ राजन्सखेः** ।२।१।१६९। राजन्सखिशब्दान्तात्तत्पुरुषसमासादट् भवति ॥ ट इत् इत्यर्थः ॥

**४६८ सब्रह्मचारिपीठसर्पिकलापिकुथुमितैतलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणोऽपदस्य** ।२।३।६९। सब्रह्मचारिनित्यादेर्नान्तस्य चापदस्य अन्त्याजादेर्लुग्भवति तद्धिते परे ॥ सस्य रित्यादि । दूराजः । दुस्सखीत्यतोऽटि एरिति लुक् दुस्सखः ॥ सुराजन् अतिराजन् इति अतोऽटि प्राप्ते ॥

**४६९ प्राक्टात्स्वतेः पूजायाम्** ।२।१।१२७। प्रशस्तवाचिस्वतिपूर्वात्समासाद्बहुव्रीहेः काष्ठे ट इति टात्प्राग्यो विहितः प्रत्ययः स न भवति ॥ सुराजा । अतिराजा ॥ न राजा इति विगृह्य समासे ॥

**४७० न नञः** ।२।१।१२५। नञ्समासाद्यथोक्तः समासान्तो न भवति ॥ अराजा । एकमसखा इत्यादि ॥ कु आगम इति स्थिते प्राग्वत् समासादि ॥

**४७१ कोः कदचि** ।२।२।११८। अव्ययस्य कोः कद् भवति

---

१ अत्र राजन्निति नान्तनिर्देशात्तत्कारान्ते न भवति । तेन मद्राणां राज्ञी मद्रराज्ञी । एवं सति प्रकृतिग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं न भवति । राज्ञीत्यस्य ङीप्रत्ययान्तत्वान्नान्तता नास्ति ॥

२ सब्रह्मचारिन्, पीठसर्पिन्, कलापिन्, कुथुमिन्, तैतलिन्, जाजलिन्, लाङ्गलिन्, शिलालिन्, शिखण्डिन्, सूकरसद्मन्, सुपर्वन् इत्येतेषां नकारान्तानां चापदसञ्ज्ञानामित्यर्थः ॥

३ अचीति किं? कुतृणम् । कथं कत्तृणानि नाम तृणजातिरिति? पृषोदरादित्वात्सिध्दं तत् ॥

अजाद्यवुत्तरपदे परे समासे ॥ कदागमः । कादर्थः इत्यादि ॥ कु पुरुष इति स्थिते समासादि ॥

**४७२ पुरुषे का वा** ।२।२।१२१। कोः का वा भवति पुरुषशब्दे परे समासे ॥ कापुरुषः । कुपुरुषः ॥ कु पथिन् इति स्थिते समासादि ॥

**४७३ ऋक्पूः पथ्यपोऽत्** ।२।१।१३९। ऋक् पुर् पथिन् अप् इत्येतदन्तात्समासात् अद् भवति ॥ त इत् । अन्त्याजादिलुक् ॥

**४७४ पथ्यक्षयोः** ।२।२।१२३। कोः का भवति पथ्यक्षयोः परतस्समासे ॥ कापथः एवं काक्षः ॥ कु उष्णः इति स्थिते ॥

**४७५ काकवौ वोष्णे** ।२।२।१२४। कोः काकवौ वा भवतः उष्णशब्दे परे समासे ॥ कोष्णं कवोष्णं । पक्षे कदुष्णं ॥ प्र आचार्य इति स्थिते द्वाभ्यां सुः प्रगत आचार्य इति विगृह्य ॥

**४७६ गतादिषु प्रादयः** ।२।१।२१। गताद्यर्थे वर्तमानं प्रादि सुबन्तं सुबन्तेन सह समस्यते स च समासस्तत्पुरुषः ॥ प्राचार्यः । एवं संगतोऽर्थः समर्थः । अतिक्रान्तो मार्गमतिमार्गः । उद्गतो वेलमुद्वेलः । निष्क्रान्तो मलान्निर्मलः अपगतोऽर्थादपार्थः ॥ अध्वानमुपगत इति विगृह्य समासे ॥

**४७७ उपसर्गादध्वनः** ।२।१।१४२। उपसर्गात्परो योऽध्वन्शब्दः तदन्तात्समासादद्भवति ॥ उपाध्वो रथः । व्यध्वो दुरध्व इत्यादि ॥

**४७८ प्रत्यन्ववात्साममलोम्नः** ।२।१।१४३। प्रत्यन्ववपूर्वात्

---

१ पुरुषे इति किम्? कद्रो राजा। आ वा इत्यनुक्त्वा कावचनं सामर्थ्यम् । यथा कुत्स्यस्य रूपस्य समासो भवति कापुरुष इति सत्त्वाकारेण सिध्यति । यदा तु "कोर्दिवाव्ययस्य" इति अके सति साक्कुशब्दस्य कुपुरुष इति तदाऽऽकारविधौ ककापुरुष इति प्राप्नोति तन्नेष्टम् । अतः साकोऽपि का इत्येव स्यादित्येवमर्थं कावचनम् ॥

२ पथीति पथिन्शब्दग्रहणात्तत्पर्याये दुर्व्यपस्थे न भवति । कुपथं वनं । अक्षेति सामान्येनाक्षशब्दमात्रं गृह्यते । कुत्सितः पन्थाः कापथः । कुत्सितः अक्षः काक्षः । अक्षौ चूते कर्षाङ्गे नयनाक्षे विभीतके च । "अल्पे" ।२।२।१२२। ईषदर्थे वर्तमानस्य कोः कादेशो नित्यं भवति ॥ कालवणमित्यादि द्रष्टव्यम् ॥

सामन्नन्ताल्लोमन्नन्ताच्च समासादट् भवति ॥ प्रतिगतं साम प्रतिसामम् । अनुगतं साम अनुसामम् । अवभ्रष्टं साम अवसामम् । एवं प्रतिलोमम् अनुलोमम् अवलोमम् ॥ प्रति उरस् इति स्थिते प्रतिष्ठितमुरसीति विगृह्य समासे ॥

**४७९ प्रतेरुरसः सप्तम्याः** ।२।१।१४४। प्रतिपूर्वात् सप्तम्यन्तात् उरसः अद्भवति समासे ॥ प्रत्युरसं ॥ ग्राम अम् नी सु इति स्थिते ग्रामं नयतीति विगृह्य ॥

**४८० स्वकृताऽस्युक्तम्** ।२।१।२२। अस्युक्तं सुबन्तं स्वकृदन्तेन सुपा समस्यते ॥

**४८१ ग्रामाग्राण्णीः** ।२।२।१६६। ग्राम अग्र इत्येताभ्यां परस्य नियो नस्य णो भवति ॥ ग्रामणीः । एवमग्रणीः । कुम्भकारादयः ॥ स्वयं सु कृत सु इति स्थिते स्वयं कृतमिति विगृह्य ॥

**४८२ स्वयं सामि क्तेन** ।२।१।२९। स्वयं सामि इत्येते अव्यये क्तान्तेन सुपा समस्येते ॥ स्वयंकृतं सामिपक्वं ॥ मुहूर्त अम् सुख सु इति स्थिते मुहूर्तं सुखमिति विगृह्य ॥

**४८३ व्याप्तौ** ।२।१।३२। व्याप्तौ द्वितीयान्तं कालवाचि सुबन्तं व्यापकेन सुपा समस्यते ॥ मुहूर्तसुखम् । एवं क्षणस्थायि वर्षभोग्यः॥ धर्म अम् श्रित स् इति स्थिते धर्मं श्रित इति विगृह्य ॥

**४८४ श्रितादिभिः** ।२।१।३३। द्वितीयान्तं सुबन्तं श्रितादिभि-

---

१ सप्तम्या इति किं? प्रतिगतमुरः उरसि वर्तेत इत्यर्थः । सुबर्थेऽव्ययीभावे उरसि प्रतिष्ठितं प्रत्युरसम् ॥

२ यः कृदस्युक्तमात्मानमाश्रित्य विहितः स स्वकृत् ॥ यस्मात्पराद्धातोः कृद्विहितस्त-दस्युक्तं पञ्चम्युक्तमित्यर्थः ॥ स्वकृदिति किं? आत्मनः कृतमात्मकृतम् । अत्र केवल-धातोरेव प्रत्ययः । साधनं कृतेति समासः ॥ अस्युक्तमिति किं? निषेधे अलंखलो क्त्वा । अलंकृत्वा खलुकृत्वा ॥ कुम्भकार इत्यादौ कर्मणोऽण् इत्यण्प्रत्ययः । अतः कर्म-णोऽण् इत्यस्युक्तः पञ्चम्युक्तः कुम्भशब्दः स्वकृदन्तेन कारशब्देन समस्यते । अयमेव न्यायो ग्रामण्यारिति क्विबन्तेऽपि ज्ञेयः। अत्र ग्रामकुम्भौ कर्मणी नीश्च कारश्च स्वकृदन्तौ॥

३ बहुवचनादाकृतिगणोऽयं । तेन तत्त्वबुभुत्सुः । गुरुशुश्रूषुः इत्यादि । श्रित, अतीत, पतित, गत, अत्यस्त, प्राप्त, आपन्न, गमिन्, गामिन् इति श्रितादिराकृतिगणः॥

स्सुबन्तैः समस्यते ॥ धर्मश्रितः । एवं दुःखमतीतो दुःखातीतः । ओदनं बुभुक्षुः ओदनबुभुक्षुः ॥ ईषदुष्णमिति विगृह्य ॥

**४८५ ईषद्गुणवचनैः** ।२।१।३५। ईषदित्यव्ययं गुणवाचिभिस्सुबन्तैस्समस्यते ॥ ईषदुष्णम् । एवमीषन्मधुरं ईषद्ज्ञानं ॥ मद टा विह्वल सु इति स्थिते मदेन विह्वल इति विगृह्य ॥

**४८६ तृतीया तत्कृतैः** ।२।१।३६। तृतीयान्तं तत्कृतेन गुणवाचिना सुबन्तेन सह समस्यते ॥ मदविह्वलः । एवं नखच्छेदः इत्यादि ॥ स्वेन कृतमिति विगृह्य ॥

**४८७ साधनं कृता** ।२।१।३७। साधनवाचि सुबन्तं कृदन्तेन सुपा समस्यते ॥ स्वकृतम् । एवं परकृतं नखनिर्भिन्नमित्यादि ॥ रथ ङे दारु सु। पितृ ङे अर्थ सु। भूत भ्यस् बलि सु इति स्थिते । रथाय दारु। पित्रे इदं । भूतेभ्यो बलिरिति विगृह्य ॥

**४८८ चतुर्थी प्रकृतिस्वात्र्थोत्र्थादिभिः** ।२।१।३९। चतुर्थ्यन्तं सुबन्तं प्रकृतिवाचिना चतुर्थ्यर्थवाचिना अर्थशब्देनात्र्थादिभिश्च सुबन्तैः समस्यते ॥ रथदारु । पित्रर्थं । भूतबलिः ॥ अलं सु कुमारि ङे इति स्थिते अलं कुमार्यै इति विगृह्य ॥

**४८९ तयाऽलम्** ।२।१।४०। अलमित्यव्ययं चतुर्थ्यन्तेन समस्यते॥ न्यग्गोष्यत इति ह्रस्वः । अलंकुमारिर्मैत्रः । अलं पुरुषायेति विगृह्य समासे॥

---

१ तत्कृतैस्तृतीयान्तपदार्थकृतार्थैर्गुणवचनैः सुबन्तैरित्यर्थः ॥ तेन तृतीयान्तस्यार्थेन कृता अर्था येषां ते तत्कृतास्तैरिति समासः । तत्कृतेनेति किं? अक्ष्णा काणः । गुणवाचिनेति किं? धान्येन धनवान् । वचनग्रहणं किं? गुणेऽपि वर्तन्ते तैर्मा भूत् घृतेन पाटवं विद्यया धाष्टर्यम् ॥ अत्र तु भवति समासः शंकुलया कृतः खण्डः शंकुलाखण्डो देवदत्तः । शंकुलाखण्डो देवदत्तस्य ॥ शंकुलाखण्डो देवदत्त इत्यनेन द्रव्यशब्दसमानाधिकरण्यात् खण्डशब्दस्य गुणिनि द्रव्ये वृत्तिर्दृश्यते शंकुलाखण्डो देवदत्तस्येत्यत्र तु षष्ठ्या खण्डशब्दस्य गुण एवैकदेशविकलतायां वृत्तिरित्याख्यायते ॥ षष्ठी हि भेदमादर्शयति । इह खण्डित इति खण्डः खण्डनं खण्ड इति वा विगृह्यते ॥ साधनं कृतेति समासः ॥

सामन्नन्ताल्लोमन्नन्ताच्च समासादट् भवति ॥ प्रतिगतं साम प्रतिसामम् । अनुगतं साम अनुसामम् । अवभ्रष्टं साम अवसामम् । एवं प्रतिलोमम् अनुलोमम् अवलोमम् ॥ प्रति उरस् इति स्थिते प्रतिष्ठितमुरसीति विगृह्य समासे ॥

**४७९ प्रतेरुरसः सप्तम्याः** ।२।१।१४४। प्रतिपूर्वात् सप्तम्यन्तात् उरसः अद्भवति समासे ॥ प्रत्युरसं ॥ ग्राम अम् नी सु इति स्थिते ग्रामं नयतीति विगृह्य ॥

**४८० स्वकृताऽस्युक्तम्** ।२।१।२२। अस्युक्तं सुबन्तं स्वकृदन्तेन सुपा समस्यते ॥

**४८१ ग्रामाग्राण्णीः** ।२।२।१६६। ग्राम अग्र इत्येताभ्यां परस्य नियो नस्य णो भवति ॥ ग्रामणीः । एवमग्रणीः । कुम्भकारादयः ॥ स्वयं सु कृत सु इति स्थिते स्वयं कृतमिति विगृह्य ॥

**४८२ स्वयं सामि क्तेन** ।२।१।२९। स्वयं सामि इत्येते अव्यये क्तान्तेन सुपा समस्येते ॥ स्वयंकृतं सामिपक्वं ॥ मुहूर्त्त अम् सुख सु इति स्थिते मुहूर्त्तं सुखमिति विगृह्य ॥

**४८३ व्याप्तौ** ।२।१।३२। व्याप्तौ द्वितीयान्तं कालवाचि सुबन्तं व्यापकेन सुपा समस्यते ॥ मुहूर्त्तसुखम् । एवं क्षणस्थायि वर्षभोग्यः॥ धर्म अम् श्रित स् इति स्थिते धर्मं श्रित इति विगृह्य ॥

**४८४ श्रितादिभिः** ।२।१।३३। द्वितीयान्तं सुबन्तं श्रितादिभि-

---

१ सप्तम्या इति किं? प्रतिगतमुरः उरसि वर्तत इत्यर्थः । सुबर्थेऽव्ययीभावे उरसि प्रतिष्ठितं प्रत्युरसम् ॥

२ यः कृदस्युक्तमात्मानमाश्रित्य विहितः स स्वकृतः ॥ यस्मात्पराद्धातोः कृद्विहितस्त-दस्युक्तं पञ्चम्युक्तमित्यर्थः ॥ स्वकृदिति किं? आत्मनः कृतमात्मकृतम् । अत्र केवल-धातोरेव प्रत्ययः । साधनं कृतेति समासः ॥ अस्युक्तमिति किं? निषेधे अलंखलौ क्त्वा । अलंकृत्वा खलुकृत्वा ॥ कुम्भकार इत्यादौ कर्मणोऽण् इत्यण्प्रत्ययः । अतः कर्म-णोऽण् इत्यस्युक्तः पञ्चम्युक्तः कुम्भशब्दः स्वकृदन्तेन कारशब्देन समस्यते । अयमेव न्यायो ग्रामण्यारिति क्विबन्तेऽपि ज्ञेयः। अत्र ग्रामकुम्भौ कर्मणी नीश्च कारश्च स्वकृदन्तौ॥

३ बहुवचनादाकृतिगणोऽयं । तेन तत्त्वबुभुत्सुः । गुरुशुश्रूषुः इत्यादि । श्रित, अतीत, पतित, गत, अत्यस्त, प्राप्त, आपन्न, गमिन्, गामिन् इति श्रितादिराकृतिगणः ॥

स्सुबन्तैः समस्यते ॥ धर्मश्रितः । एवं दुःखमतीतो दुःखातीतः । ओदनं बुभुक्षुः ओदनबुभुक्षुः ॥ ईषदुष्णमिति विगृह्य ॥

४८५ **ईषद्गुणवचनैः** ।२।१।३५। ईषदित्यव्ययं गुणवाचिभिस्सुबन्तैस्समस्यते ॥ ईषदुष्णम् । एवमीषन्मधुरं ईषद्ज्ञानं ॥ मद टा विह्वल सु इति स्थिते मदेन विह्वल इति विगृह्य ॥

४८६ **तृतीया तत्कृतैः** ।२।१।३६। तृतीयान्तं तत्कृतेन गुणवाचिना सुबन्तेन सह समस्यते ॥ मदविह्वलः । एवं नखच्छेदः इत्यादि ॥ स्वेन कृतमिति विगृह्य ॥

४८७ **साधनं कृता** ।२।१।३७। साधनवाचि सुबन्तं कृदन्तेन सुपा समस्यते ॥ स्वकृतम् । एवं परकृतं नखानिर्भिन्नमित्यादि ॥ रथ ङे दारु सु। पितृ ङे अर्थ सु। भूत भ्यम् बलि सु इति स्थिते। रथाय दारु। पित्रे इदं । भूतेभ्यो बलिरिति विगृह्य ॥

४८८ **चतुर्थी प्रकृतिस्वार्त्थार्त्थादिभिः** ।२।१।३९। चतुर्थ्यन्तं सुबन्तं प्रकृतिवाचिना चतुर्थ्यर्त्थवाचिना अर्थशब्देनार्त्थादिभिश्च सुबन्तैः समस्यते ॥ रथदारु । पित्रर्त्थं । भूतबलिः ॥ अलं सु कुमारि ङे इति स्थिते अलं कुमार्यै इति विगृह्य ॥

४८९ **तयाऽलम्** ।२।१।४०। अलमित्यव्ययं चतुर्थ्यन्तेन समस्यते॥ न्यग्गोष्यत इति ह्रस्वः । अलंकुमारिमैत्रः । अलं पुरुषायेति विगृह्य समासे॥

---

१ तत्कृतैस्तृतीयान्तपदार्थकृतार्थैर्गुणवचनैः सुबन्तैरित्यर्थः ॥ तेन तृतीयान्तस्यार्थेन कृता अर्था येषां ते तत्कृतास्तैरिति समासः । तत्कृतेनेति किं? अक्ष्णा काणः । गुणवाचिनेति किं? धान्येन धनवान् । वचनग्रहणं किं? गुणेऽपि वर्तन्ते तैर्मा भूत् घृतेन पाटवं विद्यया धार्ष्ट्यम् ॥ अत्र तु भवति समासः शंकुल्या कृतः खण्डः शंकुलाखण्डो देवदत्तः । शंकुलाखण्डो देवदत्तस्य ॥ शंकुलाखण्डो देवदत्त इत्यनेन द्रव्यशब्दसमानाधिकरण्यात् खण्डशब्दस्य गुणिनि द्रव्ये वृत्तिर्दृश्यते शंकुलाखण्डो देवदत्तस्येत्यत्र तु षष्ठ्या खण्डशब्दस्य गुण एवैकदेशविकलतायां वृत्तिरित्याख्यायते ॥ षष्ठी हि भेदमादर्शयति । इह खण्डित इति खण्डः खण्डनं खण्ड इति वा विज्ञायते ॥ साधनं कृतेति समासः ॥

**४९० खोऽषडक्षाशितंग्वलंकर्मालंपुरुषात्** ।२।१।१३७। अषडक्षादिभ्यः खप्रत्ययो भवति ॥

**४९१ छघढखफप्रत्ययस्येयियेयीनायन्** ।२।३।३१। तद्धित-प्रत्ययस्य छ ईय् भवति घ इय् ढ एय् ख ईन् फ आयन् ॥ शेषं प्राग्वत् । अलंपुरुषीणा कन्या । एवमलंकर्मीणः ॥ न षडक्षीण्यस्येति बहुव्रीहेः खः अषडक्षीणः मन्त्रादिः । आशिता गावोऽस्मिन्नित्याशितंगवीनम् अरण्यं निपातनान्नम् ॥ चोराद्भयमिति विगृह्य ॥

**४९२ पञ्चमी भयादिभिः** ।२।१।४१। पञ्चम्यन्तं भयादिभिस्सुबन्तैः समस्यते ॥ चोरभयं ग्रामागत इत्यादि ॥ राज्ञः पुरुष इति विगृह्य ॥

**४९३ षष्ठ्ययत्नात्** ।२।१।४३। षष्ठ्यन्तं सुपा समस्यते न यत्नात्॥ न विनिमेयद्यूतपणमित्यादेर्विहितषष्ठ्यन्तं । राजपुरुषः नलुक् । जीवगुणाः । मोक्षमार्ग इत्यादि ॥ अयत्नादिति किं[1] धर्मस्य ज्ञाता ॥ देवानां याजकः । साधूनां पूजक इति विगृह्य ॥

**४९४ याजकादिभिः** ।२।१।४४। षष्ठ्यन्तं याजकादिभिः सुबन्तैः समस्यते ॥ बाधकबाधनार्थं वचनं । देवयाजकः । साधुपूजकः । एवं भूभर्तेत्यादि ॥ भवतः आसिकेति विगृह्य समासे प्राप्ते ॥

**४९५ न कर्तरि** ।२।१।४७। कर्तरि षष्ठ्यन्तं वुप्रत्ययान्तेन सुपा न समस्यते ॥ ओदनस्य भोजकः ॥ अपां स्रष्टा इति विगृह्य समासे प्राप्ते ॥

**४९६ कर्मणि त्रा च** ।२।१।४८। कर्मणि षष्ठ्यन्तं कर्तरि वुप्रत्ययान्तेन तृप्रत्ययान्तेन च सुपा न समस्यते ॥

**४९७ तृप्तार्थाव्ययनिर्धार्यडच्छत्रानश्मतिपूजाधारक्तैः** ।२।१।५०। तृप्तार्थैरव्ययैर्निर्धार्यवाचिभिर्डदन्तैः शत्रन्तैरानशन्तैर्मतिपूजार्थाधारक्तान्तैश्च षष्ठ्यन्तं न समस्यते ॥ फलानां तृप्तः । सक्तूनां पूर्णः । देवदत्तस्य कृत्वा । देवदत्तस्य पुरस्तात् । गवां कृष्णा सम्पन्नक्षीरतमा ।

---

१ विभक्त्यन्तरप्राप्तौ या षष्ठी विधीयते सा यत्नषष्ठी । तदन्तस्य समासो न भवतीत्यर्थः ।

सम्म्राजां पञ्चमः शान्तिः। देवदत्तस्य पचन् पचमानः। सतां मतः। सतां पूजितः। इदमहेः सूतं॥ मोक्षस्य पन्था इति विगृह्य समासे अत्त्वं मोक्षपथः। ऋचोऽर्धमिति विगृह्य॥

**४९८ समेऽर्धम्** ।२।१।२६। समभागे वर्तमानमर्धमिति सुबन्तं षष्ठ्यन्तेन समस्यते॥ (इत्युक्तेन समासे) अत्त्वादि। अर्धर्चं देवपुरम् इत्यादि॥ राज्यस्य धूरिति विगृह्य समासे॥

**४९९ धुरोऽनक्षस्य** ।२।१।१४०। धुरन्तात्समासादद् भवति नाक्षस्य॥ राज्यधुरा। अनक्षस्येति किं? अक्षधूः॥ ब्रम्हणो वर्च इति विगृह्य समासे॥

**५०० ब्रम्हहस्तिराजपल्याद्वर्चसः** ।२।१।१४७। ब्रम्हादेः पराद्वर्चसः समासादद् भवति॥ ब्रम्हवर्चसम्। एव राजवर्चसम् इत्यादि॥ आप्तस्य गौरिति विगृह्य समासे॥

**५०१ गोस्तत्पुरुषात्** ।२।१।१६८। गोशब्दान्तात्तत्पुरुषसमासादद् भवति॥ ट इत्। स्त्रियां ङ्यर्थः। अव्। टित्त्वात् ङी। आप्तगवी। एवं सुरगवीकामगवीप्रभृतयः॥ जिनानां राजेति विगृह्य समासे राजन्सखेरित्यट्। जिनराजः। सुरराजः। नरराजादयः। स्त्रियाम् अतिराजी। एवमग्नेस्सखा अग्निसखः इत्यादयः॥ अह्नः पूर्वमिति विगृह्य पूर्वापरेति समासे॥

**५०२ सङ्ख्याव्ययसर्वांशात्** ।२।१।१८१। सङ्ख्याशब्दादव्ययात्सर्वशब्दादंशवाचिनश्च परो योऽहन्शब्दः तदन्तात्तत्पुरुषसमासादद् भवति। अहन्शब्दस्य चाह्न इत्ययमादेशो भवति॥ "अतोऽह्नः ।२।२।१६८।" इति क्रमसूत्रात् णत्वं। पूर्वाह्णः। एवमपराह्णः। मध्याह्नः। सायाह्नः इत्यादयः॥ वर्षाणां रात्रिरिति विगृह्य समासे॥

---

१ समप्रविभागे एवेदमर्धमित्यादिष्टलिङ्गम् नपुंसकलिङ्गम्॥ अन्यत्र एकदेशेऽभिधेये पुंलिंगम्। समप्रविभागेऽपि षष्ठीसमासः॥ अर्धपिप्पलीति विशेषणसमास इत्येके॥

५०३ **पुण्यवर्षादीर्घसङ्ख्यानैकाचाद्रात्रेः** ।२।१।१८२। पुण्यादेस्सङ्ख्यादेश्च परो यो रात्रिशब्दस्तदन्तात्तत्पुरुषसमासादट् भवति ॥ वर्षारात्रः । एवं पूर्वरात्रः । मध्यरात्रः । अर्धरात्रः । अपररात्र इत्यादि ॥ पुरुषस्यायुरिति विगृह्य समासे ॥

५०४ **स्वःश्रेयसश्वोवसीयसनिःश्रेयसपुरुषायुषगोष्ठश्वद्विस्तावत्रिस्तावाः** ।२।१।१८३। एते अदन्ता निपात्यन्ते। पुरुषायुषं ॥

५०५ **नावः** ।२।१।१६७। अर्धपूर्वान्नावन्तात् समासादङ् भवति ॥ नावोऽर्द्धम् अर्द्धनावं स्त्रियां अर्धनावी ॥ अक्षेषु शौण्ड इति विगृह्य ॥

५०६ **सप्तमी शौण्डादिभिः** ।२।१।५२। सप्तम्यन्तं शौण्डादिभिः सुबन्तैस्समस्यते ॥ अक्षशौण्डः । एवं रणवीरः । कलाकुशलः । वादनिपुणः इत्यादयः ॥

५०७ **पात्रेसमितादयः** ।२।१।५७। पात्रेसमित इत्यादयः शब्दाः

---

१ शोभनं श्रेयः स्वश्श्रेयसं । श्वोवसीयसमिति अस्यैव पर्यायः । आशीर्विषये अनयोः प्रयोगः ॥ निश्चितं श्रेयसं निःश्रेयसं अनर्थरहितं कल्याणमित्यर्थः । पुरुषस्यायुः पुरुषायुषं ॥ गोष्ठे श्वा गोष्ठश्वः । द्विस्तावती द्विस्तावा । त्रिस्तावती त्रिस्तावा वेदिः । वेद्यामनयोः प्रयोगः । अतो द्विगुणा त्रिगुणा कृता वेदिकैवोच्यते ॥

२ अक्षेषु प्रसक्तः शौण्ड इव व्यसनी अक्षशौण्डो मत्त इत्यर्थः ॥ बहुवचनादाकृतिगणोऽयम् । तेन शिष्टप्रयोगानुसारेण स्थाल्यां पक्वः स्थालीपक्वः । काम्पिल्ये सिद्धः काम्पिल्यसिद्धः । आतपशुष्कमित्यादि सिद्धम् ॥ शौण्डशब्दो यद्यपि मद्यपे रूढः स इह वृत्तौ गौणो यथा मद्यपो मद्यपाने प्रसक्तो भवति तथा योऽक्षेषु प्रसक्तो व्यसनीव तत्र वर्तते । इवार्थलाभः प्रसक्तार्थलाभश्च तथाप्रतीतेः ॥

३ 'काकादिभिः क्षेपे' इत्यस्यानुवर्तनम् । पात्रे भाजने भोजनार्थं एव समिताः समागताः भोजने एव सन्ति न कार्यान्तरे । अत्र पात्रे एव समिताः सम्बद्धा नान्यत्र कार्यान्तर इत्यवधारणात्क्षेपः ॥ मातरि पुरुषः पुमान् धवो भर्तेति मातरिपुरुष इत्युच्यते लोके प्रतिषेधं सेवमानः । अन्ये आहुः— पुरुषशब्द इह शूरवचनस्तेन मातर्येव पुरुषो मातरं तर्जयित्वाऽन्यस्मात्सर्वस्माद्बिभेतीति मातरिपुरुषो भीरुः । एवं, गेहेनर्ती, गेहेव्याल इत्यादि । गर्भे एव तृप्तः स्वमात्राहृतेनाहारेण, न ततो निःसृत्य कदाचिदुदरपूरं कृतवानिति गर्भेतृप्तो दरिद्रः ॥

तत्पुरुषसमासे निपात्यन्ते आक्षेपे गम्यमाने ॥ पात्रसमितः । कूपकच्छपः । कूपमण्डुकः । मातरिपुरुषः पिण्डीशूरः गेहेनर्ती गोष्ठेशूरः कर्णेजपः इत्यादयः ॥ गोष्ठे श्वा गोष्ठश्वः स्वश्रेयसेति निपातनाददन्तत्वं ॥

कर्मधारयो द्विविधः । उत्तरपदार्थप्रधानः पूर्वपदार्थप्रधानश्चेति । तत्र उत्तरपदार्थप्रधानो यथा, नील सु उत्पल सु इति स्थिते नीलं च तत् उत्पलं च तदिति विगृह्य ॥

**५०८ विशेषणं व्यभिचार्येकार्थं कर्मधारयश्च** ।२।१।५८। व्यभिचारि विशेषणं समानाधिकरणं सुबन्तं विशेष्येण सुपा समस्यते स च समासः तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च ॥ शेषं प्राग्वत् । नीलोत्पलम् । एवं सम्यग्दर्शनं सम्यग्ज्ञानं सम्यक्कारित्वं सद्धर्म इत्यादयः । व्यभिचारीति किं? तक्षकः सर्पः । एकार्थ इति किं? जातस्योक्षा ॥ अन्धं च तत् तमश्च तत् इति विगृह्य समासे ॥

**५०९ समवान्धात्तमसः** ।२।१।१४९। सम् अव अन्ध इत्येतेभ्यः परो यस्तमश्शब्दः तदन्तात्समासादद् भवति ॥ अन्धतमसम् । एवं सन्ततं तमः सन्तमसम् । अवभ्रष्टं तमः अवतमसं ॥ जातश्चासावुक्षा चेति विगृह्य समासे ॥

**५१० जातमहद्वृद्धादुक्ष्णः कर्मधारयात्** ।२।१।१५८।

---

१ नीलं च तदुत्पलं च तदित्यत्र चकारः समुच्चयार्थद्योतनार्थः । तच्छब्दः सामानाधिकरण्यद्योतनार्थः । चशब्दः प्रयोगसापेक्षकभेदसूचनार्थः । पुनस्तच्छब्दप्रयोगो भेदसापेक्षकाभेदसूचनार्थः । नीलोत्पलादिषु उत्पलादिजातिशब्दो विशेष्यमेव ॥

२ विशिष्यते नियम्यते व्यावर्त्यते व्यवच्छिद्यते भिद्यते येन तद्विशेषणं भेदकमिति यावत् ॥ तत्र चातत्र च प्रवृत्तिर्व्यभिचारः सोऽस्यास्तीति व्यभिचारि ॥ तत्र चान्यत्र च व्यभिचरति सञ्चरति सम्भवतीत्येवं शीलं व्यभिचारि ॥ अनेकप्रकारं वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्य एकस्मिन्नुपात्ते प्रकारे यद्व्यवस्थापयति तद्व्यवस्थापकं भेदकं विशेषणं, यद्व्यवस्थाप्यमानं तद्भेद्यं विशेष्यम् ॥ तत्र तक्षकशब्दो वृश्चिकादौ न वर्तते इत्यव्यभिचारीत्युच्यते ॥ वर्धकीजातौ वर्तमानत्वात् व्यभिचारीति न शङ्कनीयम् । तद्विवक्षाया अत्रायोग्यत्वात् ॥ आम्रवृक्षादावाम्रशब्दो वृक्षादौ वर्तते न लतादाविरयेतदेवात्र निदर्शनम्

जातादिभ्यः परो यः उक्षन्शब्दः तदन्तात् कर्मधारयसमासादड्भवति ॥ जातोक्षः । एवं महोक्षः वृद्धोक्षः ॥ पुमांश्चासौ गौश्च पुंगवः । अट् ॥

५११ अह्नः ।२।१।१७९। अहन्शब्दान्तात्तत्पुरुषसमासादड् भवति ॥ परमं च तत् अहश्च परमाहः । एवं सुदिनाहं पुण्याहं प्रथमाहः प्राह्णः सर्वाह्णः मध्याह्नः सायाह्नः । सङ्ख्याव्ययेत्यादिना अह्नादेशः ॥ पुण्या चासौ रात्रिश्चेति पुण्यरात्रः । एवं दीर्घरात्रः सङ्ख्यातरात्रः सर्वरात्रः एकरात्रः मध्यरात्रः । पुण्यावर्षेत्यादिना अत् ॥ पूर्वपदार्थप्रधानो यथा, भीरुश्चासौ क्षत्रियश्चेति विगृह्य ॥

५१२ निन्द्योऽपापाणकेन ।२।१।६२। निन्द्यवाचि सुबन्तं निन्दावाचिना सुपा समस्यते न पापाणकाभ्यां । स च समासस्तत्पुरुषः कर्मधारयश्च ॥ क्षत्रियभीरुः, तार्किकवठरः भिक्षुविटः ॥ अपापाणकेनेति किं? पापकुलालः । अणकनापितः ॥ शस्त्रीव श्यामेति विगृह्य ॥

५१३ गौणस्तेन ।२।१।६३। गौणार्थवाचि सुबन्तं गुणवाचिना सुबन्तेन समस्यते स च तत्पुरुषः ॥ शस्त्रीश्यामा सा । एवं कुमुदश्यामादयः ॥ सिंह इव पुरुष इति विगृह्य ॥

५१४ व्याघ्रादिभिर्गौणैस्तदनुक्तौ ।२।१।६४। उपमेयवाचि सुबन्तं गौणैर्व्याघ्रादिभिस्सुबन्तैः समस्यते तस्य गुणस्यानुक्तौ सत्यां

---

१ निन्द्यः कुत्स्यो निंदावाचि सुबन्तं । वैयाकरणखसूचिः खसूचिर्निष्प्रतिभो वैयाकरणो वैयाकरणखसूचिः । खं सूचयति उपरि पश्यतीति खसूचिः निष्प्रतिभ उच्यते ॥ खसूचिः स्यान्निष्प्रतिभ इत्यमरः ॥ निन्द्य इति किं? वैयाकरणश्चोरः स्तब्धो दुःशीलो दुर्भग इत्यत्र न वैयाकरणता निन्द्यते । किं तर्हि? अत्र तदाश्रयो वैयाकरणताधिष्ठानं द्रव्यम् । तद्धि वैयाकरणत्वं तद्द्रव्योपालक्षणायैवोपादीयते न निन्दासम्बन्धाय ॥ विशेष्यस्य पूर्वनिपातनार्थं वचनम् । पापशब्दाणकशब्दाभ्यां सार्धं न समस्यत इत्यर्थः ॥ वाचाटः कितवो धूर्त इत्यर्थः । वटरः स्यान्मातृमुखः । कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः ॥

२ गुणादागतो गौणः । अन्यत्र प्रसिद्धोऽन्यत्र वर्तमानो गौणः ॥ अलङ्कारमार्गे च मुख्यार्थबाधनिमित्ते प्रयोजने च भेदाभेदाभ्यामाकारोपेतो गौणः ॥

स च समासस्तत्पुरुषः कर्मधारयसंज्ञश्च ॥ पुरुषसिंहः । भव्यपुण्डरीकः । मुखपद्मं । पाणिपल्लव इत्यादि ॥ मुनिर्वृन्दारक इव पूज्यः इति विगृह्य ॥

**५१५ वृन्दारकनागकुञ्जरैः** ।२।१।७०। समानाधिकरणं सुबन्तं वृन्दारकादिभिः पूजावाचिसुबन्तैः समस्यते स च तत्पुरुषः कर्मधारयसंज्ञश्च ॥ मुनिवृन्दारकः । एवं जिननागः । नृपकुञ्जरः ॥ को राजेति विगृह्य ॥

**५१६ किं क्षेपे** ।२।१।७२। किमित्येतत्सुबन्तं समानाधिकरणेन सुबन्तेन समस्यते क्षेपे निन्दायां स च समासस्तत्पुरुषः कर्मधारयसंज्ञश्च ॥ राजन्सखेरित्यटि प्राप्ते ॥

**५१७ किमः क्षेपे** ।२।९।१२६। किमः पराद्विहितः समासान्तो न भवति क्षेपे निन्दायाम् ॥ किंराजा नीतिवर्जितः । किंसखा शाठ्यवान् भुवि । किंगौरवाहक इत्यादि ॥ युवतिश्चासौ ब्राह्मणी चेति विगृह्य ॥

**५१८ पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तप्रशंसारूढैर्जातिः** ।२।१।७३। एकार्थं जातिवाचि सुबन्तं पोटादिभिः प्रशंसारूढैश्च सुबन्तैस्समस्यते स च समासस्तत्पुरुषः कर्मधारयश्च ॥ मानीति पुंवद्भावः । ब्राह्मणयुवतिः । स्तोकं गुणो गुणस्तोकं । मुनिप्रवक्ता । क्षत्रियधूर्तः । गोमतल्लिका । गोमचर्चिका । गोप्रकाण्डमित्यादि ॥ कुमारश्चासौ श्रमणश्चेति विगृह्य ॥

---

१ क्षेपे इति किं? कस्य राजा किंराजः । कस्य सखा किंसखः ॥

२ पुरुषवेषधारिणी स्त्री पोटा । गर्भे एव दास्यं गता वा ॥ नागयुवतिः वृन्दारकयुवतिः । अत्र पूजायां वृन्दारकनागेति समासः । युवतिः प्राप्तयौवना ॥ स्तोककतिपयशब्दावल्पार्थे ॥ वेहद्गर्भहन्ती या गर्भे वशा या नोपजायते ॥ सकृत्प्रसूता गृष्टिः स्याद्बष्कयस्त्वेकहायनः ॥ १ ॥ गृष्टिः सकृत्प्रसूता एकवारं प्रसूता गोगृष्टिः अजगृष्टिः । धेनुः स्यान्नवसूतिका गोधेनुः ॥ वशा वन्ध्या गर्भमेव न गृण्हाति गोवशा अजवशा ॥ वेहद्गर्भघारिणी गोवेहत् अजवेहत् ॥ बष्कयो वृद्धवत्सः बष्कयेण वृद्धवत्सेन या युज्यते सा बष्कयणी । बष्कयो वृद्धवत्सोऽस्यास्तीति वा बष्कयणी । कठप्रवक्ता । कालापश्रोत्रियः । कालाध्यापकः । कठधूर्तः कालापधूर्तः अत्र धूर्तशब्दो निन्दावचनस्तत्र पूर्वपदं

**५१९ कुमारः श्रमणादिना** ।२।१।७८। कुमारशब्दः श्रमणादिना सुपा समस्यते ॥ कुमारश्रमणः । एवं कुमारतापसः । कुमारवज्रजङ्घः । कुमारनेमिः । कुमारसेनः इत्यादि ॥ श्रिया उपलक्षितो वर्धमान इति विगृह्य ॥

**५२० मयूरव्यंसकादयः** ।२।१७९। मयूरव्यंसक इत्यादयः शब्दाः कृतसमासा निपात्यन्ते ॥ श्रीवर्धमानः । एवं उदक् च तत् अवाक् च उच्चावचम् । उच्चनीचम् । एहिस्वागता[1] । अश्नीतपिबता । यातायातं । शाकभिक्षुः । घृतौदनः । अश्वरथः । सलिलघटः इत्यादि ॥

द्विगुसमासो यथा ॥ पञ्चन् जस् गो जस् धन स् इति स्थिते । पञ्च गावो धनमस्येति विगृह्य । "दिगधिकं[2] संज्ञातद्धितोत्तरपदे ।२।१।६०।" इत्यधिकृत्य ॥

**५२१ सङ्ख्या समाहारे च द्विगुश्चानाम्न्ययम्** ।२।१।६१। सङ्ख्यावाचि सुबन्तमेकार्थं सुबन्तेन समस्यते संज्ञायां तद्धितप्रत्यये

---

निन्द्यार्थं । ततश्च कठधूर्त इत्यादौ निन्द्योऽपापाणकेनेत्यनेनैव सिध्दे धूर्तग्रहणमनिन्द्यार्थमिति वेदितव्यम् ॥ प्रशंसायां रूढाः प्रशंसारूढाः ॥ पोटादीनां द्वन्द्वः । रूढशब्दः पोटादिभिर्न सन्बध्यते । सम्बन्धे हि तत्पर्यायाणां ग्रहणं स्यात् ॥ तदनिष्टमतः प्रशंसाशब्देनैव सम्बन्ध्यते ॥ त्रिप्रकाराः प्रशंसाशब्दा भवन्ति केचिज्जातिशब्दाः परार्थे प्रयुज्यमानाः प्रशंसां गमयन्ति । यथा सिंहो माणवकः । केचिद्गुणशब्दा गुणसम्बन्धे यथा रमणीयो ग्रामः, शोभनः पाकः ॥ केचित्तु रूढिशब्दाः एषां प्रशंसैव पदार्थः । इहान्त्यौ गृह्यन्ते न पूर्वद्वयम् । रूढिग्रहणादिह न भवति गौः शोभना । जातिरिति किं? देवदत्ता भैटा । गौः मतल्लिका गोमतल्लिका ॥

१ एहि स्वागतमिति यस्यां सा एहिस्वागता । आख्यातमाख्यातेन क्रियासातत्ये अश्नीत पिबतेति सततं वर्तते अश्नीतपिबता ॥ शाकभोजी भिक्षुरिति विग्रहः । घृतप्रधान ओदनः । अश्वयुक्तो रथः । सलिलपूर्णो घटः ॥

२ दिग्वाचि अधिकमित्येतत्सुबन्तमेकार्थं सुपा समस्यते वा सञ्ज्ञायां तद्धिते प्रत्यये विषयभूते उत्तरपदे च परे स च समासस्तत्पुरुषः कर्मधारयश्च ॥ सञ्ज्ञायां दक्षिणाः कोसलाः दक्षिणकोसलाः । उत्तरपाञ्चालाः । तद्धिते दक्षिणस्यां शालायां भवो दाक्षिणशालः ॥ अधिकया षष्ट्या क्रीतः अधिकां षष्टिं भृतो भावी वा अधिकषाष्टिकः । उत्तरपदे दक्षिणशालाप्रियः । अधिकगवधनः । सञ्ज्ञातद्धितोत्तरपदेषु नित्यः समासः । अन्यथा तदभावात् ॥

उत्तरपदे परे समाहारे च गम्यमाने स च तत्पुरुषः कर्मधारयो द्विगुसंज्ञश्च। द्विगुर्न नाम्नि ॥ तत्पुरुषत्वाद्गोशब्दादट्। पञ्चगवधनः। अष्टानां सहस्राणां समाहार इति विगृह्य द्विगुसमासः। स्त्रीलिङ्गत्वाद्द्विगोरिति ङी। अष्टसहस्री। एवं त्रिलोकी इत्यादि ॥ पञ्चानां राज्ञां समाहार इति विगृह्य समासे ॥

५२२ **द्विगोरन्नह्नोऽट्** ।२।१।१६२। अन्नन्तादहन्नन्ताच्च द्विगोरट् भवति ॥ शेषं प्राग्वत्। पञ्चराजी। त्रयाणामह्नां समाहार इति विगृह्य समासे अट्। त्र्यहः। एवं पञ्चाह इत्यादि ॥

५२३ **सङ्ख्याव्ययादङ्गुलेः** ।२।१।१८५। सङ्ख्यावाचिनोऽव्ययाच्च परो योऽङ्गुलिशब्दः तदन्तात्तत्पुरुषाड्डो भवति ॥ द्वयोरङ्गुल्योस्समाहारः द्व्यङ्गुलम्। एवं त्र्यङ्गुलम्। अङ्गुलिमतिक्रान्तमत्यङ्गुलम् इत्यादि ॥

द्वन्द्वसमासो द्विधा ॥ अवयवप्रधानः समाहारप्रधानश्चेति। तत्रावयवप्रधानो यथा। प्लक्षश्च न्यग्रोधश्चेति विगृह्य ॥

५२४ **द्वन्द्वस्सहोक्तौ** ।२।१।८०। सुबन्तं सुबन्तेन सह समस्यते द्वयोरर्थयोः सहवचने समाहृतौ। स च समासो द्वन्द्वः ॥

५२५ **लघुघ्यजाद्यदल्पाजर्च्यमेकम्** ।२।१।११९। द्वन्द्वे लघ्वक्षरं घिसंज्ञमजाद्यदन्तमल्पाजर्च्यं च एकं पूर्वं प्रयोज्यं॥ शेषं प्राग्वत्। प्लक्षन्यग्रोधौ। एवं गुणमुख्यौ। अग्निधूमौ। इन्द्राग्नी। अश्वशस्त्रे। वासुदेवार्जुनौ॥ ब्राह्मणः क्षत्रियश्चेति विगृह्य समासे ॥

५२६ **वर्णभ्रात्रनुपूर्वम्** ।२।१।१२०। वर्णः भ्राता च अनुपूर्वं

---

१ ब्राह्मणक्षत्रियविट्शूद्रा वर्णाः। युधिष्ठिरभीमार्जुनादयो भ्रातरः। तेषां क्रममनतिक्रम्य। अनुग्रहणादेकमिति निवृत्तम्। "समानामेकः ।२।१।८१। समानानां तुल्यार्थानां शब्दानामर्थस्य सहवचने तेषामेक एव प्रयोक्तव्यः ॥ वक्रश्च कुटिलश्च वक्रौ कुटिलौ वा। बहुवचनमतन्त्रम्" ॥ "सुप्यसंख्येयः ।२।१।८२। सुपि सर्वत्र ये शब्दाः समाना एकरूपा भवन्ति तेषां सहवचने एक एव प्रयोक्तव्यः संख्येयवाचि शब्दरूपं वर्जयित्वा वृक्षश्च वृक्षश्च वृक्षौ। सुपीति किं? मातृमातारौ अत्र जनयित्रीधान्यमातृवाचिनः औटि मातरौ माताराविति रूपं भिद्यते। अभेदे मातृभ्यां मातृभिरित्येके ॥ यस्मिन्सुपि

प्रथमं प्रयोज्यम् ॥ ब्राह्मणक्षत्रियौ । एवं बलभद्रवासुदेवौ ॥ स च देवदत्तश्चेति विगृह्य समासे ॥

**५२७ त्यदादिः** ।२।१।८३। त्यदादेः त्यदादिनाऽन्येन वा द्वन्द्वसमासे त्यदादिरेवावशिष्यते । त्यदादीनां मिथो यद्यत् परं तदेवैकं शिष्यते ॥ तौ । एवं स च त्वं चेति विगृह्य । युवां । त्वं चाहं चावां ॥ समाहारप्रधानो यथा । वधूश्च वरश्चेति विगृह्य समासे ॥

**५२८ द्वन्द्वो वा** ।२।१।९३। द्वन्द्वसमास एकार्थो वा भवति ॥ एकार्थत्वेन नपुंसकत्वं । वधूवरं वधूवरौ वा । एवं लोकालोकमित्यादि ॥ अश्वाश्च रथाश्चेति विगृह्य समासे ॥

**५२९ सेनाङ्गक्षुद्रजन्तु** ।२।१।९८। सेनाङ्गानां क्षुद्रजन्तूनां द्वन्द्व एकार्थो नित्यं भवति ॥ अश्वरथं । यूकालिक्षम् । अहिनकुलं ॥ बदराणि चामलकानि चेति विगृह्य समासे ॥

**५३० फलं जातिः** ।२।१।९९। फलवाचिनां जातिशब्दानां द्वन्द्व एकार्थो नित्यं भवति ॥ बदरामलकम् । एवमाम्रपनसमित्यादि ॥ पाणी च पादौ चेति विगृह्य समासे ॥

**५३१ प्राणितूर्याङ्गम्** ।२।१।१०१। प्राण्यङ्गानां तूर्याङ्गानां द्वन्द्व एकार्थो नित्यं भवति ॥ पाणिपादं । शङ्खपटहम् इत्यादि ॥ स्त्री च पुमांश्चेति विगृह्य समासे ॥

**५३२ स्त्रियाः पुंसो द्वन्द्वाच्च** ।२।१।१५९। स्त्रीशब्दात् परो यः पुंस्शब्दस्तदन्तात् द्वन्द्वात् कर्मधारयाच्च समासादद्भवति ॥ स्त्रीपुंसं ॥ धेनुश्चानड्वांश्चेति विगृह्य समासे ॥

---

ये शब्दाः समानास्तस्मिन्नेव सहवचने एक एव प्रयोक्तव्य इत्यर्थः ॥ असंख्येय इति किं? द्वौ च द्वौ च द्वाविति न भवति । द्वन्द्वोऽपि न भवत्यनभिधानात् ॥ विंशतिश्च विंशतिश्च विंशती अत्र संख्यावाचित्वादेकशेषः । इति चिन्तामणौ ॥

१ स्त्री भूत्वा पुमान् जातः स्त्रीपुम्सः शिखण्डी ॥

**५३३ धेन्वनडुहर्ग्यजुषाहोरात्रनक्तंदिवरात्रिंदिवाहर्दिवोर्वष्ठीवपदष्ठीवाक्षिभ्रुवदारगवम्** ।२।१।१६०। धेन्वनडुहादयः शब्दा द्वन्द्वे अदन्ता निपात्यन्ते॥ धेन्वनडुहम्। एवम् ऋक यजुश्च ऋग्यजुषम्। अहश्च रात्रिश्च अहोरात्रं। नक्तं च दिवा च नक्तंदिवं। रात्रिश्च दिवा च रात्रिंदिवम्। अहश्च दिवा च अहर्दिवम्। ऊरू च अष्ठीवन्तौ च ऊर्वष्ठीवं। पदौ च अष्ठीवन्तौ च पदष्ठीवम्। अक्षिणी च भ्रुवौ च अक्षिभ्रुवं। दाराश्च गावश्च दारगवं॥ दधि च पयश्चेति विगृह्य समासे॥

**५३४ न दधिपयआदिः** ।२।१।१०५। दधिपयसित्यादेर्द्वन्द्व एकार्थो न भवति॥ दधिपयसी। वाङ्मनसे। पाठाददन्तत्वम्॥

॥ इति श्लुक्समाससङ्ग्रहः॥

---

## अथ समासे सुपः श्लुचि प्राप्तायां क्वचिदश्लुग्विधिरुच्यते

ओजसा कृतमिति विगृह्य समासे। "नोत्तरपदेऽसत्त्वे[2] ।२।२।२।" इति अधिकृत्य॥

**५३५ ओजोऽञ्जस्सहोऽम्भस्तपसष्टः** ।२।२।४। ओजसादिभ्यः परस्य टः समासे श्लुग् न भवति॥ ओजसाकृतम्। अञ्जसाकृतं। सहसाकृतम्। अम्भसाकृतं। तपसाकृतं॥ परस्मै पदमिति विगृह्य समासे॥

**५३६ ङेर्व्याकरणे** ।२।२।८। ङे इति सुपः समासे श्लुग् न भवति व्याकरणे विषये॥ एवमात्मनेपदमित्यादि॥ कण्ठे कालोऽस्येति विगृह्य समासे॥

**५३७ अकामेऽमूर्धमस्तकात् स्वाङ्गात्** ।२।२।१२। मूर्धमस्त-

---

१ धेन्वनडुहग्रहणमसमाहारार्थं। समाहारे तु "चुदषहस्समाहारे ।२।१।१६१। चवर्गदकारषकारहकारान्तात् द्वन्द्वात्समाहारे वर्तमानात्समासान्तो भवति॥ वाक्त्वचं। स्रक्स्रजं। वाग्दृषदं। वाक्त्विषं। छत्रोपानहं॥ अन्यत्र छत्रोपानद्भ्याम्। इति चिन्तामणौ।" इति सूत्रेणैव सिध्दम्॥ द्वन्द्वादिति किं? ऋग्यजुर्यस्य स ऋग्यजः। पुण्याविमावहोरात्रौ॥ रात्रिंदिवान्यत्र च पश्यति तुल्यकालम्॥ अत एव निपातनाग्रम्।

२ केनासत्त्व इत्यसत्त्वे यः समास उक्तस्तदवयवस्य सुपः पञ्चम्यन्ताः उत्तरपदे श्लुग्न भवति॥ स्तोकान्मुक्तः। अल्पान्मुक्तः। दूरादागतः। अन्तिकादागतः॥

कवर्जितात् स्वाङ्गात् परस्याः सप्तम्याः कामवर्जित उत्तरपदे श्लुङ्न भवति॥ कण्ठेकालः। उरसिलोमादयः। अमूर्धमस्तकादिति किं? मूर्धशिखः। मस्तकशिखः। अकाम इति किं? मुखकामः॥ देवानां प्रिय इति विगृह्य समासे॥

**५३८ ब्राह्मणाच्छंसिपुंसानुजजनुषान्धगोषुचरदिवोदासदेवानांप्रियाः** ।२।२।२१। एते अश्लुक्समासा निपात्यन्ते॥ ब्राह्मणाच्छंसतीति ब्राह्मणाच्छंसी। पुंसा अनुजा पुंसानुजा। जनुषा जन्मना अन्धो जनुषान्धः। गोषु चरतीति गोषुचरः। दिवोदास इति कस्यचिन्नाम। देवानांप्रियः मूर्खः पूज्यो वा॥

**५३९ वाग्दिक्पश्यतो युक्तिदण्डहरे** ।२।२।२४। वाक् दिक् पश्यत् इत्येतेभ्यः परस्याः षष्ठ्याः यथासङ्ख्यं युक्तिदण्डहरेषूत्तरपदेषु श्लुम भवति। वाचोयुक्तिः। दिशोदण्डः। पश्यतोहरः॥

**५४० गोष्पदं सेवितप्रमाणे** ।२।२।२६। गोभिः सेविते देशे प्रमाणे च सङ्ख्यातेऽर्थे गोष्पदमिति निपात्यते॥

श्रीमते वर्धमानाय नमो नमितविद्विषे।
यद्ज्ञानान्तर्गतं भूत्वा त्रैलोक्यं गोष्पदायते॥

मातुः स्वसेति विगृह्य॥

**५४१ स्वसृपत्योर्वा** ।२।२।२९। ऋकारान्तानां षष्ठ्याः श्लुग्वा भवति स्वसृपतिशब्दयोः परतः समासे॥

---

१ अत्र निपातनं प्रसिध्द्युपसंग्रहार्थम्। ब्राह्मणात्तत्संज्ञकग्रन्थाद्गृहीत्वा शंसतीति ब्राह्मणाच्छंसी ऋग्विशेषः। अविकृताक्षो जात्यन्ध उच्यते। मुग्धो मूढो जडो नेडो मूको मूर्खश्च कद्वदः॥ स देवानांप्रियो प्राज्ञो मन्दो धीनामवर्जितः॥ १॥ इति धनञ्जयः॥

२ कथं तर्हि अमुष्यपुत्रिका, अमुष्यकुलिका इति? चोरादिगणपाठादश्लुक्॥ षष्ठी चानादरे इति अनादरे षष्ठी। पश्यन्तमनादृत्य हर्ता पश्यतोहर इत्युच्यते॥

३ "ऋतां विद्यायोनिसम्बन्धे ।२।२।२८। ऋकारान्तानां विद्याकृते योनिकृते च सम्बन्धे प्रवर्तमानानां सम्बन्धिन्याः षष्ठ्यास्तत्सम्बन्धनिमित्ते एवोत्तरपदे श्लुम भवति होतुःपुत्रः। होतुरन्तेवासी॥ पितुःपुत्रः। पितुरन्तेवासी॥ अन्यत्र भर्तृगृहम्। भर्तृशिष्यः भर्तृपुत्रः। पितृवनं॥" इत्यधिकृत्य उरिति वचनादनृवर्णान्तेऽयं विधिः। तत्र वचनप्रामाण्याद्विभक्तिव्यवधानेऽपि भवति॥

**५४२ मातृपितुः स्वसुः षिः** ।२।२।१४१। अलुप्तविभक्तिभ्यां मातृपितृशब्दाभ्यां परस्य स्वसृशब्दस्य षिर्वा भवति ॥

**५४३ तस्मादादेः** ।१।१।४८। पञ्चम्यन्तात् परस्य षष्ठ्यन्तस्य यो विधिः तस्यादेरलः स्थाने भवति ॥ इति आदेः सस्य षिः । श्रु पक्षे ॥

**५४४ उः** ।२।२।१४२। ऋकारान्ताभ्यां मातृपितृशब्दाभ्यां परस्य स्वसृशब्दस्य षिर्भवति ॥ मातुष्ष्वसा । मातुःस्वसा । मातृष्वसा । एवं पितुष्ष्वसा पितुःस्वसा पितृष्वसा ॥ माता च पिता चेति द्वन्द्वे ॥

**५४५ मातरपितरं द्वन्द्वे वा** ।२।२।३०। मातरपितराविति द्वन्द्वसमासे वा निपात्यते ॥ पक्षे

**५४६ आङ्** ।२।२।३१। ऋतां द्वन्द्वे पूर्वपदस्याङ् भवति विद्यायोनिसम्बन्धे निमित्ते ॥ ङ इत् आदेशत्वज्ञापनार्थः । मातरपितरौ मातापितरौ । एवं मातादुहितरावित्यादि ॥

**५४७ पितो मात्रा वा** ।२।१।८५। मातृपितृशब्दयोः द्वन्द्वे पितृशब्द एक एव प्रयोज्यो वा ॥ पितरौ । मातापितरौ ॥ सूर्यश्च चन्द्रमाश्चेति विगृह्य द्वन्द्वे ॥

**५४८ इन्द्रासोमादिषु देवतानाम्** ।२।२।३३। इन्द्रासोमादिषु देवतावाचिषु द्वन्द्वे पूर्वस्याकारो निपात्यते ॥ सूर्याचन्द्रमसौ । एवमिन्द्रासोमावित्यादि ॥ गन्तुं मनोऽस्येति विगृह्य बहुव्रीहौ ॥

---

१ पूर्वपदस्येति वचनादयथाविवक्षमाकारः । तथाच सति होता च पोता च नेष्टा च उद्गाता च होतृपोतृनेष्टोद्गातारः । होतृपोतानेष्टोद्गातारः । होतापोतानेष्टोद्गातारो वा इति चिन्तामणावुक्तम् ॥ निष् समाधौ । अध्वर्यूद्गातृहोतारो यजुस्सामर्ग्विधः क्रमात् । विद्यायोनिसम्बन्धे इत्यस्य शास्त्रकृते उत्पत्तिकृते च सम्बन्धे विषये सतीत्यर्थः ॥

२ पितृशब्दस्य मातृशब्देन सहोक्तौ पितृशब्द एक एव प्रयोज्यो वा ॥ “ स्त्रिया ।२।१।८९। पुरुषस्य पुंसः प्राणिनः स्त्रिया सहोक्तौ पुरुषवाच्येवैकः प्रयुज्यते अनन्यार्थप्रकृतौ ॥ ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ । कुक्कुटौ । पटू ॥ प्राणिग्रहणं किं? घटघटीशरावोदञ्चनानां । अनन्यार्थप्रकृताविति किं? इन्द्रेन्द्राण्यौ । अत्र धवयोगोऽन्यार्थः ॥ गुणिकच्छपौ आप्रकृतेति चिन्तामणावुक्तम् ॥

**५४९ तुमो मनस्कामे** ।२।२।६९। तुमोऽन्तस्य लुप् भवति मनस्कामयोः परतः समासे ॥ गन्तुमनाः ॥ गन्तुकामः ॥ इषीकायास्तूलमिति विगृह्य समासे ॥

**५५० मालेषीकेष्टकस्यान्तस्य च भारितूलचिते** ।२।२।८०। मालादीनां तदन्तानां च ह्रस्वो भवति यथासङ्ख्यं भार्यादिषु परतः समासे ॥ इषिकतूलम् । एवं मालभारि । इष्टकचितं ॥ भ्रुवः कुटिरिति विगृह्य समासे ॥

**५५१ भ्रुवोऽच्च कुटिकुंसे** ।२।२।८१। भ्रूशब्दस्य ह्रस्वोऽच्च भवतः कुटिकुंसयोः परतः समासे ॥ भ्रुकुटिः । भ्रकुटिः । भ्रुकुंसः । भ्रकुंसः ॥ एकोत्तरा दशेति विगृह्य ॥

**५५२ एकादश षोडश षोडन् षोढा षड्ढा** ।२।२।१०१। एकादशादयः समासे कृतात्वादयो निपात्यन्ते ॥ एकादश । एवं षड्भिरधिका दश षोडश । षड् दन्ता अस्येति षोडन् ॥ द्वाभ्यामधिका दशेति विगृह्य समासे ॥

**५५३ द्वाष्टात्रयोऽनशीतौ प्राक्छतादबहुव्रीहौ** ।२।२।१०२। शतात् प्राक् सङ्ख्यावाचिन्युत्तरपदे द्वि अष्टन् त्रि इत्येतेषां यथासङ्ख्यं द्वा अष्टा त्रयस् इत्येते आदेशा भवन्ति । अबहुव्रीहौ समासे नाशीतिशब्दे ॥ द्वादश । एवं द्वाविंशतिः । द्वात्रिंशत् ॥ अष्टादश । अष्टाविंशतिः । अष्टात्रिंशत् ॥ त्रयोदश । त्रयोविंशतिः ॥ त्रयस्त्रिंशत् ॥ अनशीताविति किं? द्व्यशीतिः त्र्यशीतिः । अबहुव्रीहाविति किं? द्विदशाः । अष्टदशाः । त्रिदशाः ॥

**५५४ चत्वारिंशदादौ वा** ।२।२।१०३। द्वा अष्टा त्रयस् इत्यादेशाश्चत्वारिंशदादौ उत्तरपदे वा भवन्ति ॥ द्वाचत्वारिंशत् द्विचत्वारिंशत् ॥ अष्टाचत्वारिंशत् अष्टचत्वारिंशत् । त्रयश्चत्वारिंशत् त्रिचत्वारिंशत् इत्यादि ॥ महत् वीर इत्याभ्यां सुः महांश्चासौ वीरश्चेति विगृह्य समासे ॥ “ महतः करघासविशिष्टे डाः ।२।२।१०४। ” इत्यधिकृत्य ॥

५५५ **जातीयैकार्थे** ।२।२।१०६। महतः जातीयप्रत्यये समानाधिकरणे च परतो डा भवति ॥ ड इत् अन्त्याजादिलुगर्थः । महावीरः। एवं महागुण इत्यादि ॥ क्षीरमुदकं यस्येति विगृह्य समासे ॥

५५६ **नाम्न्युत्तरपदस्य च** ।२।२।१३६। उत्तरपदस्य पूर्वपदस्य च उदकशब्दस्य उद इत्यादेशो भवति नाम्नि समासे ॥ क्षीरोदः। एवं लवणोदादयः । उदपर्वतः उदमेघः ॥

५५७ **क्षुग्वा** ।२।२।१३७। नाम्नि पूर्वपदस्य उत्तरपदस्य च क्षुग्वा भवति ॥ सत्या भामा सत्यभामा इत्यादि ॥ पृषदुदरं यस्येति विगृह्य समासे ॥

५५८ **पृषोदरादयः** ।२।२।१७२। पृषोदरादयः शब्दाः साधवो वेदितव्याः ॥ पृषोदरः । अश्व इव तिष्ठतीत्यश्वत्थः । पिशितमश्नातीति पिशाचः इत्यादि । शिष्टप्रयोगानुसारेण वेदितव्यम् ॥

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ॥
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥ १ ॥
वर्णागमो गवेन्द्रादौ सिंहे वर्णविपर्ययः ॥
षोडशादौ विकारस्स्याद्वर्णनाशः पृषोदरे ॥ २ ॥
वर्णनाशविकाराभ्यां धातोरातिशयेन यः ॥
योगस्तदुच्यते प्राज्ञैर्मयूरभ्रमरादिषु ॥ ३ ॥

॥ इत्यक्षुग्विधिसमाससङ्ग्रहः ॥

## ॥ अथ पदवाक्याश्रितं विध्यन्तरमुच्यते ॥

५५९ **सम्भ्रमेऽसकृत्** ।२।३।१। सम्भ्रमे वर्तमानं पदं वाक्यं वा

---

१ अविहितलोपागमादेशविकाराः शिष्टैः प्रयुज्यमानाः । अश्वरूपेणाग्निरत्र तिष्ठतीति अश्वत्थ इति लिङ्गाभट्टयामुक्तम् ॥

२ हिसू हिंसायामिति धातोरुत्पन्नत्वात् हिनस्तीति सिंहः इति हकारविपर्ययः। विकारः परिणामः । यथा षोडशेत्यत्र दकारस्य डकारः ॥

३ मह्यां रौतीति मयूरः। अत्र महीशब्देकारस्य नाशः हकारस्य विकारो यकारः॥ रुधातोः ऊर इत्यादेशः ॥ भ्रमन् रौतीति भ्रमरः । नलोपो रुधात्वस्य रादेशश्च ॥

असकृदनेकवारं प्रयुज्यते ॥ जय जय जय । जिन जिन जिन । अहिरहिरहिः । सर सर सर । हस्त्यागच्छति हस्त्यागच्छति हस्त्यागच्छति । लघु पलायध्वं लघु पलायध्वं लघु पलायध्वम् इत्यादि ॥

५६० **भृशाभीक्ष्ण्याविच्छेदे प्राग् द्विः** ।२।३।२। भृशाद्यर्थे वर्तमानं पदं वाक्यं वा शब्दरूपं द्विः प्रयुज्यते ॥ भृशम् अत्यर्थं पचतिपचति । आभीक्ष्ण्यं पौनःपुन्यं पचतिपचति पठतिपठति वदवद । अविच्छेदः क्रियान्तराव्यवधानं तत्र जयजय । एवं नमोनमः । करणंकरणम् इत्यादयः ॥

५६१ **प्रोपोत्सं पादपूरणे** ।२।३।६। प्रादीनि शब्दरूपाणि पादपूरणे द्विः प्रयुज्यन्ते ॥

प्रप्रणम्य जिनं भव्यः संसंश्रित्य तपः परम् ॥
उपोपपद्यते श्रेय उदुत्पन्नमहोदयः ॥ १ ॥

५६२ **सामीप्येऽधोऽध्युपरि** ।२।३।७। सामीप्ये वर्तमानानि अधस् अधि उपरि इत्येतान्यव्ययानि द्विः प्रयुज्यन्ते ॥ अधोऽधो नरकभूमयः । अध्यधिग्रामं वसति लोकः । उपर्युपरि स्वर्गपटलानि ॥

५६३ **वीप्सायाम्** ।२।३।८। वीप्सायां वर्तमानं शब्दरूपं द्विः प्रयुज्यते ॥ वृक्षंवृक्षमभिसिञ्चति । भवेभवे नैव चेतयते ॥ "आद्यामन्त्र्यं सम्मत्यसूयाकोपेऽक्ष्वन्त्यश्च प्लुतः ।२।३।१७।" इत्यधिकृत्य ॥

५६४ **दूरादामन्त्र्यस्य गुरुर्वैको ऽनृत्** ।२।३।२७। वाक्यस्यास्तु योऽन्त्योऽच् दूरादामन्त्र्यस्य सम्बन्धी अनन्त्यो वा ऋवर्जितो गुरुः

---

१ कार्येष्वाभिमत्यं सम्मतिः पूजनं वा । परगुणानामसहनमसूया । क्रोधः कोपः । एतेष्वर्थेषु वर्तमानस्य वाक्यस्याभूतमामंत्रणीयार्थं पदं द्विरुच्यते । तत्र आदौ पूर्वोक्तामक्ष्वचां मध्येऽन्त्योऽच् प्लुतो वा भवति सम्मतौ ॥ माणवका ३ माणवक । माणवक माणवक । शोभनः खल्वसि माणवकः ॥ राजा ३ न् राजन् शोभनः खल्वसि राजा ॥

२ प्रधाने कार्यसम्प्रत्ययादिह न भवति । आगच्छ भोः कपिल माणव । माणवेति कापिलेत्यस्य विशेषणं । लग्रहणं अनृदिति प्रतिषेधनिवृत्त्यर्थं इदमेव ज्ञापकं ऋवर्णलृवर्णयोरभेदेन ग्रहणस्य ॥

लृकारश्च स एकः प्लुतो वा भवति ॥ आगच्छ भो देवदत्ता३ । आगच्छ भो दे३वदत्त । आगच्छ भो देवदा३त्त । आगच्छ भो देवदत्त ॥ कृप्त-शिखा३ । कृ३प्तशिख । कृप्तशिख ॥ अनृदिति किं? कृष्णमित्र ॥

**५६५ ओमः प्रारम्भे** ।२।३।२१। प्रारम्भे वर्तमानस्योमः प्लुतो वा भवति ॥ ओ३म् (वृ) ऋषभं पवित्रम् । ओं३ श्रीशान्तिरस्तु सुखमस्तु ॥ प्रारम्भ इति किम्? । ओम् इत्यादि ॥

॥ इति द्विरुक्तप्लुतविधिसङ्ग्रहः ॥

---

## ॥ अथ तद्धितसंग्रहः कथ्यते ॥

तद्धितप्रत्यया द्विप्रकाराः । अर्थान्तरवृत्तयः स्वार्थिकाश्चेति । तत्रार्थान्त-रवृत्तयो यथा । उपगु ङस् इति स्थिते उपगोरपत्यमिति विगृह्य ॥

**५६६ प्राग्जितादण्** ।२।४।४। टो जित इत्यतस्सूत्रात् प्राग्येऽर्थाः कथ्यन्ते तेषु सुबन्तात् अण् प्रत्ययो भवति ॥ इत्यधिकृतं वेदितव्यम् ॥

**५६७ ङसोऽपत्ये** ।२।४।१८। षष्ठ्यन्तादपत्येऽर्थे अण् प्रत्ययो भवति ॥ ण इत् अरैजर्थः । सुपः लुक् ॥

**५६८ आरैचोऽक्ष्वादेः** ।२।३।८४। प्रकृतेरचामादेरचः आ आर् ऐच् इत्येते अदेशा भवन्ति ञिति णिति च तद्धिते प्रत्यये परे ॥ आसन्न इति उत औत् ॥

**५६९ अवस्वयम्भुवः** ।२।३।८२। अपदस्योवर्णस्य अव् भवति तद्धिते परे न स्वयम्भुवः ॥ ततः स्वादिः । औपगवः । स्त्रियां टिड्ढणिति ङी । औपगवी । एवं कापटव इत्यादि ॥ दक्षस्यापत्यमिति विगृह्य ॥

---

१ क्वचिदर्थे वर्तित्वात्पुनरर्थान्तरे वर्तितुं निमित्तमुपादीयते तदर्थान्तरं तत्र वृत्तिरर्था-न्तरवृत्तिः ॥ प्रकृतादर्थादन्योऽर्थोऽर्थान्तरम् ॥ वृत्तयो द्विप्रकारा अनेकार्थाः प्रत्यर्थनिय-ताश्चेति । अनेकार्था अणादयः । प्रत्यर्थनियता इञादयः । एकस्मिन्नेवार्थे विद्यमाना इत्यर्थः ॥

**५७० अत इञ्** ।२।४।२१। अकारान्तादपत्ये इञ् भवति ॥ ञ इत्। आरैजर्त्थः। एरित्यतो लुक्। शेषं प्राग्वत्। दाक्षिः। स्त्रियां टिड्ढाणिति ङी। दाक्षी ॥ गर्गस्यापत्यं वृद्धमिति विगृह्य ॥

**५७१ पौत्रादि वृद्धम्** ।१।१।१३। पौत्राद्यपत्यं वृद्धसंज्ञं भवति ॥

**५७२ गर्गादेर्यञ्** ।२।४।३८। गर्गादेर्वृद्धेऽपत्ये यञ् भवति ॥ शेषं प्राग्वत्। गार्ग्यः गार्ग्यौ। बहुत्वे ॥

**५७३ यञञोऽगोपवनादिश्यापर्णान्तात्** ।२।४।११०। गोत्रे वर्तमानाद्यञः अञश्च प्रत्ययस्य बहुत्वे लुम्भवति न स्त्रियां गोपवनादिश्यापर्णान्तं वर्जयित्वा ॥ लुचि स्थानिवद्भावाभावात् नारैच्। गर्गाः। एवं गर्गान् गर्गैरित्यादि ॥ स्त्रियां ॥

**५७४ यञोऽषावटात्** ।१।३।१५। यञ्प्रत्ययान्तात् स्त्रियां ङी भवति न षावटाभ्यां ॥ लुगत इत्यतो लुचि मत्स्येति यस्य लुक्। गार्गी। एवं वात्स्यः वात्सी इत्यादि ॥ गर्गस्यापत्यं युवेति विगृह्य ॥

**५७५ प्रपौत्राद्यस्त्री वंश्यज्यायोभ्रात्रोः सति युवा**

---

१ कुलं पुनातीति पुत्रः। पुत्रस्यानन्तरापत्यं पौत्रः पौत्र आदिर्यस्य तत्। पौत्रेति किं? गार्गिः। आदिशब्देन वक्ष्यमाणप्रपौत्राद्यस्त्रीति सूत्रे निर्दिष्टवंश्ये ज्यायसि भ्रातरि च मृते सति प्रपौत्रादीनां वृद्धसञ्ज्ञैव गार्ग्यः ॥

२ गोपवन आदिर्यस्यासौ गोपवनादिः। श्यापर्णः अन्तो यस्यासौ श्यापर्णान्तः। गोपवनादिश्च श्यापर्णान्तश्च तथोक्तः। न गोपवनश्यापर्णान्तस्तथोक्तस्तस्मात् ॥ गोपवनादिर्बाह्यन्तर्गणः। गोपवन। शिग्रु। बिन्दु। ताजम। अश्वावतान। श्यामक। श्यापर्ण इति बिदादिगणान्तर्गतसप्तशब्दा वर्ज्या इत्यर्थः ॥

३ प्रगतः पौत्रः पौत्रात्प्रगतो वा प्रपौत्रः। स आदिर्यस्य तत् प्रपौत्रादि। पौत्रापत्यं परमप्रकृतेश्चतुर्थम्। अत्र परमप्रकृतिर्गर्गः। तस्यापत्यं गार्गिः। तदनन्तरापत्यं वृद्धो गार्ग्यस्तृतीयः स्यात्। चतुर्थो गार्ग्यायणो युवा ॥ "आद्यात् ।२।४।१९। अपत्ये यः प्रत्ययः स आद्यात् परमप्रकृतेरेव नानन्तरवृद्धयुवभ्यः ॥ उपगोरपत्यं वृद्धं औपगवः।" इति नियमसूत्रं तत आद्यादित्यनुवर्तते ॥ आद्यादिति किं? गार्ग्यायणस्यापत्य युवा गार्ग्यायणः इञ् न भवति ॥ दाक्षिरित्यत्र वृद्धापत्येऽपि अत इञिति इञ्प्रत्ययो भवति ॥

।१।१।१४। स्त्रीवर्जितं प्रपौत्राद्यपत्यं युवसंज्ञं भवति वंश्ये ज्यायसि भ्रातरि च जीवति सति ॥ इति युवसंज्ञायां ॥

५७६ **वृद्धाद्यूनि** ।२।४।२०। यून्यपत्ये वृद्धप्रत्ययान्तादेव प्रत्ययो भवति ॥

५७७ **यञिञः** ।२।४।२३। यञन्तादिञन्ताच्च यून्यपत्ये फण् भवति ॥ ण इत्। फस्य आयन्। गार्ग्यायणः। एवं दाक्षायणः ॥ सुधातुरपत्यमिति विगृह्य ॥

५७८ **सुधातृव्यासवरुटनिषादचण्डालबिम्बस्याकङ् च** ।२।४।२७। सुधात्रादिभ्योऽपत्ये इञ् भवति तेषामकङ् चान्तादेशः ॥ अङावितौ। सौधातकिः। एवं वैयासकिः वारुटकिः नैषादकिः चाण्डालकिः इत्यादि ॥ पुत्रस्यापत्यमिति विगृह्य ॥

५७९ **पुनर्भूपुत्रदुहितृननान्दृभ्योऽनन्तरेऽञ्** ।२।४।२८। पुनर्भ्वादिभ्योऽनन्तरेऽपत्ये अञ् भवति ॥ पौत्रः। एवं पौनर्भवः दौहित्रः नानान्द्रः ॥ कन्याया अपत्यमिति विगृह्य ॥

५८० **कन्यात्रिवेण्योः कनीनत्रिवणौ च** ।२।४।४९। कन्यात्रिवेणिभ्यामपत्ये अण् भवति तयोर्यथासङ्ख्यं कनीनत्रिवणादेशौ च भवतः ॥ कानीनः त्रैवणः। शतमातुरपत्यमिति विगृह्य ॥

५८१ **सङ्ख्यासम्भद्रान्मातुर्डुर्** ।२।४।५१। सङ्ख्यायाः सम्भद्राभ्यां च परान्मातृशब्दादपत्ये अण् भवति ऋतो डुरादेशश्च ॥ डु इत्। शातमातुरः। एवं द्वैमातुरः षाण्मातुरः साम्मातुरः भाद्रमातुरः। दितेरपत्यमिति विगृह्य ॥

५८२ **दितेश्च ढण्** ।२।४।५४। मण्डूकशब्दाद्दितिशब्दाच्चापत्ये ढण्वा भवति ॥ ढस्य एय्। दैतेयः माण्डूकेयः। पक्षे

५८३ **पत्युत्तरपदयमादित्यदित्यदितेर्ञ्योऽणपवादे चास्ये** ।२।४।६। पत्युत्तरपदात् यमादिभ्यश्च प्राग्जितीयेऽस्वेऽर्थे ञ्यो भवति

अणपवादे च ॥ अ इत् । दैत्यः । बृहस्पतेरपत्यं बार्हस्पत्यः । यमस्यापत्यं याम्यः । आदित्यस्यापत्यमादित्यः । अदितेरपत्यम् आदित्यः ॥ विनताया अपत्यमिति विगृह्य ॥

५८४ **ष्यतः** ।२।४।५५। ष्यदन्तादपत्ये ढण् भवति ॥ वैनतेयः । एवं सौपर्णेयः ॥ नाभेरपत्यमिति विगृह्य ॥

५८५ **इतोऽनिञः** ।२।४।५७। इदन्ताद् द्व्यचूकादपत्ये ढण् भवति नेञन्तात् ॥ नाभेयः । नैधेयः । बालेयः इत्यादि ॥ कल्याण्या अपत्यमिति विगृह्य ॥

५८६ **कल्याण्यादेर्ङिन् च** ।२।४।६२। कल्याण्यादिभ्योऽपत्ये ढण् भवति ङिन्चान्त्यादेशः ॥ ङ इत् । काल्याणिनेयः । एवं सुभगाया अपत्यमिति विगृह्य ॥

५८७ **हृद्भगसिन्ध्वोः** ।२।३।१०६। हृद्भगसिन्ध्वन्तानां ञिति णिति च तद्धिते परे पूर्वपदस्योत्तरपदस्य चादेरचः आरैचो भवन्ति ॥ सौभागिनेयः । एवं सौहार्दः इत्यादि ॥ दास्या अपत्यमिति विगृह्य ॥

५८८ **क्षुद्रादिभ्यो द्रण् वा** ।२।४।६४। अङ्गहीनाः शीलहीनाश्च स्त्रियः क्षुद्राः ताभ्योऽपत्ये द्रण्वा भवति ॥

५८९ **लुग्व्योर्वल्कौ** ।२।३।३५। प्रत्ययस्यावयवे कार्ये च वलि कौ च परे वकारयकारयोर्लुग् भवति ॥ पक्षे ढण् । दासेरः दासेयः । एवं कौलटेरः कौलटेयः इत्यादि । भ्रातुरपत्यमिति विगृह्य ॥

५९० **भ्रातुर्व्यः** ।२।४।७१। भ्रातृशब्दादपत्ये व्यो भवति ॥ भ्रातृव्यः ॥ स्वसुरपत्यमिति विगृह्य ॥

५९१ **स्वसुश्च छः** ।२।४।७२। स्वसृशब्दाद्भ्रातृशब्दाच्चापत्ये छो भवति ॥ स्वस्रीयः । भ्रात्रीयः ॥

५९२ **मातृपित्रादेर्डुण्छणौ** ।२।४।७३। मातृपितृपूर्वात्स्वसुरपत्ये डुण्छणौ भवतः ॥ डित्त्वात् ऋतो लुक् । उरिति षिः । मातृष्वसुरपत्यं

मातृष्वसेयः मातृष्वस्रीयः । एवं पैतृष्वसेयः पैतृष्वस्रीयः ॥ कुलस्यापत्यमिति विगृह्य ॥

५९३ **कुलात् खः** ।२।४।९०। कुलशब्दादपत्ये खो भवति ॥ ख ईन् । कुलीनः ॥

५९४ **दुःकुलाड्ढण्** ।२।४।९२। दुःकुलशब्दादपत्ये ढण् वा भवति॥ पक्षे खः । दुःकुलस्यापत्यं दौष्कुलेयः दुष्कुलीनः ॥

५९५ **महाकुलादञ्खञ्** ।२।४।९३। महाकुलशब्दादपत्ये अञ्खञौ वा भवतः ॥ पक्षे खः । महाकुलस्यापत्यं माहाकुलः । माहाकुलीनः महाकुलीनः ॥

५९६ **श्वशुराद्यः** ।२।४।९४। श्वशुरशब्दादपत्ये यो भवति ॥ श्वशुरस्यापत्यं श्वशुर्यः ॥

५९७ **जातौ राज्ञः** ।२।४।९५। राजन्शब्दादपत्ये यो भवति जातौ क्षत्रियत्वे गम्यमाने ॥

५९८ **येऽनोऽष्ये** ।२।३।६१। ष्यवर्जिते यप्रत्यये अनो लुग्न भवति ॥ राज्ञोऽपत्यं राजन्यः । जाताविति किम्? अन्यत्राणेव ॥

५९९ **अणि** ।२।३।६२। अण्यनो लुग्न भवति ॥ राजनः ॥

६०० **क्षत्राद् घः** ।२।४।९६। क्षत्रशब्दादपत्ये घो भवति जातिश्चेत् ॥ घस्य इय् क्षत्रियः । अन्यत्र क्षात्रिः ॥ मनोरपत्यमिति विगृह्य ॥

६०१ **मनोर्याणौ षक् च** ।२।४।९७। मनुशब्दादपत्ये याणौ भवतः तस्य षगागमश्च ॥ अकावितौ । मनुष्यः मानुषः इत्यादि ॥

६०२ **पृथिव्या आञ्** ।२।४।९। पृथिवीशब्दात् प्राग्जितीयेऽर्थे आञौ भवतः ॥ पृथिव्या अपत्यं पार्थिवः । स्त्रियां पार्थिवी पार्थिवा ॥

६०३ **देवाद्यञ्च** ।२।४।१२। देवशब्दात्प्राग्जितीयेऽर्थे यञञौ भवतः ॥ देवस्यापत्यं दैव्यः दैवः । स्त्रियां दैवी ॥

६०४ **स्त्रीपुंसात् ट्नञ्स्नट्नः** ।२।४।१६। स्त्रीपुंसशब्दाभ्यां वत्प्रत्ययात्प्राग्येऽर्थास्तेषु च ट्नञ् स्नट् इत्येतौ प्रत्ययौ यथासङ्ख्यं भवतः ॥टञावितौ । स्त्रियाः अपत्यं स्त्रैणः । पुंसोऽपत्यं पौंस्नः । पदस्येति सलुक् ॥

६०५ **राष्ट्रराज्ञः सरूपाद्राजापत्येऽञ्ञिः** ।२।४।९८। राष्ट्रवाचिनो राजवाचिनश्च सरूपाच्छब्दाद्राजन्यपत्ये चार्थे अञ् भवति ञिसंज्ञश्च ॥ विदेहानां राजा वैदेहः वैदेहौ ॥

६०६ **बहुष्वास्त्रियाम्** ।२।४।१०८। बहुषु वर्तमानस्य ञेः श्लुग् भवति न स्त्रियाम् ॥ विदेहाः । एवं पाञ्चालः पाञ्चालौ पञ्चालाः ॥ विदेहस्यापत्यं वैदेहः वैदेहौ विदेहाः इत्यादि । अस्त्रियामिति किं? । वैदेह्यः पाञ्चाल्यः ॥ भिक्षाणां समूह इति विगृह्य ॥

६०७ **भिक्षादेश्च समूहे** ।२।४।१२८। भिक्षादेरन्यस्माच्च समूहेऽर्थे अणादयो भवन्ति ॥ इत्यण् । भैक्षं । गर्भिणीनां समूहो गार्भिणं। यौवनं काकं मायूरम् इत्यादि ॥

६०८ **गोत्रोक्षवत्सोष्ट्राजोरभ्रवृद्धमनुष्यराजन्यराजपुत्रराज्ञो वुञ्** ।२।४।१३०। गोत्रवाचिन उक्षादिभ्यश्च समूहे वुञ् भवति॥

६०९ **वोरकः** ।२।३।३४। प्रत्ययस्य वोरको भवति ॥ औपगवानां समूहः औपगवकम् । उक्ष्णां समूहः औक्षकम् । एवं वात्सकम् औष्ट्रकम् आजकम् औरभ्रकं वार्द्धकं मानुष्यकं राजन्यकं राजपुत्रकं राजकं ॥

६१० **केदाराण्ण्यश्च** ।२।४।१३१। केदारशब्दात् समूहे वुञ् ण्यश्च भवतः ॥ केदाराणां समूहः कैदारकं कैदार्यं ॥

---

१ क्षत्रियसरूपाज्जनपदशब्दात् जनपदसरूपाच्च क्षत्रियशब्दात् यथासंख्यं राजनि रक्षतरि च क्षत्रियेऽपत्ये चाभिधेयेऽञ् भवति । स च ञिसञ्ज्ञो भवति ॥ सरूपादिति किं? सुराष्ट्राणां राजा सौराष्ट्रकः । त्रिपृष्टस्यापत्यं त्रैपृष्टः ॥

२ भिक्षादिग्रहणं अचित्तठणबाधनार्थम् । भिक्षाणां भिक्षितानामानां । भिक्षन्त इति *भिक्षा इति कर्मसाधनोऽयं शब्दः ॥*

**६११ ब्राह्मणमाणववाडवाद्यः** ।२।४।१३४। ब्राह्मणादिभ्यः समूहे यो भवति ॥ ब्राह्मणानां समूहो ब्राह्मण्यम् । एवं माणव्यं वाडव्यं ॥

**६१२ कवचिहस्त्यचित्ताच्च ठण्** ।२।४।१३२। कवचिहस्ति-भ्यामचित्तवाचिनः केदारशब्दाच्च समूहे ठण् भवति ॥

**६१३ इकठः** ।२।३।३२। प्रत्ययावयवस्य ठ इक् भवति ॥ कवचिनां समूहः कावचिकं । हस्तिनां समूहः हास्तिकम् । आपूपिकं कैदारिकं ॥

**६१४ धेनोरनञः** ।२।४।१३३। अनञ्पूर्वाद्धेनोः समूहे ठण् भवति॥[1]

**६१५ दोसिसुसुगशश्वदकस्मात्तः कः** ।२।३।३३। दोसूश-ब्दात् इसुसन्तादुगन्तात् शश्वदकस्माद्वर्जिततकारान्ताच्च परस्य प्रत्ययस्य ठऽको भवति ॥ अदित् । धेनूनां समूहो धैनुकम् । अनञिति किम्? आधेनवं ॥

**६१६ गणिकाया ण्यः** ।२।४।१३५। गणिकाशब्दात्समूहे ण्यो भवति ॥ गणिकानां समूहो गाणिक्यं ॥

**६१७ केशाद्वा** ।२।४।१३६। केशशब्दात्समूहे ण्यो वा भवति ॥ पक्षे ठण् । कैश्यं कैशिकं ॥

**६१८ छोऽश्वात्** ।२।४।१३७। अश्वशब्दात् समूहे छो वा भवति ॥ पक्षेऽण् । छ ईय् । अश्वानां समूहः अश्वीयं आश्वम् ॥

**६१९ गोरथवातात्रकव्योलम्** ।२।४।१४१। गोरथवातेभ्यः समूहे यथासङ्ख्यं त्र कव्य ऊल इति प्रत्यया भवन्ति ॥ गवां समूहो गोत्रा । रथानां समूहो रथकव्या । वलि पदत्वान्नातो लुक् वातानां समूहो वातूलः ॥

**६२० पाशादेश्च यः**[2] ।२।४।१४२। पाशादेर्गवादेश्च समूहे यो भवति ॥ पाशानां समूहः पाश्या । एवं तृण्या खल्या गव्या रथ्या वात्या ॥

---

१ अनञ इति प्रतिषेधो लिङ्गं समूहे तदन्तस्यापि भवतीति। वानहास्तिकं गोधेनुकम्

२ पाश, तृण, खल, धूम, अगार, पोट, गल, पिटक, पिटाक, शकट, हल, नल, वन, वृत् इति पाशादिर्गणः ॥

**६२१ ग्रामजनबन्धुगजसहायात्तल्** ।२।४।१४३। ग्रामादिभ्यः समूहे तल् भवति ॥ ल इत् । ग्रामाणां समूहो ग्रामता । बलि पदत्वान्नातो लुक् । जनता बन्धुता गजता सहायता । वनस्पतीनां समूहो वानस्पत्यं । स्त्रीणां समूहः स्त्रैणम् । एवं पौंस्नम् इत्यादि ॥

**६२२ श्वखलादिभ्योऽञिन्** ।२।४।१४४। श्वादिभ्यः समूहे अञ् भवति । खलादिभ्य इन् ॥ शुनां समूहः शौनं । दण्डिनां समूहो दाण्डं । खलानां समूहः खलिनी ॥

**६२३ पुरुषात् कृतहितवधविकारे च ढञ्** ।२।४।१४५। पुरुषशब्दात् कृताद्यर्थे समूहे च ढञ् भवति ॥ ढ एय् । पुरुषेण कृतः पुरुषाय हितः पुरुषस्य वधः पुरुषस्य विकारः पुरुषाणां समूहो वा पौरुषेयः ॥ भस्मनो विकार इति विगृह्य ॥

**६२४ विकारे** ।२।४।१४६। षष्ठ्यन्तविकारे यथायोगमणादयो भवन्ति ॥ द्रव्यस्यावस्थान्तरं विकारः तत्राण् भास्मनः । मृत्तिकाया विकारो मार्तिकः ॥

**६२५ विकारापत्येऽश्महितनाम्नो वा** ।२।३।७१। अश्मन् हितनामन् इत्येतयोरन्त्याजादेर्यथासङ्ख्यं विकारेऽपत्ये च तद्धिते परे लुग्वा भवति ॥ अश्मनो विकार आश्मः । आश्मनः । हैतनामः हैतनामनः ॥

**६२६ त्रपुजतोः षक्** ।२।४।१४९। त्रपुजतुभ्यां विकारे अण् भवति तयोः षक्कागमः ॥ त्रपुणो विकारस्त्रापुषं जातुषं ॥

**६२७ कंसीयाञ्ञ्यः** ।२।४।१५२। कंसीयशब्दात् विकारे ञ्यो भवति यस्य लुक् च ॥ कंसीयस्य विकारः कांस्यं ॥

**६२८ कौशेयम्** ।२।४।१५७। कोशस्य विकारः कौशेयमिति निपात्यते

**६२९ हेमादिभ्योऽञ्** ।२।४।१६१। हेमादिभ्यो विकारे चावयवे चाञ् भवति ॥ हेम्नो विकारोऽवयवो वा हैमं विष्टरम् । एवं राजतं सौवर्णमित्यादि ॥

**६३० वाऽभक्ष्याच्छादने मयट्** ।२।४।१६२। षष्ठ्यन्ताद्विकारे अवयवे च मयड्वा भवति न भक्ष्याच्छादनयोः ॥ भस्मनो विकारः भस्ममयं पक्षे अणादि। एवं कपोतस्य विकारः कपोतमयं कापोतं। दूर्वामयं दौर्वं। खादिरमयं खादिरं। अभक्ष्याच्छादन इति किं? मौद्गः सूपः। कार्पासः पटः ॥

**६३१ शराद्येकाचः** ।२।४।१६३। शरादिभ्यः एकाचश्च विकारावयवयोर्मयड् भवति ॥ शरस्य विकारः शरमयम्। एवं दर्भमयं मृन्मयं वाङ्मयमित्यादि ॥ धनस्य विकार इति विगृह्य ॥

**६३२ नाम दुः** ।१।१।१७। नाम दुसंज्ञं वा भवति ॥

**६३३ दोरप्राणिनः** ।२।४।१६४। अप्राणिनो दुसंज्ञाद्विकारावयवयोः मयड् भवति ॥ धनमयम्। एवं इषन्मयं। पक्षे अणादि। धानं दार्षदम् इत्यादि ॥

**६३४ त्यदादिः** ।१।१।१८। त्यदादिर्दुसंज्ञो नित्यं भवति ॥ दुसंज्ञकत्वान्मयट् तस्य विकारस्तन्मयम्। एवं यन्मयं त्वन्मयं मन्मयं ॥

**६३५ यस्याच्वादिरादैच्** ।१।१।१९। यस्याचामादिरच् आदैज्वा भवति स दुसंज्ञो भवति ॥ आम्रमयं सालमयं तैलमयमित्यादि ॥

**६३६ गोव्रीहेः शकृत्पुरोडाशे** ।२।४।१६५। गोव्रीहिभ्यां विकारेऽवयवे च मयड् भवति यथासङ्ख्यं शकृति पुरोडाशे चार्थे ॥ गोर्विकारो गोमयं शकृत्। अन्यत्र गव्यं। व्रीहिमयः पुरोडाशः। अन्यत्र व्रैहं ॥

**६३७ पिष्टिका हैयङ्गवीनम्** ।२।४।१६७। एतौ विकारे साधू वेदितव्यौ ॥ पिष्टस्य विकारः पिष्टिका। ह्योगोदोहस्य विकारः हैयङ्गवीनं ॥

**६३८ बहुलं लुक्पुष्पमूले** ।२।४।१६९। विकारावयवयोर्विहितस्य प्रत्ययस्य बहुलं लुप् भवति पुष्पे मूले च वाच्ये ॥ मल्लिकायाः

---

१ जातिगुणक्रियाद्रव्यनिरपेक्षं यन्नामधेयं संव्यवहारार्थं हृद्यभियुज्यते तन्नाम। लौकिकप्रवृत्तिनिमित्तं विना निमित्तान्तरेण ॥ "गोर्योऽचि ।२।४।३। गोशब्दादजादिप्रत्ययप्रसङ्गे यप्रत्ययो भवति ॥" इति कमसूत्रेण यप्रत्ययः। गवि भवं गव्यम्। गव्यं त्रिषु गवां सर्वम ॥

विकारः पुष्पं मल्लिका । एवं यूथिका नवमालिका मालती । बृहत्या अवयवो मूलं बृहती । पाठा इत्यादयः । कचिन्न भवति कारहाटमित्यादि ॥

६३९ **फले** ।२।४।१७०। विकारावयवप्रत्ययस्य श्लुग् भवति फले वाच्ये ॥ आमलक्याः विकारः फलम् आमलकम् । एवं बदरमाम्रमित्यादि । हरीतक्या विकारः फलं हरीतकी । एवं द्राक्षादयोऽपि नियतलिङ्गाः ॥

६४० **प्लक्षादेरण्** ।२।४।१७१। प्लक्षादिभ्यो विकारावयवयोः अण् भवति फले वाच्ये ॥ श्लुचोऽपवादः । प्लक्षस्य विकारः फलं प्लाक्षम् । एवमौदुम्बरं कारवेल्लमित्यादि ॥

६४१ **जम्ब्वा वा** ।२।४।१७२। जम्बूशब्दाद्विकारावयवयोरण्वा भवति फले वाच्ये ॥ जम्ब्वा विकारः फलं जाम्बवं । पक्षे श्लुच्युभयथा लिङ्गं । जम्बु जम्बूः ॥ सिद्धान्तस्य बोद्धाऽध्येता वेति विगृह्य ॥

६४२ **बोद्धृध्येत्रोः** ।२।४।१७३। षष्ठ्यन्ताद् बोद्धर्यध्येतरि चार्थे अणादयो भवन्तीत्यण् ॥ सैद्धान्तः । एवं नैमित्तिकः मौहूर्तिकः छान्दसः वैद्यः इत्यादि ॥ व्याकरणस्य बोद्धा अध्येता वेति विगृह्य अणि सति ॥

६४३ **पदे स्वष्टैच्** ।२।३।८७। आरैच्प्राप्तेरच आदेशयोर्यवयोः पदे परतः टैच् भवति ॥ ट इदादिविध्यर्थः । वैयाकरणः ॥

६४४ **न्यायादिपदकल्पलक्षणान्तक्रत्वाख्यानाख्यायिकाट्ठण्** ।२।४।१७४। न्यायादिभ्यः पदकल्पलक्षणान्तेभ्यः क्रत्वाख्यानाख्यायिकावाचिभ्यश्च बोद्धृध्येत्रोः ठण् भवति ॥ न्यायस्य बोद्धा अध्येता वा नैयायिकः । एवं तार्किकः पौराणिकः बैजपदिकः जैनयज्ञकल्पिकः शा-

---

१ क्रतुश्च आख्यानं च आख्यायिका च क्रत्वाख्यानाख्यायिकम् । पदं च कल्पं च लक्षणं च पदकल्पलक्षणं । पदकल्पलक्षणमन्ते यस्य शब्दस्य स पदकल्पलक्षणान्तः । न्यायादिश्च पदकल्पलक्षणान्तश्च क्रत्वाख्यानाख्यायिकं च न्यायादिपदकल्पलक्षणान्तक्रत्वाख्यानाख्यायिकं तस्मात्तथोक्तः ॥ कचिदर्थस्य व्युत्पत्त्यर्थमुपाख्यानमाख्यानं । गद्यबन्धो यत्र नायकेनैव स्ववृत्तमाख्यायते साऽऽख्यायिका । आख्यायिकोपलब्धार्था प्रकल्पिता कथा ॥

ब्दलक्षणिकः काल्पसूत्रिकः कौतुककल्पिकः वासवदत्तिकः इत्यादि ॥

६४५ **अधर्मक्षत्रसंसर्गाङ्गत्रेर्विद्यायाः** ।२।४।१७१। विद्यां-शब्दान्ताद्बोद्धृध्येत्रोः ठण् भवति न धर्मादिपूर्वात् ॥ सार्वविद्यिकः चातुर्द-शविद्यिकः । अधर्मादेरिति किं? धार्मविद्यः । क्षात्रविद्यः । सांसर्गविद्यः । आङ्गविद्यः । त्रैविद्यः ॥ शाकटायनीयस्य बोद्धा अध्येता वेति विगृह्य अणि सति ॥

६४६ **प्रोक्तात्** ।२।४।१८३। प्रोक्तप्रत्ययान्ताद्विहितस्य बोद्धृध्येतृ-प्रत्ययस्य श्लुग् भवति ॥ शाकटायनीयः जैनेन्द्रः इत्यादि ॥

६४७ **मातृपितुर्भ्रातर्युलड्व्यम्** ।२।४।१८५। मातृशब्दाडुलड् भवति पितृशब्दाद्व्यः भ्रातर्यर्थे ॥ डित् । मातुर्भ्राता मातुलः । एवं पितृव्यः ॥

६४८ **पित्रोर्डामहट्** ।२।४।१८६। मातृपितृशब्दाभ्यां डामहट् भवति प्रत्येकं मातरि पितरि चार्थे ॥ डटावितौ । पितुः पिता पितामहः । पितामही माता । मातुः पिता मातामहः । मातामही माता ॥

६४९ **राजन्यादिभ्यो वुञ्** ।२।४।१९०। राजन्यादिभ्यो राष्ट्रे वुञ् भवति ॥ राजन्यानां राष्ट्रं राजन्यकम् । एवं वैराटकं मालवकमित्यादि ॥

६५० **निवासादूरभवाविति देशे नाम्नि** ।२।४।१९२। निवासे अदूरभवे च षष्ठ्यन्तादण् भवति देशे नाम्नि ॥ ऋजुनावो निवासः आर्जुनावः । वराणसाया अदूरभवा वाराणसी ॥

६५१ **सोऽत्रास्ति** ।२।४।१९३। प्रथमान्तात् सोऽस्मिन्नस्तीत्यर्थे अणादयो भवन्ति देशे नाम्नि ॥ उदुम्बरास्सन्त्यस्मिन् औदुम्बरं नगरमित्यादि ॥

---

१ पित्रा मात्रा वा । टित्वडित्वाभ्यां पित्रोरिति पिता च माता च पितरौ तयोरिति विज्ञायते । यदि समानामेक इत्येकशेषात् पिता च पिता च पितरौ तयोरिति तर्हि टित्वं व्यर्थं स्यात् ॥

**६५२ तेन निर्वृत्तश्च** ।२।४।१९४। तृतीयान्तात्तेन निर्वृत्तेऽर्थे देशनाम्नि अण् भवति ॥ सगरैर्निर्वृत्तस्सागरः ॥

**६५३ कुमुदनडवेतसमहिषाड्डित्** ।२।४।१९७। कुमुदादिभ्यो निवासाद्यर्थे डित् मतुब्भवति देशे नाम्नि ॥ कुमुदानां निवासः कुमुद्वान् । एवं नड्वान् वेतस्वान् महिष्मान् ॥

**६५४ नडशादाड्वलः** ।२।४।१९८। नडशादाभ्यां निवासाद्यर्थे डिद्वलो भवति देशे नाम्नि ॥ नड्वलः शाड्वलः ॥

**६५५ शर्करायाष्ठकण्ठाण् च** ।२।४।२०१। शर्कराशब्दात् निवासाद्यर्थे ठ कण् ठण् छ अण् तत्येते प्रत्यया भवन्ति देशे नाम्नि ॥ शर्कराणां निवासः शर्करिकः शार्करकः शार्करिकः शार्करीयः शार्करः ॥ पौषी पौर्णमासी अस्येति विगृह्य ॥

**६५६ साऽस्य पौर्णमासी** ।२।४।२०३। प्रथमान्तात् साऽस्य पौर्णमासीत्यस्मिन्नर्थे ठण्वा भवति ॥ चैत्री पौर्णमासी अस्येति चैत्रिकः चैत्रो वा । एवं कार्तिकिकः कार्तिको वा । फाल्गुनिकः फाल्गुनो वा । श्रावणिकः श्रावणो वा ॥ अर्हन् देवता अस्येति विगृह्य ॥

**६५७ देवता** ।२।४।२०६। प्रथमान्तात् साऽस्य देवतेत्यस्मिन्नर्थे अणादयो भवन्ति ॥ इत्यण् । आर्हतः ॥ एवं जैनः सौगतः शैवः वैष्णवः इत्यादि ॥

---

१ अस्येत्यवयवसम्बन्धे इह षष्ठी । पौर्णमासीति पूर्णो मासः पक्षद्वयमस्यां तिथौ सा अथवा पूर्णमासश्चन्द्रो यस्यां तिथौ । अथवा पूर्णमासा पूर्णचन्द्रेण युक्ता तिथिरिति । पूर्णमासे इयं तिथिर्वा पौर्णमासी ॥ " आग्रहायण्यश्वत्थाट्ठण् ।२।४।२०४। आग्रहायण्यश्वत्थाभ्यां साऽस्य पौर्णमासीत्यस्मिन्नर्थे ठण् भवति ॥ आग्रहायणी पौर्णमासी अस्येति आग्रहायणिकः । एवमाश्वत्थिकः ॥ चैत्रकार्तिकीफाल्गुनीश्रवणाद्वा ।२।४।२०५। चैत्रादिभ्यः साऽस्य पौर्णमासीत्यस्मिन्नर्थे ठण्वा भवति ॥ चैत्री पौर्णमासी अस्येति चैत्रिकः चैत्रो वा । एवं कार्तिकीको कार्तिको वा । फाल्गुनिकः फाल्गुनो वा । श्रवणीकः श्रावणो वा ॥ " ( ताडपत्रपुस्तके सूत्रद्वयमिदमाधिकं दृश्यते )

**६५८ महेन्द्राद्घ** ।२।४।२०९। महेन्द्रशब्दात्साऽस्य देवतेत्यस्मिन् अर्थे छघौ वा भवतः ॥ महेन्द्रो देवता अस्येति महेन्द्रीयः महेन्द्रियः माहेन्द्रो बलिः ॥

**६५९ कसोमाट्ट्यण्** ।२।४।२१२। कसोमशब्दाभ्यां साऽस्य देवतेत्यस्मिन्नर्थे ट्यण् भवति ॥ टणावितौ । कः परमात्मा देवता अस्य कायः । कायी पूजा ॥ परत्वादात् सोमो देवताऽस्य सौम्यः ॥

**६६० युद्धेऽर्थयोद्धृभ्यः** ।२।४।२१६। अर्थः प्रयोजनं तद्वाचिनो योद्धृवाचिनश्च प्रथमान्तात् षष्ठ्यर्थे युद्धे वाच्ये अणादयो भवन्ति ॥ सुलोचना प्रयोजनमस्य युद्धस्य सौलोचनं । विद्याधरा योद्धारोऽस्य वैद्याधरं युद्धं ॥

**६६१ प्रहरणात् क्रीडायां णः** ।२।४।२१९। प्रहरणवाचिनः सप्तम्यर्थे क्रीडायां णो भवति ॥ मुष्टिः प्रहरणमस्यां क्रीडायां मौष्टा । एवं दाण्डा इत्यादि ॥ कुसुम्भेन रक्तमिति विगृह्य ॥

**६६२ टो रागाद्रक्ते** ।२।४।२२०। तृतीयान्ताद्रागवाचिनः तेन रक्तमित्यस्मिन्नर्थे अणादयो भवन्तीत्यण् ॥ कौसुम्भं वस्त्रं । कौङ्कुमं हारिद्रमित्यादि ॥

**६६३ लाक्षारोचनाट्ठण्** ।२।४।२२१। लाक्षारोचनाभ्यां रक्ते ठण् भवति ॥ लाक्षया रक्तं लाक्षिकं । रौचनिकं ॥

**६६४ चन्द्रोपेतात्काले** ।२।४।२२५। चन्द्रोपेतान्नक्षत्रवाचिनः तेन युक्ते काले अणादयो भवन्तीत्यण् ॥ पुष्येण चन्द्रोपेतेन युक्ता पौर्णमासी ॥

**६६५ तैषपौषमस्मात्** ।२।३।७७। नक्षत्रवाचिनो विहिते प्रत्यये परे तिष्यपुष्यशब्दयोस्तैषपौषौ निपात्येते ॥ पौषी तैषी । चित्रया चन्द्रोपेतया युक्ता पैर्णमासी चैत्री । विशाखया वैशाखी । ज्येष्ठया ज्यैष्ठी । अषाढया

---

१ कश्चात्मा च समाख्यातः सुखशीर्षजले च कम् ॥

२ प्रवृत्तिसाध्यं फलमर्थः ॥

आषाढी। भद्रपदया भाद्रपदी। अश्वयुजा आश्वयुजी। कृत्तिकाभिः कार्तिकी। मृगशीर्षेण मार्गशीर्षी। मघाभिर्माघी। फल्गुन्या फाल्गुनी॥

६६६ **श्रवणाश्वत्थान्नाम्न्यः** ।२।४।२२८। चन्द्रोपेताभ्यां श्रवणाश्वत्थाभ्यां युक्ते काले अप्रत्ययो भवति नाम्नि विषये॥ श्रवणेन चन्द्रोपेतेन युक्ता पौर्णमासी श्रवणा। एवमश्वत्था॥ वस्त्रेण च्छन्नो रथ इति विगृह्य॥

६६७ **छन्ने रथे** ।२।४।२३३। तृतीयान्ताच्छन्ने रथेऽर्थे अणादयो भवन्तीत्यण्॥ वास्त्रो रथः। एवं काम्बलो गौण इत्यादि॥

६६८ **स्थण्डिले शेते व्रती** ।२।४।२३६। स्थण्डिलशब्दात् सप्तम्यन्तात् शेते इत्यस्मिन्नर्थेऽग् भवति व्रतिनि वाच्ये॥ स्थण्डिले शेत इति स्थाण्डिलो व्रती॥

६६९ **संस्कृते भक्ष्ये** ।२।४।२३७। सप्तम्यन्तात् तत्र संस्कृते भक्ष्येऽर्थे अणादयो भवन्तीत्यग्॥ भ्राष्ट्रे संस्कृताः भ्राष्ट्राः अपूपाः॥

६७० **कल्यग्नेर्ढण्** ।२।४।८। कल्यग्निभ्यां प्राग्जितीये अर्थे ढण् भवति॥ कलौ संस्कृतं कालेयम्। अग्नौ संस्कृतमाग्नेयम्॥

६७१ **शूल्योख्यक्षैरेयदाधिकौदश्वित्कौदश्वितम्** ।२।४।२३८। शूल्यादयः संस्कृते अर्थे साधवो वेदितव्याः॥ शूले संस्कृतं शूल्यम्। उखायामुख्यं। क्षीरे क्षैरेयं। दध्नि दाधिकम्। उदश्वित्यौदश्वित्कम् औदश्वितं वा॥

६७२ **क्वचित्** ।२।४।२३९। उक्तात्र्थेभ्यः क्वचिदन्यत्राप्यर्थे अणादयो भवन्ति॥ इत्यग्। चक्षुषा गृह्यत इति चाक्षुषं रूपम्। एवं श्रावणः शब्दः। उदूखलेन पिष्टमौदूखलं। कलौ दृश्यते कालेयं मिथ्यात्वम्। अश्वैरूह्यते आश्वो रथः॥ नद्यां जातो भवो वेति विगृह्य॥

---

१ सत उत्कर्षाधानं संस्कारः॥

२ उदश्विन्मथितं तक्रम्॥

**६७३ नद्यादिराष्ट्रदूरोत्तराड्ढण्घैत्याहञ्** ।३।१।१। जितात् प्राक् येऽर्था वक्ष्यन्ते तेषु कृतादिषु नद्यादेर्ढण् भवति राष्ट्राद् घः दूरादेत्यः उत्तरादाहञ् ॥ अणपवादः । नादेयः । एवं राष्ट्रियः दूरेत्यः औत्तराहः ॥

**६७४ पारावारावारपारेभ्यः खः** ।३।१।२। पार अवार पारावार अवारपार इत्येतेभ्यः प्राग्जितीयेऽर्थे खो भवति ॥ पारे जातो भवो वा पारीणः । एवमवारीणः पारावारीणः अवारपारीणः ॥

**६७५ ग्रामाद्यखञ्** ।३।१।३। ग्रामशब्दात् प्राग्जितीयेऽर्थे कृतादौ यखञौ भवतः ॥ ग्रामे कृत इत्यादि विगृह्य ग्राम्यः ग्रामीणः ॥

**६७६ कत्र्यादेश्च ढकञ्** ।३।१।४। कत्र्यादेर्ग्रामाच्च प्राग्जितीयेऽर्थे कृतादौ ढकञ् भवति ॥ कात्रेयकः । पुष्करे जातः पौष्करेयकः । एवं ग्रामेयकः ॥

**६७७ कुलकुक्षिग्रीवाच्छ्वास्यलङ्कारे** ।३।१।६। कुलादिभ्यो यथासङ्ख्यं श्वादिषु वाच्येषु प्राग्जितीयेऽर्थे ढकञ् भवति ॥ कुले जातः कौलेयकः श्वा । एवं कौलेयकोऽसिः । ग्रैवेयकोऽलङ्कारः ॥

**६७८ दक्षिणापश्चात्पुरसस्त्यण्** ।३।१।७। दक्षिणादिभ्यः प्राग्जितीयेऽर्थे कृतादौ त्यण् भवति ॥ दक्षिणायां जातः दक्षिणात्यः एवं पाश्चात्यः पौरस्त्यः ॥

**६७९ क्वेहामात्तस्त्रात्त्यच्** ।३।१।८। कादिभ्यस्तसन्तात् त्रान्ताच्च प्राग्जितीयेऽर्थे त्यच् भवति ॥ च इत् । क जात इत्यादि । क्वत्यः इहत्यः अमात्यः कुतस्त्यः अत्रत्यः इत्यादि ॥

---

१ "ढः कृतलब्धक्रीतसम्भूते ।३।१।८४।" इत्यारभ्य "हो जित० ।३।२।२।" इति सूत्रपर्यंतं प्रकरणभेदेन वक्ष्यमाणेष्वर्थेषु अणादयो भवन्ति ॥ तेषामुदाहरणं नदीनां समूहो नादिकं । राष्ट्रस्यापत्यं राष्ट्रिः इति चिन्तामणौ ॥

२ कुत्सितास्त्रयो जातिरूपजवा अस्या इति कत्री गर्धभी ॥

३ पद्मे करिकरप्रान्ते व्योम्नि खण्डे फले गदे। वाद्यभाण्डमुखे तीर्थे जले पुष्करमष्टसु॥

**६८० ऐषमोह्यःश्वसः** ।३।१।१०। ऐषमस् ह्यस् श्वस् इत्येतेभ्यः प्राग्जितीयेऽर्थे त्यज्वा भवति ॥ पक्षे तनट् । ऐषमो जातः ऐषमस्त्यः ऐषमस्तनः । एवं ह्यस्त्यः ह्यस्तनः । श्वस्त्यः श्वस्तनः ॥

**६८१ द्युदक्प्रागपाक्प्रतीचो यः** ।३।१।११ दिवादिभ्यः प्राग्जितीयेऽर्थे यो भवति ॥ दिवि भवं दिव्यम् । एवमुदीच्यं प्राच्यं अपाच्यं प्रतीच्यं ॥

**६८२ भवतष्ठण्छस्** ।३।१।२४। भवच्छब्दात् प्राग्जितीये अर्थे ठण्छसौ भवतः ॥ णसावितौ । भवतः इदं भावत्कं भवदीयं । सिति पदत्वाज्जश् ॥

**६८३ जनपरराज्ञोऽक्छः** ।३।१।२५। जनादिभ्यः प्राग्जितीये अर्थे अक्छो भवति ॥ जनस्येदं जनकीयम् । एवं परकीयं राजकीयं ॥[1]

**६८४ दोश्छः** ।३।१।२६। दुसंज्ञकात्प्राग्जितीये अर्थे छो भवति ॥ तस्येदं तदीयम् । एवं त्वदीयं मदीयं ॥

**६८५ उष्णादिभ्यः कालात्** ।३।१।२७। उष्णादेः परो यः कालशब्दस्तदन्तात् प्राग्जितीये अर्थे छो भवति ॥ उष्णकाले भवः उष्णकालीयः । एवं शीतकालीयः ॥

**६८६ व्यादिभ्यः ठण्णिठौ** ।३।१।२८। व्यादिभ्यः परो यः कालशब्दः तदन्तात् प्राग्जितीये अर्थे ठण्णिठौ भवतः ॥ णितावितौ । विकाले भवः वैकालिकः । एवं पौर्वकालिकः सार्वकालिकः ऐदङ्कालिकः । स्त्रियां वैकालिकी वैकालिका इत्यादि ॥

**६८७ समुद्रान्नृनावोः** ३।१।४०। समुद्रशब्दात् प्राग्जितीये

---

१ इह केचित् "स्वजनपरराज्ञोऽक्छः" इति पठन्ति ततः स्वकीयमिति सिध्दं । अकारः पुम्भवार्थः । राज्ञ्या इदं राजकीयं । अकारं मुक्त्वा उक्ते सति हि नलि पदान्तत्वान्नस्य लोपेन राजकीयमिति सिध्यतीत्युक्ते आह- "त्वमौ प्रत्ययोत्तरपदे चैकस्मिन् ।२८०" प्रत्यये परे त्वमादेशौ भवतो बहुत्वे न । तत्र युष्मदीयं अस्मदीयमिति सिध्यति ॥

कृताद्यर्थे वुञ् भवति नरि नावि च वाच्ययोः॥ समुद्रे भवः सामुद्रको ना। स्त्रियां आङि। त्यायदाद्यत इति इत् सामुद्रिका नौः। अन्यत्राणेव। सामुद्रं लवणं॥

६८८ **वा** ।३।१।५५। पर्वतशब्दात् प्राग्जितीये अर्थे छो वा भवति॥ पक्षेऽण्। पर्वते भवं पर्वतीयं पार्वतमित्यादि॥

६८९ **युष्मदस्मदोऽञ्खञौ वाकङ् चैकस्मिंस्तवकममकम्** ।३।१।५७। युष्मदस्मद्भ्यां प्राग्जितीये अर्थे अञ्खञौ वा भवतः तयोराकङ् चान्तादेशः एकत्वविशिष्टेऽर्थे तवकममकादेशौ॥ युष्माकमयं यौष्माकः यौष्माकीणः। अस्माकमयम् आस्माकः आस्माकीनः। तवायं तावकः तावकीनः। ममायं मामकः मामकीनः। स्त्रियां यौष्माकी यौष्माकीणा। आस्माकी आस्माकीना। तावकी तावकीना। मामकीना॥

६९० **नरिका मामिका** ।१।३।९१। नरिका मामिकेति स्त्रियां निपात्येते॥ ममेयं मामिका। पक्षे छः। युष्मदीयः अस्मदीयः॥

६९१ **योऽर्धात्** ।३।१।५८। अर्धशब्दात् प्राग्जितीये यो भवति॥ अर्धे भवमर्ध्यं॥

६९२ **सादेष्ठण्** ।३।१।५९। सपूर्वपदादर्धात् प्राग्जितीये ठण् भवति॥ विजयार्धे भवो वैजयार्धिकः। एवमौत्तरार्धिकमित्यादि॥

६९३ **समानादिलोकोत्तरपदाध्यात्मादिभ्यष्ठण्** ।३।१।६४ समानपूर्वपदाल्लोकोत्तरपदात् अध्यात्मादिभ्यश्च प्राग्जितीये ठण् भवति॥

६९४ **अनुशतिकादीनाम्** ।२।३।१०८। अनुशतिक इत्येवमादीनां ञ्णिति परे पूर्वोत्तरपदयोरारैचो भवन्ति॥ समानग्रामे भवः सामा-

---

१ समान आदिर्येषां ते समानादयः। उत्तरं च तत्पदं च उत्तरपदं। लोकः उत्तरपदं येषां ते लोकोत्तरपदाः। आत्मन्यधिकृत्याध्यात्मं तदादिर्येषां ते अध्यात्मादयः। पुनर्द्वन्द्वः॥

२ शतमस्यास्तीति शतिकः। अनुकूलः शतिकोऽनुशतिकः। स आदिर्येषां ते। इहलोकपरलोकशब्दौ अनुशतिकादिगणे पठितौ ज्ञातव्यौ॥

नग्रामिकः । एवं ऐहलौकिकः । पारलौकिकः । अध्यात्मं भवं आध्यात्मिकम् । एवमाधिदैविकं सामानिकमित्यादि ॥

६९५ **वर्षाकालेभ्यः**[1] ।३।१।६६। वर्षाशब्दात् कालविशेषवाचिभ्यश्च प्रागूजितीये ठण् भवति ॥ वर्षासु भवो वार्षिकः । एवं मासिकः दैवसिकः ॥

६९६ **निशाप्रदोषहेमन्तात्** ।३।१।६९। निशादिभ्यः प्रागूजितीये ठण् वा भवति ॥ पक्षेऽण् । निशायां भवः नैशिकः नैशो वा । प्रादोषिकः प्रादोषो वा । हैमन्तिकः ॥

६९७ **लुक्तोऽणि** ।३।१।७०। अणि हेमन्तस्य तो लुग्वा भवति ॥ हैमनः हैमन्तो वा ॥

६९८ **श्वसस्तद् च** ।३।१।७२। श्वसः प्रागूजितीये ठण् वा भवति तस्य तद् च ॥ श्वो भवः शौवस्तिकः । पक्षे श्वस्त्यः ॥

६९९ **पूर्वाह्णापराह्णात्तनट्**।३।१।७३। पूर्वाह्णापराह्णाभ्यां प्रागूजितीये तनड्वा भवति ॥ पूर्वाह्णे भवः पूर्वाह्णतनः पौर्वाह्णिकः । अपराह्णतनः । एवमापराह्णिकः ॥

७०० **सायं**[3] **चिरं प्राह्णे प्रगेऽव्ययात्** ।३।१।७४। सायमादिभ्य अव्ययाच्च कालवाचिनः प्रागूजितीये तनड् भवति ॥ ट इत् ङ्यर्थः । साये जातः सायन्तनः । एवं चिरन्तनः प्राह्णेतनः प्रागेतनः पुरातनः इदानींतनः श्वस्तनः ह्यस्तनः इत्यादि ॥

७०१ **पुराणम्** ।३।१।७१। पुराभवं पुराणमिति निपात्यते ॥ पुराणकविः ॥

---

१ बहुवचनात् यथाकथञ्चित् ॥ कालशब्दाच्च कालार्थादकालार्थाच्च कालतः ॥ अकालादपि कालार्थात्कालेभ्य इति यो विधिः ॥ १ ॥ कदम्बपुष्पसहचारितः कालः कदम्बपुष्पं तत्र देयमृणं कादम्बपुष्पिकम् । एवं व्रैहिपलालिकम् ॥

२ त इति किं? अन्त्यस्य लुग्विकल्पो माभूत् ॥

३ सायमिति यन्मकारान्तमव्ययं तस्याव्ययादित्यनेनैव सिध्दं । अनव्ययस्यापि सायशब्दस्येदं प्रत्ययसन्नियोगे रूपान्तरनिवृत्त्यर्थं मान्तत्वं निपात्यते ।

**७०२ ऋतुसन्ध्यादेरण्** ।३।१।७६। नक्षत्रऋतुवाचिभ्यः सन्ध्यादिभ्यश्च प्राग्जितीये अण् भवति ॥ पुष्ये जातः पौषः । एवं माघः वासन्तः शारदः सान्ध्यः शाश्वतः । शश्वतष्ठणपि शाश्वतिकः ॥

**७०३ प्रावृष एण्यः** ।३।१।७८। प्रावृषः प्राग्जितीये एण्यो भवति ॥ प्रावृषि भवः प्रावृषेण्यः ॥

**७०४ ण्योऽन्वब्धिद्वीपात्** ।३।१।७९। अब्धिसमीपे वर्तमानाद् द्वीपात् प्राग्जितीये ण्यो भवति ॥ द्वीपे जातः द्वैप्यः । अन्वब्धीति किं? नदीसमीपे द्वैपः ॥

**७०५ पश्चाद्याद्यन्ताग्रादिमः** ।३।१।८०। पश्चादादिभ्यः प्राग्जितीये इमो भवति ॥

**७०६ स्वरादीनाम्** ।२।३।७२। स्वरादीनामव्ययानां अपदान्तानामन्त्याजादेर्लुग् भवति तद्धिते परे ॥ पश्चाज्जातः पश्चिमः । एवमादिमः अन्तिमः अग्रिमः ॥

**७०७ मध्यान्मः** ।३।१।८१। मध्यशब्दात् प्राग्जितीये मो भवति ॥ मध्ये जातो मध्यमः ॥

**७०८ उत्कर्षापकर्षयोरः** ।३।१।८२। उत्कर्षापकर्षयोर्मध्ये वर्तमानान्मध्यशब्दात् प्राग्जितीये अद्भवति ॥ मध्ये जातो मध्यः[1] ॥ प्रागुक्तानामणादीनां ढणादीनाञ्च प्रत्ययानामर्थविशेषा इतो दर्शयिष्यन्ते ॥

**७०९ ङेः[2] कृतलब्धक्रीतसम्भूते** ।३।१।८४। सप्तम्यन्तात् कृते लब्धे क्रीते सम्भूते वाऽर्थे यथायोगमणादयो ढणादयश्च भवन्ति ॥ स्रुघ्ने कृतो लब्धः क्रीतस्सम्भृतो वा स्रौघ्नः । एवं माथुरः नादेयः राष्ट्रिय इत्यादि ॥

---

१ नात्युत्कृष्टो नात्यपकृष्टो मध्यमपरिमाणो मध्यो वैयाकरणः । मध्या गुणाः । मध्या स्त्री । नातिदीर्घं नातिह्रस्वं मध्यमप्रमाणं मध्यं काष्ठं । नातिस्थूलो नातिकृशो मध्यः कायः ॥

२ ङेरिति सप्तम्यन्तोपलक्षणमित्याह सप्तम्यन्तादिति । ङेरिति चतुर्थीनिर्देशो न भवतीत्यभिधानात् ॥ आधारप्रमाणानतिरिक्तप्रमाणता आधेयस्य सम्भूतिः ॥ नद्यादि॰ राष्ट्र॰ इति सूत्रेण कृताद्यर्थे ढण् भवति । योगविभाग उत्तरार्थः ॥

**७१० कुशले** ।३।१।८५। सप्तम्यन्तात्कुशलेऽर्थेऽणादयो भवन्ति ॥ स्रुघ्ने कुशलः स्रौघ्नः । एवं माधुरः । नादेयः इत्यादि ॥

**७११ पथोऽकः** ।३।१।८६। पथः कुशले अको भवति ॥ पथि कुशलः पथकः ॥

**७१२ जाते** ।३।१।८८। सप्तम्यन्तात् जातेऽर्थे अणादयो भवन्ति ॥ स्रुघ्ने जातः स्रौघ्नः । एवं माधुरः नादेय इत्यादि ॥

**७१३ प्रावृषष्ठः** ।३।१।८९। प्रावृषो जातेऽर्थे ठो भवति ॥ प्रावृषि जातः प्रावृषिकः ॥

**७१४ कालात्साधुपुष्प्यत्पच्यमाने** ।३।१।१०२। कालवाचिनः सप्तम्यन्तात्साधौ पुष्प्यति पच्यमाने चार्थे यथायोगं प्रत्ययो भवति॥ निशायां साधुः नैशिकः नैशो वा प्रदीपः । वसन्ते पुष्प्यन् वासन्तः सहकारः । शरदि पच्यन्ते शारदाः सप्तच्छदाः ॥

**७१५ उप्ते** ।३।१।१०३। सप्तम्यन्तात् कालवाचिनः उप्तेऽर्थे यथायोगं प्रत्ययो भवति ॥ ग्रीष्मे उप्ताः ग्रैष्माः शालयः ॥

**७१६ ग्रीष्मवसन्ताद्वा** ।३।१।१०५। ग्रीष्मवसन्ताभ्यामुप्तेऽर्थे वुञ्वा भवति ॥ ग्रीष्मे उप्तं ग्रैष्मकं ग्रैष्मं । वासन्तकं वासन्तं ॥

**७१७ देये ऋणे** ।३।१।१०६। सप्तम्यन्तात् कालवाचिनः देये ऋणे यथायोगं प्रत्ययो भवति ॥ मासे देयमृणं मासिकम् । एवं सांवत्सरिकमित्यादि ॥

**७१८ रुवति मृगे** ।३।१।११०। सप्तम्यन्तात् कालवाचिनो रुवति मृगेऽर्थे यथायोगं प्रत्ययो भवति ॥ निशायां रुवन् नैशिको मृगः नैशो वा ॥

**७१९ जयिनि च** ।३।१।१११। सप्तम्यन्तात् कालवाचिनः जयि-

---

१ जाते इति किं? शयने शेते ॥

२ प्रावृष एण्यः ।७०३ ॥ इत्यस्यापवादः ।

३ ऋणे इति किं? मासदेया भिक्षा । स्वातौ देयं स्वस्तिवाचनम् ।

न्यर्थे यथायोगं प्रत्ययो भवति ॥ प्रदोषे जयी प्रादोषिकः प्रादोषः इत्यादि। चानुकर्षणात् काल इति निवृत्तम् ॥

७२० भवे ।३।१।११२। सप्तम्यन्तात् भवे सत्यर्थे यथायोगं प्रत्ययो भवति ॥ स्रुघ्ने भवः स्रौघ्नः । एवं माथुरः नादेय इत्यादि ॥

७२१ दिगाद्यङ्गांशाद्यः ।३।१।११३। दिगादिभ्यः शरीरावयववाचिभ्यश्च सप्तम्यन्तेभ्यः भवेऽर्थे यो भवति ॥ दिशि भवो दिश्यः । एवं वर्ग्यः मुख्यः ओष्ठ्यः उरस्यः मूर्धन्यः इत्यादि ॥

७२२ मध्याच्छणादिना मक् च ।३।१।११४। मध्यशब्दाद् भवेऽर्थे छणादिना भवन्ति मक् चागमः ॥ मध्ये भवो मध्यमीयः माध्यमः मध्यंदिनः ॥

७२३ जिह्वामूलाङ्गुलेश्च छः ।३।१।११५। जिह्वामूलाङ्गुलिभ्यां मध्याच्च भवेऽर्थे छो भवति ॥ जिह्वामूले भवो जिह्वामूलीयः । एवमङ्गुलीयः मध्यीयः ॥

७२४ वर्गान्तात् ।३।१।११६। वर्गान्तात् भवेऽर्थे छो भवति ॥ कवर्गे भवः कवर्गीयः । एवं चवर्गीय इत्यादि ॥

७२५ यखौ चाशब्दे ।३।१।११७। वर्गान्ताद्भवे यखौ छश्च भवन्ति न शब्दे ॥ मुनिवर्ग्यः मुनिवर्गीणः मुनिवर्गीयः । अशब्द इति किं? कवर्गीयः ॥

७२६ गम्भीरपञ्चजनबहिर्देवात् ।३।१।१२३। गम्भीरादिभ्यो भवे ञ्यो भवति ॥ गम्भीरे भवो गाम्भीर्यः । पाञ्चजन्यः । स्वरादित्वादव्ययाजादिलुक् बाह्यः । दैव्यः ॥

७२७ अन्तःपूर्वात् ।३।१।१२७। अन्तश्शब्दपूर्वादव्ययीभावाद्भवेऽर्थे ठण् भवति ॥ अन्तरगारे भवः आन्तरगारिकः । आन्तर्वसतिकः इत्यादि ॥

---

१ भवतेरत्र सत्तार्थो न जन्यार्थः इति भवजातौ भिद्येते ॥

२ पञ्चजनाख्ये रक्षसि भवः पाञ्चजन्य इति लिङ्गाभट्टयामुक्तम् ॥

**७२८ ङसो व्याख्याने च ग्रन्थात्** ।३।१।१३०। षष्ठ्यन्तात् व्याख्याने सप्तम्यन्ताच्च भवेऽर्थे ग्रन्थवाचिनः अणादयो भवन्ति ॥ सुपां व्याख्यानं सुप्सु भवं वा सौपम्। एवं तैङं कार्तमित्यादि ॥

**७२९ ऋगृद्व्यज्निज्याभ्यष्ठण्** ।३।१।१३१। ऋक्शब्दात् व्यञ्जनकादृवर्णान्तात् इज्यावाचिनश्च व्याख्याने भवे चार्थे ठण् भवति ॥ ऋचां व्याख्यानं तत्र भवं वा आर्चिकं। सौत्रिकं वार्तिकं आग्निहोतृकं सामयिकं काल्याणिकमित्यादि ॥

**७३० ङसः स्वे** ।३।१।१३७। षष्ठ्यन्तात् स्वे सम्बन्धिनि यथायोगमणादयो भवन्ति ॥ उपगोरिदम् औपगवम्। आर्हतं मतं। गाङ्गं नादेयमित्यादि ॥

**७३१ यः** ।३।१।१४२। रथात् रथान्ताच्च स्वेऽर्थे यो भवति ॥ रथस्यायं रथ्यः। महारथ्य इत्यादि ॥

**७३२ वाह्यपथ्युपकरणे** ।३।१।१४५। वाहनात् स्वे वाह्यपथ्युपकरणे चाञ् भवति नान्यत्र ॥ अश्वस्य वाह्यः आश्वो रथः। आश्वः पन्थाः। आश्वं पल्ययनम् इत्यादि ॥

**७३३ ङसेरागते** ।३।१।१५८। पञ्चम्यन्तादागतेऽर्थे यथायोगमणादयो भवन्ति ॥ स्रुघ्नादागतः स्रौघ्नः। एवं माथुरः नादेयः। कुतःकुत आगतः कौतस्कुत इत्यादि ॥

**७३४ विद्यायोनिसम्बन्धाद् वुञ्** ।३।१।१५९। विद्यासम्बन्धाद्योनिसम्बन्धाच्च वुञ् भवति ॥ आचार्यादागतमाचार्यकम्। उपाध्यायादागतमौपाध्यायकम् इत्यादि। पितामहादागतं पैतामहकमित्यादि ॥

---

१ व्याख्यायतेऽवयवशः कथ्यते येन तद्व्याख्यानं। चकारो ङसेभव इत्यस्य समुच्चयार्थः ग्रन्थः शब्दसन्दर्भः। ग्रन्थादिति किं? पाटलिपुत्रस्य व्याख्यानं ॥

२ ऋगिति स्वरूपग्रहणं नार्थग्रहणं। अर्थग्रहणे हि तदीज्यत्यर्थग्रहणानन्तरं क्रियेत प्रत्यासत्तेर्न दूरे। एतदर्थमेव ग्रहणं ऋगितिरूपग्रहणं यथा स्यात् ॥ इज्यावाचिनः पूजावाचिनः ॥

३ स्रुघ्नादागच्छन् वृक्षमूलादागत इत्यत्र वृक्षमूलान्नान्तरीयकापायान्न भवति ॥

४ विद्या च योनिश्च सम्बन्धोऽस्येति बहुव्रीहिः ॥

**७३५ ऋष्ठण्** ।३।१।१६१। ऋकारान्ताद्विद्यायोनिसम्बन्धवाचिन आगते ठण् भवति ॥ पितुरागतं पैतृकं । मातृकं । भ्रातृकमित्यादि ॥

**७३६ पित्र्यं वा** ।३।१।१६०। पितृशब्दादागते पित्र्यमिति वा निपात्यते ॥ पितुरागतं पित्र्यं पक्षे ठण् ॥

**७३७ आयस्थानात्** ।३।१।१६२। आयस्थानवाचिन आगते ठण् भवति ॥ शुल्कशालाया आगतं शौल्कशालिकम् । एवमापणिकं ॥

**७३८ शुण्डिकादेरण्** ।३।१।१६३। शुण्डिकादेरागते अण् भवति ॥ शुण्डिकः सुरापणः तस्मादागतं शौण्डिकम् । एवमौदपानमित्यादि ॥

**७३९ नृहेतुभ्यो मयड्रूप्यौ वा** ।३।१।१६४। नरवाचिनो हेतुवाचिनश्चागते मयड्रूप्यौ वा भवतः ॥ पक्षे अणादि । देवदत्तादागतं देवदत्तमयं देवदत्तरूप्यम् । अत्र वलि पदत्वान्नातो लुक् दैवदत्तं देवदत्तीयं वा । कर्मणः आगतं कर्ममयं कर्मरूप्यं कार्मणं वा इत्यादि ॥

**७४० प्रभवति** ।३।१।१६६। पञ्चम्यन्तात् प्रभवत्यर्थे अणादयो भवन्ति ॥ हिमवतः प्रभवन्ती हैमवती गङ्गा । जैनी दिव्यभाषा ॥

**७४१ त्यदादेर्मयट्** ।३।१।१६७। त्यदादेः प्रभवत्यर्थे मयड् भवति ॥ तस्मात् प्रभवत् तन्मयम् इत्यादि ॥

**७४२ वैडूर्यः** ।३।१।१६८। विडूरशब्दस्य प्रभवति वैडूर्य इति निपात्यते ॥

**७४३ टः प्रोक्ते** ।३।१।१६९। तृतीयान्तात् प्रोक्तेऽर्थे व्याख्यातेऽर्थे वा यथायोगमणादयो भवन्ति ॥ भद्रबाहुणा प्रोक्तानि भाद्रबाहवाणि उत्तराध्ययनानि । एवं सामन्तभद्रम् आकलङ्कं जैनेन्द्रमित्यादि ॥ यस्याच्वादिरादैच् इति दुसंज्ञायां दोश्छः । शाकटायनेन प्रोक्तं शाकटायनीयं पाणिनीयं जैमिनीयम् इत्यादि ॥

---

१ स्वामिग्राह्यो भाग आयः तस्योत्पत्तिस्थानं । अणादेर्बाधकोऽयं विधिः ॥

२ प्रथमत उपलभ्यमानः प्रभवः । अन्ये प्रभवति जायमाने इत्याहुः ॥ जात इति भूते सप्तम्यन्तात् अयं तु पञ्चम्यन्ताद्वर्तमाने इत्यमोघवृत्तौ ॥

**७४४ एका[1]दिशि** ।३।१।१७९। तृतीयान्तादेकादिशि यथायोगमणादयो भवन्ति ॥ सुदाम्ना एकादिक् सौदामनी । नादेयी इत्यादि ॥

**७४५ तस्[2]** ।३।१।१८०। तृतीयान्तादेकादिशि तस् भवति ॥ सुदाम्ना एकदिक् सुदामतो विद्युत् । एवं पीलुमूलतो विद्युत् इत्यादि । तस्वदित्यव्ययम् ॥

**७४६ उ[3]पज्ञाते** ।३।१।१८२। तृतीयान्तादुपज्ञाते प्रथमतो ज्ञाते यथायोगमणादयो भवन्ति ॥ अर्हता प्रथमतो ज्ञातम् आर्हतं प्रवचनं । सामन्तभद्रं महाभाष्यमित्यादि ॥

**७४७ नाम्नि कृते** ।३।१।१८३। टान्तात् कृते यथायोगमणादयो भवन्ति प्रत्ययान्तं चेत् कस्यचिन्नाम भवेत् ॥ मक्षिकाभिः कृतं माक्षिकं मधु । एवं क्षौद्रमित्यादि ॥

**७४८ ग्रन्थे** ।३।१।१८६। टान्तात् कृते ग्रन्थे यथायोगं प्रत्ययो भवति ॥ वररुचिना कृतानि वाररुचानि वाक्यानि । एवं शाकटायनीयानि व्याकरणसूत्राणि ॥

**७४९ अमोऽधिकृत्य** ।३।१।१८७। द्वितीयान्तादधिकृत्य कृते ग्रन्थे यथाविहितं प्रत्ययो भवति ॥ सुभद्रामधिकृत्य कृतं सौभद्रं । रौक्मिणं । सुभद्रारत्नावलीश्रीमतीकल्याणादयः उपचारतः सिद्धाः ॥

**७५० ज्योतिषम्** ।३।१।१८८। द्वितीयान्तादधिकृत्य कृते ग्रन्थे ज्योतिषमिति निपात्यते ॥ ज्योतींष्यधिकृत्य कृतो ग्रन्थो ज्योतिषं ॥

**७५१ ग[4]च्छति पथि दूते** ।३।१।१९०। द्वितीयान्तात् गच्छति

---

१ एका समाना दिक् साधारणा दिक् यस्य सः । सुदामा नाम पर्वतः । यस्यां दिशि विद्युत्तेनैकदिगुच्यते ॥

२ पूर्वेण यथाऽणादयो ढणादयश्च प्रत्यया विहिताः प्रत्ययान्तरमिदं । सर्वप्रकृतमिती-दं विधीयते ॥ सुदामानाम गिरिरिति लिंगाभट्टोक्तत्वात् ॥

३ उपज्ञा ज्ञानमाद्यं स्यादित्यमरः । प्रथमतो विनोपदेशेन वा ज्ञातमुपज्ञातं तस्मिन् ॥

४ पथिकेषु गच्छत्सु तद्धेतुः पन्थाः गच्छतीत्युच्यते । स्रुघ्नादिप्राप्तिर्वा पथोगमनम् ॥ पथि दूत इति किं? स्रुघ्नं गच्छति देवदत्तः । पाटलीपुत्रं गच्छति न पण्यं वणिग्वा इत्यमोघवृत्तौ ॥

पथि दूते च यथायोगं प्रत्ययो भवति ॥ स्रुघ्नं गच्छन् स्रौघ्नः पन्थाः दूतो वा । एवं माधुरः नादेय इत्यादि ॥

७५२ **अभिनिष्क्रामति द्वारे** ।३।१।१९१। द्वितीयान्तादभिनिष्क्रामति द्वारेऽर्थे यथायोगमणादयो भवन्ति ॥ स्रुघ्नमभिनिष्क्रामति द्वारं स्रौघ्नम् । एवं नादेयमित्यादि ॥

७५३ **भजति** ।३।१।१९२। द्वितीयान्ताद्भजत्यर्थे यथायोगं प्रत्ययो भवति ॥ अर्हन्तं भजन् आर्हतः । एवं जैनपत्यः नादेय इत्यादि ॥

७५४ **महाराजाचित्तादद्देशकालाट्ठण्** ।३।१।१९३। देशकालवर्जिताभ्यां महाराजाचित्ताभ्यां भजति ठण् भवति ॥ महाराजं भजन् माहाराजिकः । एवमापूपिकः शाष्कुलिकः इत्यादि । अदेशकालादिति किं? स्रौघ्नः पूर्वाह्णतनः ॥

७५५ **सोऽनिर्वासादस्य** ।३।१।१९७। प्रथमान्तान्निवासवाचिनः षष्ठ्यर्थे यथायोगं प्रत्ययो भवति ॥ स्रुघ्नो निवासोऽस्य स्रौघ्नः । एवं माधुरः नादेय इत्यादि ॥

७५६ **ठण्** ।३।२।१। इत ऊर्ध्वं येऽर्थ्या वक्ष्यन्ते तेषु ठण् प्रत्ययो भवतीत्यधिक्रियते यावत् “ यः ” इति सूत्रम् ॥

७५७ **टो[1] जितजयद्दीव्यत्खनत्सु** ।३।२।२। तृतीयान्ताज्जितादिष्वर्थेषु ठण् भवति ॥ अक्षैर्जितः जयन् दीव्यन् वा आक्षिकः । खनित्रेण खनन् खानित्रिकः ॥

७५८ **संस्कृते** ।३।२।३। टान्तात् संस्कृते ठण् भवति ॥ दध्ना संस्कृतं दाधिकं । उपाध्यायेन संस्कृत औपाध्यायिकः ॥

---

१ ट इतीह करणे तृतीया नान्यत्रानभिधानात् । तेन देवदत्तेन जितं धनेन जितमित्यत्र न भवति ॥ अभ्र्या खनन्नङ्गुल्या खनतीत्यत्र सत्यप्यङ्गुलेः करणत्वे मुख्यः करणभावोऽभ्र्या एव नाङ्गुल्या इति अङ्गुलेर्न भवति । यथा ग्रामादागच्छत् वृक्षमूलाद्गागत इत्यमोघवृत्तौ ॥ प्राग्जितादित्यण्प्रत्ययो निवृत्तः ॥

७५९ **कोपान्त्यकुलस्थादण्** ।३।२।४। कोपान्त्यात् कुलस्थशब्दाच्च संस्कृते अण् भवति ॥ तिन्त्विणीकेन संस्कृतं तैन्त्विणीकं । कुलस्थेन संस्कृतं कौलस्थं ॥

७६० **तरति** ।३।२।५। टान्तात्तरति ठण् भवति ॥ उडुपेन तरन् औडुपिकः गोपुच्छेन तरन् गोपुच्छिकः ॥

७६१ **नौद्व्यचष्ठः** ।३।२।६। टान्तात् नौशब्दाद्व्यच्काच्च तरति ठो भवति ॥ नावा तरन् नाविकः । एवं घटिकः प्लविकः । स्त्रियां नाविका ॥

७६२ **चरति** ।३।२।७। टान्ताच्चरति गच्छति भक्षयति वा ठण् भवति ॥ शकटेन चरन् शाकटिकः । शृङ्गवेरेण चरन् शार्ङ्गवेरिकः ॥

७६३ **पर्पादेष्ठट्** ।३।२।८। टान्तात् पर्पादेश्चरति ठट् भवति ॥ ट इत् पर्पेण चरन् पर्पिकः एवं दण्डिकः रथिकः ॥

७६४ **पदिकः** ।३।२।९। पादशब्दस्य चरति पदिक इति निपात्यते ॥ पद्भ्यां चरन् पदिकः ॥

७६५ **वेतनादेर्जीवति** ।३।२।११। टान्तात् वेतनादेर्जीवति ठण् भवति ॥ वेतनेन जीवन् वैतनिकः । एवमापणिकः इत्यादि ॥

७६६ **वस्नक्रयविक्रयेभ्यष्ठः**[२] ।३।२।१२। एभ्यो जीवति ठो भवति ॥ वस्नेन मूल्येन जीवन् वस्निकः । क्रयिकः । विक्रयिकः । क्रयविक्रयिकः ॥

७६७ **छश्चायुधात्** ।३।२।१३। टान्तादायुधशब्दात् जीवति छठौ भवतः ॥ आयुधेन जीवन् आयुधीयः आयुधिकः ॥

७६८ **विवधवीवधात्** ।३।२।१६। टान्ताभ्यां विवधवीवधाभ्यां हरति ठठणौ भवतः ॥ विवधेन हरन् विवधिकः वैवधिकः । एवं वीवधिकः वैवधिकः ॥

---

१ ककारोपान्त्यात् । तिन्त्विणीकं च चुक्रोम्लम् ॥

२ क्रयश्च विक्रयश्च क्रयविक्रयौ तौ च क्रयविक्रयश्च क्रयविक्रया इत्येकशेषद्योतनार्थं बहुवचनम् ॥

**७६९ निर्वृत्तेऽक्षद्यूतादेः** ।३।२।१८। टान्तात् अक्षद्यूतादेर्निर्वृत्ते ठग् भवति ॥ अक्षद्यूतेन निर्वृत्तम् आक्षद्यूतिकम्। एवं जाङ्घाप्रहतिकं मौष्टिकं प्राहारिकमित्यादि ॥

**७७० भावादिमः** ।३।२।१९। टान्तात् भावप्रत्ययान्तात् निर्वृत्ते इमो भवति ॥ पाकेन निर्वृत्तं पाकिमम्। एवमौपपादिमं सम्मूर्छिममित्यादि॥

**७७१ याचितापमित्यात् कण्**।३।२।२१। टान्तात् याचितादपमित्य इत्यव्ययाच्च निर्वृत्ते कण् भवति ॥ याचितेन निर्वृत्तं याचितकम्। अपमित्य निर्वृत्तमापमित्यकं ॥

**७७२ संसृष्टे** ।३।२।२२। टान्तात् संसृष्टे ठण् भवति ॥ दध्ना संसृष्टमन्नं दाधिकम्। एवं पैप्पलिकमित्यादि ॥

**७७३ चूर्णलवणमुद्गादिनाण्** ।३।२।२३। टान्तात् चूर्णात् संसृष्टे इन् भवति लवणादः मुद्गादण् ॥ चूर्णेन संसृष्टाः चूर्णिनोऽपूपाः। लवणेन संसृष्टो लवणः ओदनः। मुद्गैस्संसृष्टमन्नं मौद्गं ॥

**७७४ व्यञ्जनैरुपासिक्ते** ।३।२।२४। टान्ताद्व्यञ्जनादुपसिक्ते ठण् भवति ॥ सूपेनोपसिक्तं सौपिकम्। एवं दाधिकम् इत्यादि ॥

**७७५ ओजस्सहोऽम्भसा वर्तते** ।३।२।२५। टान्तादोजसादेर्वर्त्तमाने ठण् भवति ॥ ओजसा वर्त्तमानः औजसिकः। एवं साहसिकः आम्भसिकः ॥

---

१ याच्ञयाऽऽप्तं याचितकं निमयादापमित्यकमित्यमरः ॥

२ व्यज्यते उद्बोध्यते प्रकाश्यते येन ओदनादिरसस्तद्व्यञ्जनमिति सामान्येन क्रियाशब्दो विज्ञायते। उदकेनापि कदाचिद्रसोद्बोधः स्यादिति नत्वेवं विज्ञायते रूढिशब्दो व्यञ्जनशब्दः ॥ सूपो दधि घृतं तैलमिति क्वचिदेव वर्तते नोदके इति न्यासे उक्तम् ॥ व्यञ्जनैरिति किं? उदकेनोपसिक्त ओदनः। उपसिक्त इति किं? सूपेन संसृष्टा स्थाली। उपसिक्तमित्योदनादिकमुच्यते ॥ व्यञ्जनैः संसृष्टे उपसिक्त एव संसृष्टे प्रत्ययो यथा स्यादिति प्रकृतिप्रत्ययार्थं व्यवस्थार्थं च वचनम्। व्यञ्जनैरिति बहुवचनं स्वरूपविधिनिरासार्थम् ॥

**७७६ परेर्मुखपार्श्वात्** ।३।२।२७। परिपूर्वाभ्यां मुखपार्श्वाभ्यां वर्त्तमाने ठण् भवति ॥ परिमुखं वर्तमानः सेवकः पारिमुखिकः । पारिपार्श्विकः ॥

**७७७ रक्षदुञ्छतोः** ।३।२।३१। द्वितीयान्तात् रक्षत्युञ्छति चार्त्थे ठण् भवति ॥ नगरं रक्षन् नागरिकः । बदराण्युञ्छन् बादरिकः । एवं नैवारिकः पानसिक इत्यादि ॥

**७७८ मीनेमत्स्यपक्षिमृगार्त्थात् घ्नति** ।३।२।३२। मीनमत्स्याभ्यां पक्षिमृगार्त्थाभ्यां च द्वितीयान्तेभ्यो घ्नति ठण् भवति ॥ मीनान् घ्नन् मैनिकः । एवं मात्स्यिकः पाक्षिकः शाकुनिकः मार्गिकः कौरङ्गिकः इत्यादि ॥

**७७९ परिपन्थं तिष्ठति च** ।३।२।३३। द्वितीयान्तात् परिपन्थशब्दात् तिष्ठति घ्नति चार्त्थे ठण् भवति ॥ परिपन्थं तिष्ठन् घ्नन् वा पारिपन्थिकः ॥

**७८० पश्चात्यनुपदात्** ।३।२।३६। पश्चादर्थे वर्तमानात् द्वितीयान्तादनुपदाद्धावति ठण् भवति ॥ अनुपदं धावन् आनुपदिकः ॥

**७८१ परदारादीन् यति** ।३।२।३७। द्वितीयान्तात्परदारादेर्गच्छति ठण् भवति ॥ परदारान् गच्छन् पारदारिकः । एवं गौरुतल्पिकः । इत्यादि ॥

**७८२ पदोत्तरपदपदार्त्थललामप्रतिकण्ठाद्गृह्णति** ।३।२।३९। पदोत्तरपदात् पदादिभ्यश्च गृह्णति ठण् भवति ॥ प्रतिपदं गृह्णन् प्रातिपदिकः । पादिकः । आर्त्थिकः । लालामिकः । प्रातिकण्ठिकः ॥

---

१ परिर्वर्जने सर्वतो भावे वा । पारिमुख इत्यत्र यतो यतो वा स्वामिनो मुखं ततस्ततो वर्तमानः सेवकः । स्वामिनो मुखं वर्जयित्वा वर्तमान इत्यर्थः ॥

२ मीनग्रहणादन्यस्य मत्स्यपर्यायस्य न भवति । अनिमिषान् हन्ति । यदि मीनादन्यस्यापि पर्यायस्य स्यात्तर्हि मीनग्रहणमनर्थकं यथाऽन्यस्य भवति तथा मीनस्यापि स्यात् । अतो मीनग्रहणादन्यस्य मत्स्यविशेषस्य न भवतीति न्यासे उक्तम् ॥

**७८३ धर्माधर्मौ[1] चरति** ।३।२।४०। द्वितीयान्ताभ्यां धर्माधर्माभ्यां चरति अनुतिष्ठति ठण् भवति ॥ धर्मं चरन् धार्मिकः । एवमधार्मिकः ॥

**७८४ समूहान्[2] समवेते** ।३।२।४१। द्वितीयान्तेभ्यः समूहवाचिभ्यः समवेते ठण् भवति ॥ समूहं समवेतः सामूहिकः । एवं सामाजिक इत्यादि ॥

**७८५ परिषदं ण्यः** ।३।२।४२। द्वितीयान्तात् परिषच्छब्दात् समवेते ण्यो भवति ॥ परिषदं समवेतः पारिषद्यः ॥

**७८६ सेनां वा** ।३।२।४३। द्वितीयान्तात् सेनाशब्दात् समवेते ण्यो वा भवति ॥ सेनां समवेतः सैन्यः सैनिको वा ॥

**७८७ सुस्नातादीन् पृच्छति** ।३।२।४४। द्वितीयान्तेभ्यः सुस्नातादिभ्यः पृच्छति ठण् भवति ॥ सुस्नातं पृच्छन् सौस्नातिकः । सौखरात्रिक इत्यादि ॥

**७८८ प्रभूतादिभ्यो ब्रुवति** ।३।२।४५। प्रभूतादिभ्यो ब्रुवत्यर्थे ठण् भवति ॥ प्रभूतं ब्रुवन् प्राभूतिकः । एवं पार्याप्तिकः इत्यादि ॥

**७८९ शाब्दिक[3]दार्दरिकलालाटिककौक्कुटिकाः** ।३।२।४७। शाब्दिकादयः प्रसिद्धेऽर्थे ठणन्ता निपात्यन्ते ॥ शब्दमविनष्टमुच्चारयन् शाब्दिकः । दर्दरं वादित्रविशेषं वादयन् दार्दरिकः । ललाटं पश्यन् लालाटिकः सेवकः । कुक्कुटीवाल्पेन देशेन चरन् कौक्कुटिकः ॥

---

१ चरतिरासेवायां वर्तते तात्पर्येणानुष्ठाने । पुनः पुनश्चरणमासेवा ॥

२ बहुवचनं स्वरूपविधिनिरासार्थं । तदेकदेशीभावमनुभवन्नेव समवेत उच्यते । समेत्यापगते तु समवेतशब्दो नास्ति । यथा सुप्तोत्थिते सुप्त इति नास्ति ॥

३ यः कश्चित् शब्दं करोति काकभेकादिः स सर्वोऽपि शाब्दिक एव स्यात् । कस्तर्हि? यः शब्दं जानाति वैयाकरणः पुरुषः सोऽविनष्टं शब्दमुच्चारयन् शाब्दिकः ॥ निपातनं रूढ्यर्थम् ॥ दर्दरो घटादिवादित्रं तत्कुर्वन् वादयन्वा दार्दरिक उच्यते ॥ स्वामिनो दृष्टं ललाटमिति दूरतो याति न स्वामिकार्येषु उपतिष्ठते यः स लालाटिक इत्युच्यते । कुक्कुटीं पश्यन् कौक्कुटिकः । अत्र कुक्कुट्या कुक्कुटीपातो लक्ष्यते तेनापि देशस्याल्पता । तेन गच्छन् पुरो युगमात्रार्पितदृष्टिः सँयतो भिक्षुरित्युच्यते ॥ दाम्भिको वा कुक्कुटीमाचरन् कौक्कुटिकः कुक्कुटीति दाम्भिकक्रिया मिथ्याशौचादिरुच्यत इत्यमोघवृत्तौ ॥

**७९० वक्रये** ।३।२।५१। षष्ठ्यन्ताद्वक्रये ठण् भवति ॥ आपणस्य वक्रयः आपणिकः। एवं नैवासिक इत्यादि ॥

**७९१ तदस्य पण्यम्** ।३।२।५२। प्रथमान्तात् षष्ठ्यर्थे पण्ये वाच्ये ठण् भवति ॥ अपूपाः पण्यमस्य आपूपिकः। शाष्कुलिकः। ताम्बूलिकः। इत्यादि ॥

**७९२ शिल्पम्** ।३।२।५५। प्रथमान्तात् षष्ठ्यर्थे ठण् भवति प्रथमान्तं चेत् शिल्पं स्यात् ॥ नृत्तं शिल्पमस्य नार्त्तिकः। एवं गैतिकः वादनिकः मार्दङ्गिकः इत्यादि ॥

**७९३ प्रहरणम्** ।३।२।५७। प्रथमान्तात् षष्ठ्यर्थे ठण् भवति प्रथमान्तं चेत् प्रहरणं स्यात् ॥ असिः प्रहरणमस्य आसिकः। एवं चाक्रिकः धानुष्क इत्यादि ॥

**७९४ शक्तियष्टेष्टीकण्** ।३।२।५९। प्रथमान्ताभ्यां शक्तियष्टिभ्यां टीकण् भवति प्रथमान्तं चेत् प्रहरणम् ॥ शक्तिः प्रहरणमस्येति शाक्तिकः। याष्टीक इत्यादि ॥

**७९५ दैष्टिकास्तिकनास्तिकाः** ।३।२।६१। दैष्टिकादयष्ठणन्ता निपात्यन्ते ॥ दिष्टिर्दैवं प्रमाणमस्येति दैष्टिकः। अस्ति परलोकादिमतिरस्य आस्तिकः। तद्विपरीतो नास्तिकः ॥

**७९६ शीलम्** ।३।२।६२। प्रथमान्तात् षष्ठ्यर्थे ठण् भवति प्रथमान्तं चेत् शीलं स्वभावः स्यात् ॥ अपूपभक्षणं शीलमस्य आपूपिकः। एवं दाधिकः सार्पिष्कः इत्यादि ॥

**७९७ छत्रादेरञ्** ।३।२।६३। छत्रादिभ्यस्तदस्य शीलमित्यस्मिन्नर्थे अञ् भवति ॥ छत्रवच्छीलमस्य छात्रः। शिक्षा शीलमस्य शैक्षः इत्यादि ॥

---

१ छत्रशब्देन गुरुच्छिद्रावरणादिका क्रियोच्यते। उपचाराच्छिष्योऽपि छत्रवद्गुरुच्छिद्रावरणादिप्रवृत्तश्छात्र उच्यते ॥ छत्र, शिक्षा, चुक्षा, तिक्षा, भिक्षा, तितिक्षा, चुरा, स्वाविश्रद्धा, उदस्थान, परोदा, कृषि, कर्मन्, तपन्, सत्य, अनृत, विशिका इति छत्रादिगणः ॥

**७९८ तूष्णीकः** ।३।२।६४। तूष्णीम्भावः शीलमस्येति अस्मिन्नर्थे तूष्णीक इति निपात्यते ॥

**७९९ तत्र नियुक्ते** ।३।२।७२। सप्तम्यन्तान्नियुक्तेऽर्थे ठण् भवति ॥ शुल्कशालायां नियुक्तः शौल्कशालिकः। एवमापणिक इत्यादि। द्वारे नियुक्त इति ठणि ॥

**८०० द्वारादेः** ।२।३।८८। द्वारादेर्यवयोः ञ्णिति तद्धिते टैच् भवति ॥ दौवारिकः ॥

**८०१ ठोऽगारान्तात्** ।३।२।७३। अगारान्तान्नियुक्ते ठो भवति ॥ देवागारे नियुक्तः देवागारिकः। एवं कोष्ठागारिकः ॥

**८०२ अध्यायिन्यदेशकालात्** ।३।२।७४। अयोग्यदेशकालवाचिनः अध्यायिन्यर्थे ठण् भवति ॥ अशुचावध्यायी आशुचिकः। सन्ध्यायामध्यायी सान्ध्यिकः। एवं श्माशानिकः औल्किकः इत्यादि ॥

चन्द्रसूर्योपरागश्च निर्घातो भूमिकम्पनम्।
दिग्दाहो गर्जितं विद्युदुल्का सन्ध्योत्सवोऽशुचिः ॥
श्मशानाभ्याश इत्यप्यदेशकालादयः स्मृताः ॥

**८०३ निकटादिषु वसति** ।३।२।७६। निकटादिभ्यस्तत्र वसतीत्यर्थे ठण् भवति ॥ निकटे वसन् नैकटिकः। एवं वार्क्षमूलिकः ॥

**८०४ सतीर्थ्यः** ।३।२।७७। समाने तीर्थे वसन् सतीर्थ्य इति निपात्यते ॥

**८०५ चन्द्रायणं च चरति** ।३।२।८०। गोदानादिभ्यश्चन्द्रायणशब्दाच्च चरत्यर्थे ठण् भवति ॥ गोदानं चरन् गौदानिकः। एवमानगारिकः चान्द्रायणिकः इत्यादि ॥

---

१ अदेशकालादिति किं? विहारभूमावध्यायी। पूर्वाह्णेऽध्यायी इत्यमोघवृत्तौ ॥

२ तरन्ति भव्याः संसारसमुद्रं लङ्घन्ते येन स तीर्थं। कोऽर्थः? परमहितोपदेशकगुरुरित्यर्थः ॥ तीर्थं प्रवचने पात्रे लब्धाम्नाये ऽदांवरे ॥ पुण्यारण्ये जलोत्तारे महासत्यां महामुनौ ॥ १ ॥

८०६ **देवव्रतादीन् डिन्** ।३।२।८१। देवव्रतादिभ्यश्चरति डिन् भवति ॥ ड इत् । देवव्रतं चरन् देवव्रती । एवं तिलव्रती ॥

८०७ **संशयं प्राप्तेऽर्थे** ।३।२।८४। संशयशब्दात्तं प्राप्तेऽर्थे ठण् भवति ॥ संशयं प्राप्तः सांशयिकः ॥

८०८ **पथष्ठण्** ।३।२।८७। पथो याति ठण् भवति । पन्थानं यान् पथिकः ॥

८०९ **नित्यं णः पन्थश्च** ।३।२।८८। पथो नित्यं याति णो भवति पथः पन्थादेशश्च ॥ पन्थानं नित्यं यान् पान्थः ॥

८१० **योगादये शक्ते** ।३।२।९१। योगादेस्तस्मै शक्ते ठण् भवति ॥ योगाय शक्तः यौगिकः । एवं सान्तापिकः इत्यादि ॥

८११ **योग्यकार्मुके** ।३।२।९२। शक्ते एतौ निपात्येते ॥ योगाय शक्तः योग्यः । कर्मणे शक्तः कार्मुकः ॥

८१२ **काले कार्ये च भववत्** ।३।२।९५। कालवाचिनस्तत्र देये कार्ये च भववत्प्रत्ययो भवति ॥ वर्षासु देयं कार्यं वा वार्षिकम् । एवं मासिकं नैशं नैशिकमित्यादि ॥

८१३ **तेन हस्तयथाकथाचाद्यणम्** ।३।२।९७। हस्तयथाकथाचाभ्यां तेन देये कार्ये च यथासङ्ख्यं यणौ भवतः ॥ हस्तेन देयं कार्यं वा हस्त्यम् । एवं याथाकथाचं ॥

---

१ देवव्रतादयः प्रयोगगम्याः । प्रभूतं व्रतं देवव्रतम् ॥

२ अर्यते इत्यर्थो गम्यः ज्ञानस्य विषय इत्यर्थः । न जाने स्थाणुरुत पुरुषः । संशयं प्राप्तः पदार्थः सांशयिक इति यावत् ॥ अर्थ इति किं? संशयितरि माभूत् । सोऽपि हि संशयं प्राप्तो भवति तस्य तद्भावादित्यमोघवृत्तौ ॥

३ कल्यते वस्तुपरिणतिर्यस्मादसौ कालस्तस्मिन् । भवार्थे यथैव प्रत्यय उक्तस्तथैव प्रत्ययो भवति ॥ याभ्यः प्रकृतिभ्यो येन विशेषेण ये प्रत्यया भवेऽर्थे भवन्ति ताभ्यः प्रकृतिभ्यस्तेन विशेषेण कार्ये देये चार्थे ते प्रत्यया भवन्तीत्यर्थः ॥ वतिर्हि सर्वसादृश्यं द्योतयति । प्रत्ययस्य भावोऽत्राप्यतिदिश्यते इत्यमोघवृत्तौ ॥

**८१४ सम्पादिनि** ।३।२।९८। तृतीयान्तात्सम्पादिनि ठण् भवति ॥ कुण्डलाभ्यां सम्पादि कौण्डलिकं मुखम् । एवमाङ्गदिकौ बाहू इत्यादि ॥

**८१५ कर्मवेषाद्यः** ।३।२।९९। कर्मवेषाभ्यां सम्पादिनि यो भवति ॥ कर्मणा सम्पादि कर्मण्यं दैवं । वेष्यो नटः ॥

**८१६ कालात्परिजय्यलभ्यकार्यसुकरे** ।३।२।१००। कालवाचिनः परिजय्याद्यर्थे ठण् भवति ॥ मासेन परिजय्यो मासिको व्याधिः । एवं मासेन लभ्यः कार्यः सुकरो वा मासिकः पट इत्यादि ॥

**८१७ निर्वृत्ते** ।३।२।१०१। कालवाचिनो निर्वृत्ते ठण् भवति ॥ मासेन निर्वृत्तो मासिकः । एवं रात्रिकः इत्यादि ॥

**८१८ समयात्प्राप्तात** ।३।२।११३। समयादस्य प्राप्त इत्यस्मिन्नर्थे ठण् भवति ॥ समयः प्राप्तोऽस्य सामयिकं कार्यम् ॥

**८१९ ऋत्वादिभ्योऽण्** ।३।२।११४। ऋत्वादिभ्योऽस्य प्राप्ते अण् भवति ॥ ऋतुः प्राप्तोऽस्यार्त्तवं पुष्पादि । एवं यौद्धमित्यादि ॥

**८२० कालाद्यः** ।३।२।११५। कालादस्य प्राप्त इत्यस्मिन्नर्थे यो भवति ॥ कालः प्राप्तोऽस्य काल्यमध्ययनं ॥

**८२१ प्रयोजनम्** ।३।२।११७। प्रथमान्तात्तदस्य प्रयोजनमित्यस्मिन्नर्थे ठण् भवति ॥ जिनमहः प्रयोजनमस्य जैनमहिकम् । एवं नैष्ठिकः मौक्तिकः । व्यवहारः प्रयोजनमस्येति ठणि टैचि प्राप्ते ॥

**८२२ य्वः स्वङ्गादेः** ।२।३।९०। व्यतिहारे अप्रत्ययान्तस्य स्वङ्गादेश्च ञ्णिति तद्धिते आदेरचः आरैचो भवन्ति ॥ व्यावहारिकः इत्यादि ॥

**८२३ चूलादिभ्योऽण्** ।३।२।११९। चूलादिभ्यः प्रयोजने अण् भवति ॥ चूला प्रयोजनमस्य चौलं कर्म । एवं श्राद्धमित्यादि ॥

**८२४ उत्थापनादेश्छः** ।३।२।१२१। उत्थापनादेः प्रयोजने छो

---

१ प्रवृत्तिसाध्यं फलं प्रयोजनं । तत्तु प्रयोजकं प्रवर्तकं जनकं उत्पादकमित्यमोघवृत्तौ ॥

२ उत्थापन । अनुप्रवचन । अनुवादन । अनुपान । अनुवासन । आरम्भण इत्युत्थापनादिगणः ॥

भवति ॥ उत्थापनं प्रयोजनमस्य उत्थापनीयं गीतम् । एवमनुवादनीयमित्यादि ॥

**८२५ स्वर्गस्वस्तिवाचनादिभ्यो यश्लुक्** ।३।२।१२३। स्वर्गादेः प्रयोजने यो भवति स्वस्तिवाचनादेष्ठणः लुक् ॥ स्वर्गः प्रयोजनमस्य स्वर्ग्यम् । एवं यशस्यम् इत्यादि । स्वस्तिवाचनं प्रयोजनमस्य स्वस्तिवाचनम् । एवं शान्तिवाचनमित्यादि ॥

**८२६ मूल्यैः[1] क्रीते** ।३।२।१४६। मूल्यवाचिनस्तेन क्रीते ठण् भवति ॥ सप्तत्या क्रीतं साप्ततिकम् ॥ एवमाशीतिकमित्यादि ॥

**८२७ तस्य वापे** ।३।२।१४७। षष्ठ्यन्ताद्वापे क्षेत्रे ठण् भवति ॥ प्रस्थस्य वापः प्रास्थिकं क्षेत्रम् । एवं द्रौणिकमित्यादि ॥

**८२८ ईशे** ।३।२।१५३। पृथिवीसर्वभूमिभ्याम् ईशे अञ् भवति ॥ पृथिव्या ईशः पार्थिवः सार्वभौमः ॥

**८२९ लोकसर्वलोकात्** ।३।२।१५५। लोकसर्वलोकाभ्यां ज्ञाते ठण् भवति ॥ लोकस्य ज्ञातः लौकिकः । एवं सार्वलौकिकः ॥

**८३० मानम्** ।३।२।१६०। प्रथमान्तात्तदस्य मानमित्यस्मिन्नर्थे ठण् भवति ॥ प्रस्थो मानमस्य प्रास्थिको राशिः । एवं कौडुविक इत्यादि ॥ चत्वारि प्रमाणमस्येति विगृह्य

**८३१ सङ्ख्याडतेश्चाशत्तिष्टेः[2] कः** ।३।२।१२६। सङ्ख्यावा-

१ मूल्यैरिति किं? देवदत्तेन क्रीतं पाणिना क्रीतं । शूर्पाभ्यां क्रीतं शूर्पैः क्रीतमिति परिमाणशब्दात् द्विवचनबहुवचनान्तात् प्रत्ययो न भवति अनभिधानात् । शूर्पादयो द्रव्यरूपपरिमाणानामर्थानां वाचकाः ॥ न च संख्याभेदवाचिविभक्तिर्वाक्य इव वृत्तावप्यस्ति । यत्र तु प्रमाणभेदप्रतिपत्तौ प्रमाणमस्ति तत्र भवत्येव । द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पं त्रिशूर्पं ॥ तथा मुद्रैः क्रीतं मौद्रिकं । न ह्येकेन मुद्रेन क्रयः सम्भवति ॥ निर्देशादेव तृतीयान्तत्वं विज्ञायते इत्यमोघवृत्तौ ॥

२ डति त्रिंशद्विंशतीनामुपादानम् । अशत्तिष्टेरिति निषेधाठ्ठणोऽपवादः । विंशत्यादयो गुणशब्दा गुणे गुणिनि च उपात्तस्वलिंगसंख्या एव वर्तन्ते । विंशतिर्गवां विंशतिर्गावः इति साधुत्वमेषाम् ॥

चिनो डस्यन्तात् त्रिंशद्विंशतिभ्यां च माने को भवति न शत्तिष्ठ्यन्तात् ॥ चतुष्कम्॥ एवमष्टकं दशकं कतिकं त्रिंशत्कं विंशतिकम्। अशत्तिष्टेरिति किं?। चात्वारिंशत्कं साप्ततिकं षाष्टिकं ॥

**८३२ पञ्चद्दशद्वर्गे वा** ।३।२।१६४। एतौ माने वा निपात्येते वर्गे विधेये॥ पक्षे कः। पञ्चमानमस्येति पञ्चत् पञ्चको वा वर्गः। दशत् दशको वा ॥

**८३३ स्तोमे डट्** ।३।२।१६५। सङ्ख्यायास्तदस्य मानमित्यस्मिन्नर्थे डट् भवति स्तोमेऽभिधेये ॥ डटावितौ। द्वादश मानमस्य द्वादशः स्तोमः। एवं चतुर्विंश इत्यादि ॥

**८३४ अर्हति** ।३।२।१७३। द्वितीयान्तादर्हति ठण् भवति ॥ आन्दोलमर्हन् आन्दोलिकः। एवं श्वैतच्छत्रिक इत्यादि ॥

**८३५ पात्रात्** ।३।२।१७५। पात्रशब्दादर्हति यघौ भवतः ॥ पात्र्यः पात्रियः ॥

**८३६ कडङ्करदक्षिणास्थालीबिलाच्छयौ** ।३।२।१७६। कडङ्करादिभ्योऽर्हति छयौ भवतः ॥ कडङ्करमर्हन् कडङ्करीयः कडङ्कर्यो वा गौः। एवं दक्षिणीयो दक्षिण्यो वा ब्राह्मणः। स्थालीबिलीयाः स्थालीबिल्या वा तण्डुलाः ॥

**८३७ शालीनकौपीनार्त्विजीनाः** ।३।२।१७७। एते अर्हति निपात्यन्ते ॥ शालायाः प्रवेशमर्हन् शालीनो मुहूर्तादिः। कूपप्रवेशमर्हन् कौपीनं वस्त्रखण्डम्। ऋत्विजमर्हन् आर्त्विजीनो यजमानः ॥

**८३८ वैराङ्गिकः** ।३।२।१७९। विरागशब्दात्तन्नित्यमर्हति ठण् प्रत्ययो विरङ्गादेशश्च निपात्यते ॥ विरागमर्हन् वैरङ्गिकः साधुः ॥

**८३९ यः** ।३।२।१८१। अधिकारोऽयं ॥

---

१ समानानामसमानानां समूहः स्तोमः। समानानां समूहो वर्गः। चतुर्विंश इत्यत्र 'विंशतेस्तेर्डिति ।४१५।' इति सूत्रेण तेर्लुक् ॥

**८४० वहति रथप्रासङ्गात्** ।३।२।१८२। रथप्रासङ्गाभ्यां वहति यो भवति ॥ रथं वहन् रथ्यः । एवं प्रासङ्ग्यः ॥

**८४१ धुरो यढण्** ।३।२।१८३। धुरो वहति यढणौ भवतः ॥ धुरं वहन् धुर्यः धौरेयो वा ॥

**८४२ वामाद्यादेः खः** ।३।२।१८४। वामादिपूर्वाद्धुरो वहति खो भवति ॥ वामधुरं वहन् वामधुरीणः । एवं सर्वधुरीण इत्यादि ॥

**८४३ शाकटादण्** ।३।२।१८६। शकटशब्दाद्वहत्यण् भवति ॥ शकटं वहन् शाकटो गौः ॥

**८४४ हलसीराट्ठण्** ।३।२।१८७ हलसीराभ्यां वहति ठण् भवति ॥ हलं वहन् हालिकः । एवं सैरिकः ॥

---

१ प्रसज्यते इति प्रासङ्गो युगः । यद्वत्सानां घमनकाले स्कन्ध आसज्यते । तद्वहन् प्रासंग्यः । यस्त्वन्यत् प्रसङ्गादागतं प्रसङ्गमिति न भवत्यनभिधानात् ॥ रथग्रहणं किमर्थं? यो हि रथं वहति स रथ्यो वोढा भवति " रथात्सादेश्च वोढ्रङ्गे ।३।१।१४१। नियमसूत्रमेतत् रथात्सादेः सपूर्वात्केवलाच्च स्वेऽर्थे यः प्रत्ययः स रथस्य वोढरि रथाङ्ग एव भवति ॥ रथस्यायं वोढा रथ्यः । द्विरथः त्रिरथः । रथस्येदं रथ्यं चक्रं । आश्वरथं युगम् । अन्यत्र वाक्यमेव रथस्येदं । अश्वरथस्यायं स्वामी ॥" इत्येव सिद्धम् । इति चेदश्लुगर्थमिदम् । तस्य य इत्यस्य " श्लुग् द्विगोरलुचोऽनपत्येऽज्यादेः ।२।४।१५। द्विगोरलुगन्तात्परो यः प्राग्जितीयेऽपत्यवर्जितेऽर्थे अजादिर्यकारादिश्च प्रत्ययः तस्य श्लुग्भवति ॥ पञ्चसु कपालेषु संस्कृतं पञ्चकपाल्यं पञ्चकपालं वा । पञ्चेन्द्राण्यः पञ्चेन्द्राणी वा देवताऽस्य पञ्चेन्द्रः । दशेन्द्रः ॥ यादेः द्वयोः रथयोः द्विरथ्या वा अयं द्विरथः । त्रिरथः । रथात्सादेश्च नोढ्रङ्गे इति यः ॥ अलुच इति किं? पञ्चसु कपालेषु संस्कृतं पञ्चकपालं तस्येदं पाञ्चकपालम् । अनपत्य इति किं? द्वैदेवदत्तिः । पञ्चनापितिः । अज्यादेरिति किं? पञ्चगर्गमयम् ॥" इति सूत्रेण श्लुग्भवति ॥

२ अत्र यग्रहणं किमर्थमिति न ढण्चेत्येवोच्येत तत्र चकारेण यथाविहितं प्रत्ययः । प्रत्यये सति तस्य सम्बन्धविवक्षायां वहत्यण् प्रसज्येत । तन्निवृत्त्यर्थं यग्रहणमित्यमोघवृत्तौ ॥

३ शकटात् हलसीराभ्यां ' तस्यस्वे ' इति स्वत्वविवक्षायामण् ठण् सिध्दौ । अर्थविशेषौ प्रत्ययाभ्यामभिधापयितुं वचनमित्यमोघवृत्तौ ॥

**८४५ धनगणं लब्धा** ।३।२।१८९। धनगणाभ्यां लब्धरि यो भवति । धनं लब्धा धन्यः । एवं गण्यः ॥

**८४६ पदमस्मिन् दृश्यम्** ।३।२।१९१। पदशब्दादस्मिन् दृश्य-मित्यत्रार्थे यो भवति ॥ पदमस्मिन् दृश्यं पद्यः कर्दमः ॥

**८४७ नौविषेण तार्यवध्ये** ।३।२।१९२। नौविषाभ्यां यथासङ्ख्यं तार्ये वध्ये चार्थे यो भवति ॥

**८४८ ओदौतोऽवाव्यि**[1] ।२।३।३६। ओकारौकारयोः स्थाने यकारादौ प्रत्यये अव् आव् इत्येतौ क्रमेणादेशौ भवतः ॥ नावा तार्यं नाव्यं । विषेण वध्यो विष्यः ॥

**८४९ न्यायार्थादनपेते** ।३।२।१९३। न्यायार्थाभ्याम् अनपेते यो भवति ॥ न्यायादनपेतं न्याय्यम् । एवमर्थ्यं ॥

**८५० मदस्य करणे** ।३।२।१९४। मदशब्दात् करणे यो भवति ॥ मदस्य करणं मद्यं ॥

**८५१ वश्यपथ्यवयस्यधेनुष्यागार्हपत्यजन्यधर्म्यहृद्यमू-ल्यम्**[2] ।३।२।१९५। एते यप्रत्ययान्ता निपात्यन्ते ॥ वशं गतो वश्यः । पथोऽनपेतं पथ्यं । वयसा तुल्यो वयस्यः । आ ऋणप्रदानाद्दीयमाना धेनुः धेनुष्या । गृहपतिना संयुक्तो गार्हपत्यः । जनीं वधूं हरन्तो जन्याः जामातृवयस्याः । धर्मादनपेतं धर्मेण प्राप्तं च धर्म्यं । हृदयस्य प्रियं हृद्यं । मूलेन समो मूल्यः ॥

**८५२ तत्र साधौ** ।३।२।१९६। ससम्यन्तात् साधौ यो भवति ॥ सभायां साधुः सभ्यः । एवं कर्मण्यः । सामान्य इत्यादि ॥

---

१ ओदौत इति किं? रैयति । यीति किं? गोकाम्यति । प्रत्ययस्येति किं? गोयानं नौयानम् ॥ गव्यूतिमात्रमध्वानं गत इति अध्वपरिमाणवृत्तिः पृषोदरादिः ॥

२ वश्यो गुरोर्विधेय इत्यर्थः । निपातनं हि रूढ्यर्थमितीह न भवति वशं गत इच्छां प्राप्तोऽभिप्रेतं गत इत्यर्थः । एवमन्यत्रापि ॥ पथ्यं ओदनादि । वयस्यः सखा । आ ऋणप्रदानाद्दीयमाना अधमर्णेनोत्तमर्णाय । भार्या जाया जनिः कुल्या । जन्याः स्निग्धा वरस्य ये । धर्म्यं सुखम् । हृद्यमौषधम् । हृद्यो देशः । हृदयस्य बन्धनम् । हृद्यो वशीकरणमन्त्रः । मूलेनोपादानेन समस्तुल्यो मूल्यः पट इत्यर्थः । तुल्यशब्दः सदृशपर्यायः तुल्यार्थैरिति निपातनात्सिद्ध इत्यमोघवृत्तौ ॥

८५३ **पथ्यातिथिवसतिस्वपतेर्ढण्** ।३।२।१९७। पथ्यादिभ्यः साधौ ढण् भवति ॥ पथि साधु पाथेयम् । एवमातिथेयं वासतेयं स्वापतेयं ॥

८५४ **परिषदो ण्यश्च** ।३।२।१९९। परिषच्छब्दात् साधौ णो ण्यश्च भवतः ॥ परिषदि साधुः पारिषदः पारिषद्यो वा ॥

८५५ **सर्वजनात् खश्च** ।३।२।२००। सर्वजनात्साधौ ण्यः खश्च भवतः ॥ सर्वजनेषु साधुः सार्वजन्यः । सार्वजनीनः ॥

८५६ **प्रतिजनादेः** ।३।२।२०१। प्रतिजनादेः साधौ खञ् भवति ॥ प्रतिजने साधुः प्रातिजनीनः । एवमैदंयुगीनः इत्यादि ॥

८५७ **कथादेष्ठण्** ।३।२।२०२। कथादेः साधौ ठण् भवति । कथायां साधुः काथिकः । एवं नैकटिकः वैतण्डिक इत्यादि ॥

८५८ **पाद्यार्घ्ये** ।३।२।२०४। एतौ तदर्थे निपात्येते ॥ पादार्थं पाद्यं जलम् । अर्घार्थं द्रव्यम् अर्घ्यं ॥

८५९ **ण्योऽतिथेः** ।३।२।२०५। अतिथिशब्दात्तदर्थे ण्यो भवति ॥ अतिथ्यर्थमातिथ्यम् ॥

८६० **छः** ।३।२।२०८। आपादपरिसमाप्तेर्येऽर्था वक्ष्यन्ते तेषु छप्रत्ययो भवति ॥ इत्याधिक्रियते ॥

८६१ **तस्मै हितेऽराजाचार्यब्राह्मणवृष्णः** ।३।२।२१३। चतुर्थ्यन्तात् हिते छो भवति न राजादेः ॥ सर्वस्मै हितः सर्वीयः । एवं *वत्सीयः इत्यादि । अराजादेरिति किं? । ततो वाक्यमेव राज्ञे हितम् ।* आचार्याय हितं । ब्राह्मणाय हितं । वृष्णे हितं ॥

८६२ **रथखलतिलयवमाषवृषब्रह्मप्राण्यङ्गाद्यः** ।३।२।२१४। रथादिभ्यः प्राण्यङ्गवाचिनश्च हिते यो भवति ॥ रथाय हिता रथ्या भूमिः । एवं खल्यं तिल्यं यव्यं माष्यं वृष्यं ब्रह्मण्यं दन्त्यं चक्षुष्यम् इत्यादि ॥

---

१ खल्यं अग्निरक्षणम् । वृष्यं क्षीरपानम् । ब्रह्मण्यं नगरम् । दन्त्यं लवणम् । चक्षुष्यमञ्जनम् ।

८६३ **[1]ष्यो़ऽजावेः** ।३।२।२१६। अजाविभ्यां हिते ष्यो भवति॥ षइत्। अजायै हितः अजथ्यः। एवमविथ्यः॥

८६४ **भोगोत्तरपदात्मनभ्यां खः** ।३।२।२१७। भोगोत्तरपदादात्मन्शब्दाच्च हिते खो भवति॥ मातृभोगाय हितः मातृभोगीणः। एवमात्मने हितः आत्मनीनः। नश्रुतेरलुक्॥

८६५ **[2]पञ्चसर्वविश्वाज्जनात्कर्मधारयात्** ।३।२।२१८। पञ्चादिपूर्वाज्जनान्तात्कर्मधारयात्तद्धिते खो भवति॥ पञ्चजनेभ्यो हितः पञ्चजनीनः। सर्वजनीनः। विश्वजनीनः॥

८६६ **सर्वाण्णो वा** ।३।२।२२०। सर्वशब्दात् हिते णो वा भवति॥ *पक्षे छः। सर्वेभ्यो हितः सार्वः सर्वीयः॥*

८६७ **[3]परिणामिनि तदर्थे** ।३।२।२२१। चतुर्थ्यन्तात्तदर्थे परिणामिनि वाच्ये छो भवति॥ अङ्गारेभ्यः इमानि अङ्गारीयाणि काष्ठानि। एवमोदनीयास्तण्डुलाः इत्यादि॥

८६८ **तस्यार्हे कृत्ये वत्** ।३।३।१। षष्ठ्यन्तादर्हे कृत्ये वद्भवति॥ राज्ञोऽर्हं कृत्यं राजवद्वृत्तमस्य। एवं यथावद्विधिवदित्यादि॥

८६९ **[4]सुप इवे** ।३।३।२। सुबन्तादिवार्थे सादृश्ये वद्भवति॥

---

१ अवयः शैलमेषाद्या इत्यमरः॥ पकारः 'पिति तद्धिते' इति पुंभावार्थः॥ *अजाभ्यो हिता अजथ्या यूथिका॥*

२ पञ्चजनशब्दयोस्तद्धिते द्विगुकर्मधारयः। तत्र कर्मधारयाधिकारात्॥ कर्मधारयादिति किं? पञ्चानां जनाय हितः पञ्चजनीयः। सर्वजनीयः। विश्वजनीय इत्यमोघवृत्तौ॥

३ तद्भावः परिणामः। अथवा पूर्वाकारं परिहरन् उत्तराकारमवाप्नोति केनचित्प्रकारेण तिष्ठतीति स परिणामः। *सोऽस्यास्तीति परिणामी तस्मिन्वाच्ये सति।* तस्मै इदं तदर्थम्॥ *परिणामिनीति किं? मूत्राय यवागूः।* उच्चाराय यवान्नं सम्पद्यते न तु तदर्थम्॥ अत्र पादस्य परिसमाप्तत्वाच्छप्रत्ययो निवृत्तः॥

४ सुप इति किं? गच्छभास्ते इव मन्दत्वात् वीप्सितदेशस्यासम्प्राप्तिः। अधीयानो नृत्यति अङ्गहारप्रायत्वात्॥

मुनिरिव मुनिवद्वर्तते । देवमिव देववत्पश्यति गुरुम् । साधुनेव साधुवदाचर्यते इत्यादि ॥

**८७० भावे त्वतल्** ।३।३।५। षष्ठ्यन्ताद्भावे स्वरूपे त्वतलौ भवतः ॥ अभिधानप्रत्ययहेतुः पदार्थधर्मो भावः । ल इत् । स्त्रीलिङ्गार्थः । गोर्भावः गोत्वं गोता । शुक्लस्य भावः शुक्लत्वं शुक्लता । एवं पाचकत्वं पाचकता । देवदत्तत्वं देवदत्तता इत्यादि ॥

**८७१ पृथ्वादेर्वेमन्** ।३।३।८। पृथ्वादेर्भावे इमन्वा भवति ॥ पक्षे त्वतलौ । प्राप्तश्च भवति ॥

**८७२ रः पृथुमृदुकृशभृशदृढपरिवृढस्योः** ।२।३।५३। पृथ्वादेः ऋतो रो भवति णीष्ठेयस्सु इमनि च परतः ॥

**८७३ अन्त्याजादेः** ।२।३।५७। तृप्रत्ययान्तस्यान्त्याजादेश्च लुग् भवति णीष्ठेयस्सु इमनि च परतः । पृथोर्भावः प्रथिमा पृथुत्वं पृथुता पार्थवं म्रदिमा मृदुत्वं मृदुता मार्दवं ॥

**८७४ प्रियस्थिरस्फिरोरुगुरुबहुलतृप्रदीर्घवृन्दारकस्येम्नि च प्रास्थास्फावर्गबंहत्रप्द्राघवृन्दम्** ।२।३।५२। प्रियादेर्यथासङ्ख्यं प्रादिर्भवति णीष्ठेयस्सु इमनि च परतः ॥ इति बहुलस्य भावो बंहिमा बहुलत्वं बहुलता बाहुल्यं । प्रियस्य भावः प्रेमा प्रियत्वं प्रियता । उरोर्भावः उरुत्वम् उरुता औरवं वरिमा । गुरोर्भावः गुरुत्वं गुरुता गौरवं गरिमा। दीर्घस्य भावः दीर्घत्वं दीर्घता दैर्घ्यं द्राघिमा इत्यादि ॥

**८७५ स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्रस्य ल्वादेरङ्क्** ।२।३।५६। स्थूलादेर्णीष्ठेयस्सु इमनि च परतो ल्वादेर्लुग्भवति इक एङ् च ॥ स्थविमा दविमा यविमा । ह्रस्वस्य भावो ह्रसिमा ह्रस्वत्व ह्रस्वता । एवं क्षिप्र-

---

१ यस्मादभिधानप्रत्ययौ भवतः स भावः। शब्दप्रतीतिप्रवृत्तिनिमित्तं पदार्थधर्म इत्यर्थः। हस्तित्वं रजकत्वं कृष्णसर्पत्वम्। समासकृत्तद्धितेष्वपि रूढिशब्देषु जात्याभिधानमेव। यदृच्छाशब्देषु शब्दस्वरूपं सञ्ज्ञासञ्ज्ञिसम्बन्धो वा॥ स्वभावतस्त्वान्तं नपुसके, तलन्तं स्त्रियां वेदितव्यम्॥

स्य भावः क्षेपिमा क्षिप्रत्वं क्षिप्रता । क्षुद्रस्य भावः क्षोदिमा क्षुद्रत्वं क्षुद्रता ॥

८७६ **वर्णदृढादिभ्यष्ष्यण् च** ।३।३।९। वर्णवाचिनो दृढादिभ्यश्च भावे इमन् ष्यण् च वा भवतः ॥ टणावितौ । शुक्लस्य भावः शुक्लिमा शौक्ल्यं शुक्लत्वं शुक्लता । एवं कृष्णिमा कार्ष्ण्यं कृष्णत्वं कृष्णता शितिमा शैत्यं शितिता शितित्वं । दृढस्य भावो द्रढिमा दार्ढ्यं दृढत्व दृढता । एवं परिव्रढिमा पारिवृढ्यं परिवृढत्वं परिवृढता । कृशस्य भावः क्रशिमा कार्श्यं कृशत्वं कृशता । भृशस्य भावो भ्रशिमा भार्श्यं भृशत्वं भृशता । स्थिरस्य भावः स्थेमा स्थैर्यं स्थिरत्वं स्थिरता इत्यादि ॥

८७७ **पतिराजान्तगुणाङ्गराजादिभ्यः कृत्ये च** ।३।३।१०। पत्यन्ताद्राजान्ताद्गुणाङ्गात् राजादिभ्यश्च भावे कृत्ये च ष्यण् भवति ॥ अधिपतेर्भावः कृत्यं वा आधिपत्यम् । एवं नारपत्यं भौपत्यं इत्यादि । अधिराजस्य भावः कृत्यं वा आधिराज्यम् । एवं यौवराज्यमित्यादि । मूढस्य भावः कृत्यं वा मौढ्यम् । एवं जाड्यं पाण्डित्यमित्यादि । राज्ञो भावः कृत्यं वा राज्यम् । अव्य इति निषेधादनो लुग्भवति । एवं ब्राह्मण्यं वैदुष्यं इत्यादि । वाधिकारात्त्वतलौ च । अधिराजत्वम् अधिराजतेत्यादि । टिद्विधानात् स्त्रियामपि । औचिती । सामग्री । चातुरी । वैदग्धी इत्यादि ॥

८७८ **सहायाद्वा** ।३।३।११। सहायाद्भावे कृत्ये च ष्यण् वा भवति ॥ सहायस्य भावः कृत्यं वा साहाय्यं साहायकं सहायत्वं सहायता ॥

८७९ **वयः प्राणिजातेरञ्** ।३।३।१२। वयोवाचिनः प्राणिजातिवाचिनश्च भावे कृत्ये चाञ् भवति ॥ कुमारस्य भावः कृत्यं वा कौमारम् ॥

---

१ गुणोऽङ्कः निमित्तं येषां प्रवृत्तेस्ते गुणाङ्काः गुणाद्वारेण गुणिनि वर्तमानाः शब्दा इत्यर्थः । कृत्ये कर्तव्ये कर्मणि क्रियायां । चकारो भावे कृत्ये चेति समुच्चयार्थः । आधिराज्यमित्यत्र राजन्सखे इत्यट् । 'येऽनोऽव्ये । ष्यण्वर्जिते यप्रत्यये अनो लुक् न भवतीति' निषेधादत्र सब्रह्मचारीत्यादीना अन्त्यादिलुक् न भवतीति वेदितव्यम् । राज्यमित्यत्राप्येवमेव ज्ञेयम् ॥ उचितस्य भावः कृत्यं वा औचित्यं औचित्यस्येयमौचिती । टिड्ढाणिति ङी । लुगत इत्यतो लुक् । मत्स्येति यलुक् । चतुरस्य भावः कृत्यं वा चातुर्यं चातुर्यस्येयं चातुरी ॥

अश्वस्य भावः कृत्यं वा आश्वम् इत्यादि ॥

८८० **युवादिहायनान्तादण्** ।३।३।१३। युवादेर्हायनान्ताच्च भावे कृत्ये चाण् ॥ यूनो भावः कृत्यं वा यौवनम् अणीत्यलुक् । एवं चापलमित्यादि । द्विहायनस्य भावः कृत्यं वा द्वैहायनम् ॥

८८१ **लघ्वादेरिकः** ।३।३।१४। लघ्वक्षरादेरिगन्ताद्भावे कृत्ये चाण् भवति ॥ शुचेर्भावः कृत्यं वा शौचम् । एवं यौवतं लाघवं पाटवं मार्दवमित्यादि । वाऽधिकारात्त्वादि च । शुचित्वं शुचिता ॥

८८२ **हृदयपुरुषादसमासे** ।३।३।१५। हृदयपुरुषाभ्यां भावे कृत्ये चाण् भवति न समासे ॥

८८३ **हृदयस्य हृद्याण्लासे** ।२।२।१२७। हृदयस्य हृद्भवति याण्लासेषु परतः ॥ हृदयस्य भावः कृत्यं वा हार्दम् । एवं पौरुषम् । असमास इति किं? । सहृदयत्वं सत्पुरुषत्वं ॥

८८४ **सखिवणिग्दूताद्यः** ।३।३।१६। सख्यादेर्भावे कृत्ये च यो भवति ॥ सख्युः भावः कृत्यं वा सख्यं । वणिज्या । दूत्यं । त्वतलौ च । सखित्वमित्यादि ॥

८८५ **स्तेयार्हन्त्यश्रौत्रम्** ।३।३।१७। एते भावे कृत्ये च निपात्यन्ते ॥ स्तेनस्य भावः कृत्यं वा स्तेयम् । अर्हतः आर्हन्त्यम् आर्हन्ती । श्रोत्रियस्य भावः कृत्यं वा श्रौत्रं । स्तेनत्वमित्यादि ॥

---

१ युवन् स्थविर यजमान कुतक श्रमण कुस्त्री दुःस्त्री सुस्त्री सहृदय दुर्हृदय सुहृद् सुभ्रातृ दुर्भ्रातृ परिव्राजक सब्रह्मचारिन् अनुशंस पचल कुशल निपुण पिशुन कुतूहल क्षेत्रज्ञ उपातृ उन्नेतृ प्रशास्तृ प्रतिहर्तृ होतृ पोतृ भ्रातृ भर्तृ रथगणक पत्तिगणक सुष्टु दुष्टु अध्वर्यु वृत् इति युवादिराकृतिगणः ॥

२ लघुरादिः समीपभूतो यस्येकस्तदन्तात् । तैतवमित्यत्र यद्यपि तित्रु इत्याद्यवहितं लघ्वादि सम्भवति तथापि नैकमुदाहरणं लक्षणारम्भे प्रयोजयति इति शुच्यादिभ्योऽपि भवात ॥ लघ्वादिगिति किं? पाण्डुत्वं । इक इति किं? घटत्वं । केचित् लघ्वादेरिति प्रकृतेर्विशेषणमिच्छन्ति नेकः– ( काशांनवम् ) ते सामन्तं नेच्छन्ति इत्यमोघवृत्तौ ॥

**८८६ कपिज्ञात्योर्ढक्** ।३।३।१८। कपिज्ञातिभ्यां भावे कृत्ये च ढक् भवति ॥ कपेर्भावः कृत्यं वा कापेयम् । एवं ज्ञातेयं । कपित्वमित्यादि ॥

**८८७ योपान्त्याद्गुरूपोत्तमाद्वुञ्** ।३।३।१९। अन्त्यस्य समीपमुपान्त्यम् । उत्तमस्तृतीयादिवर्णस्तदनन्तर उपोत्तमः । गुरुरुपोत्तमो यस्य तस्माद्यकारोपान्त्याद्भावे कृत्ये च वुञ् भवति ॥ रमणीयस्य भावः कृत्यं वा रामणीयकं पानीयकम् आचार्यकम् औपाध्यायकमित्यादि ॥

**८८८ शाकटशाकिनौ क्षेत्रे** ।३।३।२४। षष्ठ्यन्तात् क्षेत्रे शाकटशाकिनौ भवतः ॥ इक्षूणां क्षेत्रम् इक्षुशाकटम् इक्षुशाकिनम् । एवं पुष्पशाकटमित्यादि ॥

**८८९ धान्येभ्यः खञ्** ।३।३।२५। धान्यवाचिनः क्षेत्रे खञ् भवति ॥ मुद्गानां क्षेत्रं मौद्गीनम् । एवं नैवारीणं तृणधान्यक्षेत्रं । कौलत्थीनमित्यादि ॥

**८९० व्रीहिशालेर्ढक्** ।३।३।२६। व्रीहिशालिभ्यां क्षेत्रे ढक् भवति ॥ व्रीहीणां क्षेत्रं व्रैहेयम् । एवं शालेयमित्यादि ॥

**८९१ यवयवकषष्टिकाद्यः** ।३।३।२७। यवादिभ्यः क्षेत्रे यो भवति ॥ यवानां क्षेत्रं यव्यम् । एवं यवक्यं षष्टिक्यं ॥

**८९२ वाऽणुमाषात्** ।३।३।२८। अणुमाषाभ्यां क्षेत्रे यो वा भवति ॥ पक्षे खञ् । अणूनां क्षेत्रम् अणव्यम् । आणवीनम् । एवं माष्यं माषीणं ॥

**८९३ भङ्गोमातिलात्** ।३।३।२९। भङ्गादिभ्यः क्षेत्रे यो वा भवति ॥ भङ्गानां क्षेत्रं भङ्ग्यं भाङ्गीनम् । एवम् उम्यम् औमीनं । तिल्यं तैलीनं ॥

**८९४ कुलाज्जल्पे** ।३।३।३२। कुलात् खञ् भवति जल्पेऽर्थे ॥ कुलस्य जल्पः कौलीनः अपवाद इत्यर्थः ॥

---

१ गुरुग्रहणादनेकहल्व्यवधानेऽपि भवति । गुरुग्रहणं हि दीर्घसंयोगपरार्थम् । अन्यथा दीर्घोत्तमादित्युच्येत । गुरूपोत्तमादिति किं? क्षत्रियत्वं कायत्वम् ॥

२ फलपाकाभ्यां शोषणमणति गच्छतीत्यणुः । व्रीहिभेदस्त्वणुः पुमान् ॥

८९५ **तुल्ये कस्संज्ञाप्रतिकृत्योः** ।३।३।३३। षष्ठ्यन्तात्तुल्येऽर्थे को भवति संज्ञायां प्रतिकृतौ च विषये ॥ अश्वस्य तुल्यः अश्वकः कस्याचित्संज्ञेयम् । अश्वस्य तुल्यम् अश्वकं रूपम् । अश्विका प्रतिमा । एवं हस्तिकं देवकमित्यादि ॥

८९६ **ङ्यापुंसोऽनित्क्याङ्यसुपः** ।१।३।८६। अपुल्लिङ्गाद्विहितस्याङः आङ्परे अनित्प्रत्ययावयवे के परे इच्च ह्रस्वश्च वा भवतः न सुपः परस्य ॥ खट्वया तुल्या खट्विका खट्वाका इत्यादि ॥

८९७ **शिलाया ढञ्च** ।३।३।३८। शिलाशब्दात्तुल्ये ढञ् ढश्च भवतः ॥ च इत् शिलायास्तुल्यं शैलेयं दधि । शिलेयं दधि ॥

८९८ **कुशाग्राच्छः** ।३।३।४१। कुशाग्रशब्दात्तुल्ये छो भवति ॥ कुशाग्रेण तुल्या कुशाग्रीया मतिः ॥

८९९ **काकतालीयादयः** ।३।३।४२। काकतालीयादयस्तुल्ये साधवो वेदितव्याः ॥ काकतालेन तुल्यं काकतालीयम् । एवमन्धकवर्तकीयं घुणाक्षरीयम् अजाकृपाणीयम् इत्यादि ॥

९०० **कर्णादिपक्षाज्जाहति मूले** ।३।३।४८। कर्णादेर्मूले जाहो भवति पक्षात्तिः ॥ कर्णस्य मूलं कर्णजाहं । पक्षस्य मूलं पक्षतिः ॥

९०१ **शीतोष्णतृप्रादसह आलुः** ।३।३।४९। शीतादेरसहे आलुर्भवति ॥ शीतस्यासहः शीतालुः । एवमुष्णालुः तृप्रालुः ॥

---

१ अश्वक इति अश्वादिसदृशस्य सञ्ज्ञा । तुल्य इति किं? इन्द्रः देवः एवं नामा नात्र कश्चित् । सञ्ज्ञाप्रतिकृत्योरिति किं? गोस्तुल्यो गवयः । प्रतिकृतिः काष्ठादिमयं प्रतिच्छन्दकम् । सञ्ज्ञाग्रहणमप्रकृत्यर्थम् ॥ तुल्यमात्रे प्रत्ययः शिव इव शिवक इत्येके ॥

२ काकश्च तालश्च काकतालमिति लक्षणयाऽपि ततः काकस्य निपतता तालेनातर्कितोपनतश्चिन्त्रीयमाणः संयोग उच्यते ॥ अन्धकश्च वर्तका च अन्धकवर्तकमिति अन्धस्य वर्तकया उपर्यतर्कितपादन्यास उच्यते । अजायाः पादेनावकिरन्त्याः कृपाणस्य दर्शनं अजाकृपाणं तत्तुल्य एवं विधविन्चित्रीकरणविषयाः काकतालीयादयः । निपातनं रूढ्यर्थम् ॥

**९०२ यथामुखसम्मुखाद्दर्शने खः** ।३।३।५२। यथामुखसम्मुखाभ्यां दर्शने खो भवति ॥ यथामुखं दर्शनं । यथामुखीनम् । एवं सम्मुखीनं ॥

**९०३ सर्वादेः पथाङ्गकर्मपत्रपात्रशरावाद्व्यापिनि** ।३।३।५३। सर्वपूर्वात्पथादेर्व्यापिनि खो भवति ॥ सर्वपथस्य व्यापी सर्वपथीनश्चरः । एवं सर्वाङ्गीणो ज्वरः । सर्वकर्मीणः । सर्वपत्रीणः । सर्वपात्रीणः सर्वशरावीणः ॥

**९०४ आप्रपदम्** ।३।३।५४। आप्रपदाद्व्यापिनि खो भवति ॥ आप्रपदं व्यापि आप्रपदीनं वस्त्रम् ॥

**९०५ अध्वानं यखौ** ।३।३।५७। अध्वनोऽलंगामिनि यखौ भवतः ॥ अध्वानमलं गामी अध्वन्यः ॥

**९०६ वाशिजिह्वा(ह्मा)श्यध्वाथर्वयूनः फिढखठाके** ।२।३।६०। वाशिनः फिञ्यन्त्याजादेर्लुग् न भवति जिह्वाशिनो ढणि अध्वनः खे अथर्वणष्ठाणि यूनोऽके ॥ इत्यलुक् । अध्वनीनः ॥

**९०७ छश्चाभ्यमित्रम्** ।३।३।५८। अभ्यमित्रादलं गामिनि यखौ छश्च भवन्ति ॥ अभ्यमित्रमलं गामी अभ्यमित्रीयः अभ्यमित्र्यः अभ्यमित्रीणः ॥

**९०८ परोवरीणपरम्परीणपुत्रपौत्रीणसर्वान्नीनायानयीनानुपदीनागवीनाश्वीनाप्रातीनसमांसमीनसास-**

---

१ दृश्यतेऽस्मिन्निति दर्शनमादर्शादि प्रतिबिम्बाश्रय उच्यते यथामुखमिति । अत एव निपातनात् 'यथाऽथाः ४५९ ।' इति प्रनिषेधेऽपि समासः । षष्ठ्या अम्भावः पूर्वपदार्थप्रधानत्वेऽपि 'अव्ययीभावस्य ।२०८। अमपञ्चम्याः ।२१०। तृतीयाया वा ।२११। सप्तम्याः ।२१२।' इति लिंगादव्ययीभावात्सर्वा विभक्तयो भवन्ति ॥ यथा मुखं तथाऽस्मिन्दृश्यते प्रतिबिम्बमिति यथामुखीनमादर्शादिकमुच्यते ॥ समं मुखं सम्मुखं समं मुखमस्यानेनेति सम्मुखं प्रतिबिम्बमुच्यते । तस्य दर्शनं सम्मुखीनमुच्यते ॥

२ सर्वस्यांगस्य सर्वेषामंगानां वा व्यापीति पटः । तस्य प्रयोगः । मल्लिकामालभारिण्यः सर्वांगीणार्द्रचन्दनाः ॥ क्षामवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥ १ ॥ इति वाग्भट्टालंकारे ॥

**पदीनम्** ।३।३।५९। एते खान्तास्साधवो वेदितव्याः ॥ परांश्चावरांश्चानुभवन् परोवरीणः । परम्परामनुभवन् परम्परीणः । पुत्रपौत्राननुभवन् पुत्रपौत्रीणः । सर्वमन्नं भुञ्जानः सर्वान्नीनः । अयः शारिद्यूते प्रदक्षिणं गमनमनयः प्रसव्यम् अयानयं नीयते अयानयीनः । अनुपदं बद्धा अनुपदीना उपानत् । आ गोप्रतिदानात्कारी आगवीनः कर्मकरः । अद्य श्वो वा भविष्यति अद्यश्वीनम् । अद्यप्रातर्वा भविष्यति अद्यप्रातीनं । समां समां प्रसूते समांसमीना गौः । सप्तभिः पदैरवाप्यं साप्तपदीनं सख्यं ॥

**९०९ तदस्य प्रमाणान्मात्रट्** ।३।३।६०। प्रथमान्तात्तदस्य प्रमाणमित्यस्मिन्नर्थे मात्रट् भवति ॥ ऊरुः प्रमाणमस्य ऊरुमात्रं जलं । स्तनमात्री परिखा । दण्डमात्रं क्षेत्रम् इत्यादि ॥

**९१० वोर्ध्वे[1] दघ्नड्द्वयसट्** ।३।३।६२। ऊर्ध्वप्रमाणवाचिनः तदस्य प्रमाणमित्यस्मिन्नर्थे दघ्नड्द्वयसटौ वा भवतः ॥ जानु प्रमाणमस्य जानुदघ्नं जानुद्वयसं जानुमात्रं जलं । तालदघ्नी तालद्वयसी तालमात्री परिखा इत्यादि ॥

**९११ द्विगोः संशये च** ।३।३।६४। मानाद्विगोर्विहितस्य मात्रडादेः प्रत्ययस्य लुग् भवति संशये चासंशये च ॥ द्वौ वितस्ती प्रमाणमस्य द्विवितस्तिः । एवं द्विशूर्पं धान्यमित्यादि ॥

**९१२ डिन्** ।३।३।६७। शन्शदन्ताद्विंशतिशब्दाच्च तदस्य प्रमाणमित्यस्मिन्नर्थे डिन् भवति । ड इत् । एकादश प्रमाणमेषां एकादशिनः श्रावकानिलयाः । एवं द्वात्रिंशिनो व्यन्तरेन्द्राः । चत्वारिंशिनो भवनेन्द्राः । चतुर्विंशिनस्तीर्थकराः ॥

---

१ ऊर्ध्वमिति किं? रज्जुमात्री भूमिः । पुनर्वाग्रहणादुत्तरत्र विकल्पो नास्ति ॥ किंयत्प्रमाणमुदकं जानुदघ्नं नराधिप ॥ तथापीयमवस्था ते न हि सर्वे भवादृशाः ॥ १ ॥ मात्रदघ्नद्वयसाः प्रातिपदिकानि सन्ति । तत्र प्रत्ययत्वविधानमनुबन्धासञ्जनार्थम् । तेन स्त्रियां विशेषः ॥ मानं चतुर्विधं प्रमाणमानं, परिमाणमानं, उन्मानमानं, सङ्ख्यामानं चेति ॥ ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः ॥ आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः ॥ १ ॥

९१३ **घत्विदंकिमः** ।३।३।६८। इदम्किम्शब्दाभ्यां तदस्य मानमित्यस्मिन्नर्थे घतुर्भवति ॥ उदित् उगित्कार्यार्थः घस्य इय् ॥

९१४ **किमिदमः कीश्** ।२।२।१०८। किमिदमोः यथासङ्ख्यं घतौ दृग्दृशदृक्षेषु परत कीशौ भवतः ॥ श इत्। एरिति लुक्। ततः स्वादयः। शेषं प्राग्वत्। इदं मानमस्य इयान् प्रासादः। इयद्धान्यम्। इयती भूमिः। किं मानमस्य कियान् पटः। कियज्जलं। कियती रज्जुः ॥

९१५ **एतदो वो घः** ।३।३।६९। एतच्छब्दात्तदस्य मानमित्यस्मिन्नर्थे घतुर्भवति घस्य च वः ॥

९१६ **आ घदृग्दृशदृक्षे** ।२।२।१०७। घतौ दृगादिषु च परतः पूर्वस्याद् भवति ॥ दीर्घः। एतन्मानयस्य एतावान् पटः। एतावज्जलमित्यादि ॥

९१७ **यत्तदः** ।३।३।७०। यत्तद्भ्यां मानमित्यत्रार्थे घतुर्भवति घस्य च वः ॥ शेषं प्राग्वत्। यन्मानमस्य यावज्जलं। तन्मानमस्य तावदायुः ॥

९१८ **किमश्च सङ्ख्याया डतिश्च** ।३।३।७१। किमो यत्तद्भ्यां च सङ्ख्यामानार्थे डतिर्भवति घतुश्च ॥ ड इत् अन्त्याजादिलुगर्थः। का सङ्ख्या मानमेषां कति। डतिष्णामिति जश्शसोर्लुक्। एवं यति तति। घतौ कियन्तः। इत्यादि ॥

९१९ **अवयवात्तयट्** ।३।३।७२। अवयवार्थात्सङ्ख्यावाचिनः अस्येत्यर्थे तयड् भवति ॥ ट इत् स्त्रियां ङ्यर्थः। द्वाववयवावस्य द्वितयो धर्मः। एवं त्रितयो मोक्षमार्गः। चतुष्टयी आराधना। पञ्चतयं चारित्रं। षट्तयं द्रव्यं। सप्ततयी ऋद्धिः। अष्टतयं कर्म। नवतयः पदार्थः इत्यादि ॥

९२० **द्वित्रिभ्यां लुग्वा** ।३।३।७३। द्वित्रिभ्यां परस्य तयटः तकारस्य लुग्वा भवति ॥ लुच्येरिति लुक्। द्वयः द्वितयः। त्रयः त्रितयः ॥

९२१ **अधिकमस्मिन् शतसहस्रे तत्सङ्ख्यं शतिशद्दशान्ताड्ड्** ।३।३।७५। तत्सङ्ख्यात् शतिशद्दशान्तात् सङ्ख्यावाचिनः

तदस्मिन्नधिकमित्यस्मिन्नर्थे अड्भवति शते सहस्रे च विषये ॥ विंशतिरधिका अस्मिन्निति विंशं शतं सहस्रं वा । एवं त्रिंशं चत्वारिंशं पञ्चाशं एकादशं द्वादशमित्यादि ॥

९२२ **सङ्ख्यापूरणे डट्** ।३।३।७६। सङ्ख्यावाचिनः सङ्ख्यापूरणे डट् भवति ॥ डटावितौ । एकादशनां पूरणः एकादशो जिनः श्रेयान् । एकादशी तिथिः । द्वादशः । विंशः । त्रिंश इत्यादि ॥

९२३ **घतोरिथट्** ।३।३।७७। घत्वन्तात्पूरणे इथड् भवति ॥ ट इत् । इयतां पूरणः इयतिथः इयतिथी । एवं कियतिथः इत्यादि ॥

९२४ **षट्कतिकतिपयात् प्थट्** ।३।३।७९। षडादिभ्यःपूरणे प्थट् भवति ॥ पटावितौ । पकारः पुंवद्भावार्थः । षण्णां पूरणः षष्ठः । षष्ठीति निपातनाज्जश्त्वाभावः ष्टुत्वं च । एवं कतिथः कतिपयथः ॥

९२५ **चतुरः** ।३।३।८०। चतुरः पूरणे प्थड् भवति । चतुर्णां पूरणः चतुर्थः ॥

९२६ **पिति तद्धिते** ।२।२।४२। पिति तद्धिते परे पूर्वे पुंवद्भवति ॥ चतसृणां पूरणी चतुर्थी । चतुर्थीप्रकृतीति निपातनाद्विसर्जनीयाद्यपवादः ॥

९२७ **यछौ चः श्लुक् च** ।३।३।८१। चतुरः पूरणे यछौ भवतः चस्य श्लुक् ॥ चतुर्णां पूरणः तुर्यः । तुरीयो वा ॥

९२८ **विंशत्यादेस्तमड्वा** ।३।३।८२। विंशत्यादेः पूरणे तमड् वा भवति ॥ विंशतेः पूरणः विंशतितमः विंशतितमी । पक्षे डट् विंशः । एवं त्रिंशत्तमः त्रिंशः इत्यादि ॥

९२९ **शतादिमासार्धमाससंवत्सरात्** ।३।३।८३। शतादिभ्यः सङ्ख्यावाचिभ्यः मासादिभ्यश्च पूरणे तमड् भवति ॥ शतस्य पूरणः शततमः । एवं सहस्रतमः लक्षतमः मासतमः अर्धमासतमः संवत्सरतमः ॥

९३० **षष्ठ्यादेरनादेः** ।३।३।८४। अपूर्वपदेभ्यः षष्ठ्यादिभ्यः

पूरणे तमड् भवति ॥ षष्टेः पूरणः षष्टितमः । एवं सप्ततितमः अशीतितमः नवतितमः । अनादेरिति किं? । एकषष्टितमः एकषष्टः इत्यादि ॥

**९३१ नो मट्** ।३।३।८५। नान्तादनादेस्सङ्ख्यावाचिनः पूरणे मड् भवति ॥ ट इत् । पञ्चानां पूरणः पञ्चमः । वलि पदत्वान्नलुक् । एवं सप्तमः अष्टमः नवमः दशमः । स्त्रियां पञ्चमीत्यादि ॥

**९३२ द्वित्रेस्तीयद्रेश्च ऋश्** ।३।३।८६। द्वित्रिभ्यां पूरणे तीयद् भवति त्रिशब्दस्य रेश्च ऋश् भवति ॥ शतावितौ । तकारो डत्प्रत्याहारार्थः । द्वयोः पूरणो द्वितीयः तृतीयः ॥

**९३३ इष्टादेः** ।३।३।८८। प्रथमान्तादिष्टादेरनेन पूर्वमित्यस्मिन्नर्थे इन् भवति ॥ इष्टमनेन पूर्वं इष्टी जिनेन्द्रे । एवमधीती प्रवचने इत्यादि ॥

**९३४ श्रोत्रियो वा छन्दोऽध्यायी** ।३।३।९१। छन्दोऽध्यायी श्रोत्रिय इति वा निपात्यते ॥ श्रोत्रियः छन्दोऽध्यायी । पक्षे अण् छान्दसः॥

**९३५ इन्द्रियम्** ।३।३।९२। इन्द्रस्य लिङ्गमिन्द्रियमिति घान्तं साधु वेदितव्यं ॥

**९३६ तेन वित्ते चुञ्चुचणौ** ।३।३।९३। तृतीयान्तात्तेन वित्ते प्रख्याते चुञ्चुचणौ भवतः ॥ विद्यया वित्तः विद्याचुञ्चुः विद्याचणः ॥

**९३७ स्वाङ्गेषु सक्ते** ।३।३।९९। स्वाङ्गवाचिनः तत्र सक्ते को भवति ॥ केशेषु सक्तः केशकः । नखक इत्यादि ॥

**९३८ उदरे ठणाद्यूने** ।३।३।१००। उदरशब्दात्तत्र सक्ते ठण् भवति आद्यूने वाच्ये ॥ उदरे सक्तः औदरिकः आद्यून इत्यर्थः ॥

---

१ शकारः सर्वादेशार्थः ॥ तृप्तार्थान्ययनिर्धार्यडच्छत्रानश्मतीति (४९७) षष्ठीसमासनिषेधावसरे डत्प्रत्याहारः प्राप्तः । सः 'संख्यापुरणे डट् ।९३२।' इत्यारभ्य 'द्वित्रेस्तीयद्रेश्च ऋश् ।९३२।' इति सूत्रपर्यन्तमवगन्तव्यः ॥

२ इन्दति परमैश्वर्यमनुभवतीति कदाचित्कर्मोदयवशादैश्वर्यरहितोऽपि तच्छक्तियोगादिन्द्रः आत्मा । अन्यात्मादित्यशचीपतियोग्येषु इन्द्रः । तस्य लिंगं चिन्हविशेषः । रूढिशब्दोऽयं चक्षुरादीनां सञ्ज्ञा तत्र यथायोगमर्थकल्पना । तस्य लिंगं तेन सृष्टं जुष्टं दत्तं आवरणक्षयोपशमसाधनं वेति च इन्द्रियम् ॥

**९३९ कर्मठो घटः** ।३।३।१०१। घटश्चेष्टमानः कर्मठ इति निपात्यते ॥

**९४० कमितर्यन्वभ्यभीभ्यः** ।३।३।१०५। अनु अभि अभी- इत्येतेभ्यः कमितरि को भवति ॥ अनुकः । अभिकः । अभीकः ॥

**९४१ मुख्यः** ।३।३।१११। प्रथमान्तात् सोऽस्य मुख्य इत्यस्मिन्नर्थे को भवति ॥ रत्नत्रयं मुख्यमस्य रत्नत्रयकः । प्रवचनकः इत्यादि ॥

**९४२ उन्मनस्युदुत्सोः** ।३।३।११३। उद् उत्सु इत्याभ्याम् उन्मनसि को भवति ॥ उत्कः । उत्सुकः । उन्मनाः ॥

**९४३ सञ्जातं तारकादिभ्य इतः** ।३।३।११४। प्रथमान्तेभ्यः तारकादिभ्यः अस्य सञ्जातमित्यस्मिन्नर्थे इतो भवति ॥ तारकाः सञ्जाता- अस्य तारकितं नभः । एवं पुष्पितः कोरकितः पुलकितः पल्लवितः कुट्मलितः मुकुलितः अङ्कुरितः फलित इत्यादि ॥

**९४४ अस्त्यास्मिन्वेति मतुः** ।३।३।११६। प्रथमान्तात्तदस्या- स्मिन्वास्तीत्यर्थे मतुर्भवति ॥ उदित् । गावोऽस्य सन्ति गोमान् गोमती । एवं स्वस्तिमान् मतिमान् तरुमान् इत्यादि ॥ धनमस्यास्तीति विगृह्य मतौ ॥

---

१ इतिशब्दस्य प्रयोजनं— भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ॥ संसर्गेऽस्ति- विवक्षायां प्रायो मत्वादयो मताः ॥ १ ॥ प्राग्जितात्कृतलब्धादौ सरूपप्रत्ययस्ततः । मत्वर्थश्च ततो वृत्तौ समानायां च नेष्यते ॥ २ ॥ भूम्नि बहुत्वे गावोऽस्य सन्ति गोमान् । निन्दायां ककुदावर्ती । प्रशंसायां रूपवान् । नित्ययोगे क्षीरिणो वृक्षाः । अतिशायने उदरिणी कन्या । संसर्गे दण्डी छत्री । प्रायिकमेतत्सत्तामात्रेऽपि दृश्यते । व्याघ्रवान्पर्वतः । स्पर्शरसगन्धवन्तः पुद्गलाः । स्पर्शवान्वायुः ॥ प्राग्जित इत्यस्य मत्वर्थी यावन्मत्वर्थीयः । सरूपो न भवति । गावो येषां सन्तीति गोमन्तः गोमन्तोऽत्र सन्तीति पुनर्मतुर्न भवति । विरूपस्तु भवत्येव । दण्डिमती शाला । विरूपोऽपि समानायां वृत्तौ न भवति दण्ड एषामस्तीति दण्डिनः दण्डिनोऽस्य सन्तीति मतुर्न भवति ॥ असञ्ज्ञाभूताच्च कर्मधारयान्न भवति । वीरपुरुषा अस्मिन् ग्रामे सन्तीति । तत्र बहुव्रीहिरेव भवति वीरपुरुषको ग्राम इति ॥ सञ्ज्ञायास्तु भवति कृष्णसर्पवान् वल्मीकः । गुणे गुणिनि च ये गुणशब्दास्तेभ्यो न भवति शुक्लो वर्णोऽस्यास्तीति । तिक्तोरसो स्यास्तीति १ ष्टे तु गुणमात्रे तेभ्यो भवत्येव रूपवान् रसवान् ॥

**९४५ मान्तोपान्तजयो मतोर्मो वः** ।१।२।९६। मान्तान्मोपान्तादवर्णान्तादवर्णोपान्ताज्जयन्ताच्च परस्य मतोर्मस्य वो भवति ॥ धनवान् ॥

**९४६ स्तं मत्वर्थे** ।१।१।६६। सान्तं तान्तं च मत्वर्थीये परे पदं न भवति ॥ पदत्वाभावात् न रिस्वादि । एवं यशस्वान् मरुत्वान् इदंवान् चमूवान् इत्यादि ॥ शोभनो राजा अस्मिन्नस्तीति विगृह्य ॥

**९४७ राजन्वान् सुराज्ञि** ।१।२।१००। सुराज्ञि देशादौ राजन्वानिति निपात्यते ॥ राजन्वान् देशः। राजन्वती प्रजा। अन्यत्र राजवान् ॥

**९४८ नोर्म्यादिभ्यः** ।१।२।१०१। ऊर्म्यादिभ्यः परस्य मतोर्मस्य वो न भवति ॥ ऊर्मिमान् । गरुत्मान् इत्यादि ॥

**९४९ प्राण्यङ्गादातो लः** ।३।३।११९। आदन्तात्प्राण्यङ्गान्मत्वर्थे लो भवति ॥ चूडास्यास्तीति चूडालः । एवं जङ्घालः जिह्वालः इत्यादि । मतुश्च चूडावान् इत्यादि ॥

**९५० सिध्मादिरुक्क्षुद्रजन्तोः** ।३।३।१२०। सिध्मादिभ्यः रोगवाचिभ्यः क्षुद्रजन्तुभ्यश्च मत्वर्थे लो भवति ॥ सिध्मानि सन्त्यस्य सिध्मलः । गडुलः । मूर्छालः । विचर्चिकालः । यूकालः । मक्षिकालः । मतुश्च सिध्मवानित्यादि ॥

**९५१ प्रज्ञापर्णोदकफेनाल्लेलौ** ।३।३।१२१। प्रज्ञादिभ्यो मत्वर्थे लेलौ भवतः ॥ प्रज्ञाऽस्यास्तीति प्रज्ञालः । प्रज्ञिलः । पर्णलः । पर्णिलः । उदकलः उदकिलः । फेनलः फेनिलः । मतुश्च प्रज्ञावानित्यादि ॥

**९५२ वागालाटौ** ।३।३।१२३। वाचो मत्वर्थे आलाटौ भवतः क्षेपे मतुश्च ॥ वागस्यास्तीति वाचालः । एवं वाचाटः निस्सारं बहुभाषीत्यर्थः ॥

---

१ मश्च अश्च मौ । उप समीपं गतोऽस्य उपान्तः । अन्तश्चोपान्तश्च तथोक्तः । मौ अन्तोपान्तौ येषां तथोक्ताः । मान्तोपान्तश्च जय् च तस्मात् । एतेभ्य इति किं? वायुमान् अग्निमान् । म उत्तरार्थः ॥

९५३ **ग्मिन्[1]** ।३।३।१२४। वाचो मत्वर्थे ग्मिन् भवति ॥ वाग्मी वाग्मान् ॥

९५४ **प्रज्ञाश्रद्धार्चावृत्तेर्णः** ।३।३।१२९। प्रज्ञादेर्मत्वर्थे णो भवति ॥ ण इत् । प्रज्ञास्यास्तीति प्राज्ञः । एवं श्राद्धः आर्चः वार्त्तः । मतुश्च प्रज्ञावानित्यादि ॥

९५५ **ज्योत्स्नादिभ्योऽण्** ।३।३।१३०। ज्योत्स्नादिभ्यो मत्वर्थे अण् भवति ॥ ज्योत्स्ना अस्मिन्नास्ति ज्यौत्स्नः पक्षः । एवं तामिस्री रात्रिरित्यादि ॥

९५६ **सिकताशर्करात्** ।३।३।१३१। सिकताशर्कराभ्यां मत्वर्थे अण् भवति ॥ सिकताः सन्त्यस्मिन् सैकतम् । एवं शार्करं । मतुश्च सिकतावत् ॥

९५७ **इलश्च देशे** ।३।३।१३२। सिकताशर्कराभ्यां मत्वर्थे इलोऽण् च भवतः देशे वाच्ये ॥ सिकताः सन्त्यस्मिन् सिकतिलः सैकतः । एवं शर्करिलः शार्करः । मतुश्च ॥

९५८ **कच्छ्वा डुरः** ।३।३।१३५। कच्छूशब्दात् मत्वर्थे डुरो भवति ॥ ड इत् । कच्छूरस्यास्तीति । कच्छुरः ॥

९५९ **दन्त उन्नतः** ।३।३।१३६। दन्तशब्दादुन्नतोपाधेर्मत्वर्थे डुरो भवति ॥ दन्ता उन्नतास्सन्त्यस्य दन्तुरः ॥

९६० **कृपाहृदयादालुः** ।३।३।१३८। कृपाहृदयाभ्यां मत्वर्थे आलुर्वा भवति ॥ कृपास्त्यस्य कृपालुः कृपावान् । हृदयालुः हृदयवान् ॥

९६१ **स्वाङ्गाद्धीनादः[2]** ।३।३।१४१। हीनोपाधिकात् स्वाङ्गान्मत्वर्थे अप्रत्ययो भवति ॥ हीना छिन्ना नासिकास्यास्तीति नासिकः । एवं कर्णः अङ्गुलः । इत्यादि ॥

---

१ गकारः ‘ प्रत्यये ।४४। ’ इति सूत्रेण प्राप्तानुनासिकनिवृत्त्यर्थः ।

२ हीनादिति किं? कर्णवान् नासिकावान् ॥

**९६२ अभ्रादिभ्यः** ।३।३।१४२। अभ्रादिभ्यः मत्वर्थे अद्भवति ॥ अभ्राण्यस्मिन् सन्तीति अभ्रं नभः । एवं अर्शसः सिध्म इत्यादि ॥

**९६३ फलबर्हाच्चेनः** ।३।३।१४४। फलबर्हाभ्यां शृङ्गाच्च मत्वर्थे इनो भवति ॥ फलिनः । बर्हिणः । शृङ्गिणः ॥

**९६४ मलादीमसश्च** ।३।३।१४५। मलान्मत्वर्थे इन ईमसश्च भवतः ॥ मलिनः मलीमसश्च ॥

**९६५ ऊर्णाहंशुभमो युस्** ।३।३।१४८। ऊर्णादिभ्यो मत्वर्थे युस् भवति ॥ स इत् । ऊर्णायुः । अहंयुः । शुभंयुः । सिति पदत्वादनुस्वारादि ॥

**९६६ तपःस्रग्मायामेधासो विन्** ।३।३।१५०। तपसादेरसन्ताच्च मत्वर्थे विन् भवति ॥ तपोऽस्यास्तीति तपस्वी । एवं स्रग्वी मायावी मेधावी यशस्वी स्रग्वानित्यादि ॥

**९६७ तमिस्रार्णवोर्जस्वलोर्जस्विन्नामयाविन्गोमिन्** ।३।३।१५१। एते मत्वर्थे निपात्यन्ते ॥ तमोऽस्या अस्तीति तमिस्रा । अर्णांसि सन्त्यस्मिन् अर्णवः । ऊर्जोऽस्यास्तीत्यूर्जस्वलः ऊर्जस्वी आमयोऽस्यास्तीति आमयावी गावोऽस्य सन्तीति गोमी ॥

**९६८ नौशिखादिभ्यां ठेनौ** ।३।३।१५२। नावादेः शिखादेश्च मत्वर्थे यथासङ्ख्यं ठेनौ भवतः ॥ नौरस्यास्तीति नाविकः । एवं कुमारिकः शिखी माली । मतुश्च नौमानित्यादि ॥

**९६९ व्रीह्याद्यतोऽनेकाचः** ।३।३।१५३। व्रीह्यादेरदन्ताच्चानेकाचो मत्वर्थे ठेनौ भवतः ॥ व्रीहयः सन्त्यस्य व्रीहिकः । व्रीही । एवं मायिकः । मायी । दण्डिकः । दण्डी । छात्रिकः । छत्री । मतुश्च । व्रीहिमानित्यादि ॥

**९७० व्रीहितुन्दादेरिलश्च** ।३।३।१५६। व्रीहिवाचिनः तुन्दादेश्च मत्वर्थे इलष्ठेनौ च भवन्ति ॥ कलमाः सन्त्यस्य कलमिलः कलमिकः कलमी । एवं तुन्दिलः तुन्दिकः तुन्दी । उदरिलः उदरिकः उदरी इत्यादि ॥

---

१ व्रीहिशब्दात्तु इलो न भवति पूर्वत्रोपादानात् ॥ भावे हि तत्रोपादानमनर्थकं स्यात् । इतरेषामप्यनेनैव सिद्धिः ॥

**९७१ गुणादिभ्यो यः** ।३।३।१५८। गुणादिभ्यो मत्वर्थे यो वा भवति ॥ गुणोऽस्यास्तीति गुण्यः गुणी । एवं हिम्यः हिमी इत्यादि ॥ मतुर्निवृत्तः ॥

**९७२ वातातिसारपिशाचात् कक्** ।३।३।१६५। वातादेर्मत्वर्थे इन् भवति कक् चैषामागमः ॥ वातोऽस्यास्तीति वातकी । एवमतिसारकी । पिशाचकी ॥

**९७३ सुखादेः** ।३।३।१६७। सुखादेर्मत्वर्थे इन्नेव भवति ॥ सुखमस्यास्तीति सुखी । एवं दुःखी इत्यादि ॥

**९७४ बाहूर्वादेर्बलात्** ।३।३।१७०। बाहूरुपूर्वाद् बलशब्दात् मत्वर्थे इन्नेव भवति ॥ बाहुबलमस्यास्तीति बाहुबली । एवं ऊरुबली ॥

**९७५ हस्तदन्तकराज्जातौ** ।३।३।१७२। हस्तादेर्मत्वर्थे इन्नेव भवति जातिनाम्नि वाच्ये ॥ हस्तोऽस्यास्तीति हस्ती । एवं दन्ती । करी गज इत्यर्थः । अन्यत्र हस्तवान् ॥

**९७६ वर्णी ब्रह्मचारी** ।३।३।१७३। ब्रह्मचारिण्यर्थे वर्णीति निपात्यते ॥ अन्यत्र वर्णवान् ॥

**९७७ प्रकारो जातीयर्** ।३।३।१७९। प्रथमान्तात् सः प्रकारोऽस्यास्तीति अर्थे जातीयर्भवति ॥ र इत् । पटुः प्रकारोऽस्यास्तीति पटुजातीयः । एवं मृदुजातीयः यज्जातीयः तज्जातीय इत्यादि ॥

**९७८ कोऽण्वादेः** ।३।३।१८०। अण्वादेः सः प्रकारोऽस्येत्यर्थे को भवति ॥ अणुः प्रकारोऽस्य अणुकः । एवं स्थूलक इत्यादि ॥

---

१ वातातिसारयोरुक्तात्पूर्वेण इन् सिद्धिः । कगर्थमुपादानम् ॥ पिशाचस्य तूभयार्थम् ॥

२ ब्रह्मण्यात्मस्वरूपे चरतीत्येवं शीलो ब्रह्मचारी । वर्णो ब्रह्मचर्यपर्यायः । वर्णो ब्रह्मचर्यमस्यास्तीति वर्णी ब्रह्मचारीत्येके ॥ वर्णशब्दो ब्राह्मणादिवर्णवचनः । तत्र ब्रह्मचारीत्यनेन शूद्रव्यवच्छेदः क्रियते । तेन त्रैवर्णिको वर्णीत्युच्यते । स हि विद्याग्रहणार्थमुपनीतो ब्रह्म चरति न शूद्र इत्येके ॥

## ॥ अतः परं स्वार्थिकाः प्रत्यया उच्यन्ते ॥

९७९ **भूतपूर्वे ष्चरट्** ।३।४।१। पूर्वं भूतो भूतपूर्वः तस्मिन् अर्थे वर्त्तमानाच्छब्दरूपात् ष्चरट् प्रत्ययो भवति ॥ पटावितौ। षकारः पुंभावार्थः टकारो ङ्यर्थः । आढ्यो भूतपूर्वः आढ्यचरः । एवं नारकचरः । देवचरः । आढ्या भूतपूर्वा । ष्चरटि पिति ताद्धिते इति विशेष्यवशात् स्त्रीलिङ्गं पुंवद्भवति । आढ्यचरी ॥

९८० **व्याश्रये तस्** ।३।४।४। नानापक्षाश्रयो व्याश्रयः तस्मिन् अर्थे वर्तमानात्तस् भवति ॥ रामतो वानरध्वजाः । रावणतो दानवाः । एवं चैत्रतो मैत्रः इत्यादि ॥

९८१ **पर्यभेः सर्वोभये** ।३।४।६। पर्यभिभ्यां यथासङ्ख्यं सर्वोभयार्थयोः तस् भवति ॥ परितः सर्वतः । अभितः उभयतः ॥

९८२ **आद्यादिभ्यः** ।३।४।७। आद्यादिभ्यो यथासम्भवं तस् भवति ॥ आदावादितः । एवमन्ततः । मध्यतः । पृष्ठेन पृष्ठतः । एवं मुखतः । पार्श्वतः । शब्दतः । अर्थतः । पठत इत्यादि ॥

९८३ **अहीयरुहोऽपाये** ।३।४।११। हीयरुहवर्जितस्य धातोरपाये विहिता या पञ्चमी तदन्तात्तस् भवति ॥ ग्रामात् ग्रामतः आगच्छति । एवं धर्मतोऽपैति । मूलतो नष्ट इत्यादि । अहीयरुह इति किं? तस्माद्धीयते । बीजाद्रोहत्यङ्कुरः । वृक्षादवरोहति ॥

---

१ सर्वोभय इति किं? परिषिञ्चति अभियाति ॥

२ ओहाक् त्यागे । रुह बीजजन्मनि ॥ स्वार्थाद्धीयते । स्वार्थादिति कर्तुरपायेऽवधिविवक्षा । हीयते इति कर्मकर्तेत्यन्ये ॥ हीयेति विकरणेन जहातिनिर्देशो जिहीते इति प्रतिषेधार्थः । तेनात्र प्रतिषेधो न भवति भूमितः उज्जिहीते ॥ अपाये इति किं? ऋते धर्मात्कुतः सुखं । ऋते पाटलीपुत्राद्दृष्टो देव इत्यमोघवृत्तौ ।

**९८४ अद्व्यादि[1]वैपुल्यात्सर्वादिकिंबहोः तस्** ।३।४।१२। अद्व्यादेः सर्वादेः किमः अवैपुल्यार्थाच्च बहोः पञ्चम्यन्तात् तस् भवति ॥ प इत् । सर्वस्मात् सर्वतः । एवं विश्वतः । उभयतः । यतः । ततः । अस्वाल्पुचौ बहुतः । अद्व्यादीति किं? द्वाभ्यां । युष्मत् अस्मत् ॥

**९८५ इतो[2]ऽतःकुतः** ।३।४।१३। एते तसन्ता निपात्यन्ते ॥ अस्मात् इतः । एतस्मात् अतः । कस्मात् कुतः ॥

**९८६ सप्तम्याः** ।३।४।१७। सप्तम्यन्तादद्व्यादेः सर्वादेः किमः अवैपुल्यार्थाच्च बहोः त्रप् भवति ॥ प इत् । सर्वस्मिन् सर्वत्र । एवं विश्वत्र । उभयत्र । यत्र । तत्र । अमुत्र । एकत्र । बहुत्र ॥

**९८७ क्कुत्रात्रेह** ।३।४।१६। एते त्रबन्ता निपात्यन्ते ॥ कस्मिन् क्क कुत्र । एतस्मिन् अस्मिन् वा अत्र इह ॥

**९८८ किंयत्तत्सर्वैकान्यात्काले दा** ।३।४।१८। काले वर्तमानात् किमादेः सप्तम्यन्ताद्दा भवति ॥ कस्मिन् काले कदा । एवं यदा । तदा । सर्वदा । एकदा । अन्यदा ॥

**९८९ सदैतर्ह्यधुनेदानींतदानींसद्यः** ।३।४।१९। एते काले निपात्यन्ते ॥ सर्वस्मिन् काले सदा । एतस्मिन् काले एतर्हि । अस्मिन् काले अधुना इदानीं । तस्मिन् काले तदानीं । समाने काले सद्यः । अस्मिन् काले अद्येति[3] । श्राद्धमद्येति निपातनात् सिद्धं ॥

---

१ द्वि युष्मत् भवत् अस्मत् किं वृत् इति द्व्यादिः । किंशब्दस्य द्व्यादौ स्वीकृतत्वात्पृथक् ग्रहणम् । किंशब्दो द्व्यादिमध्येस्थितस्तस्य निषेधो माभूदिति पुनर्ग्रहणमित्यर्थः । अत्र तस्य तसोऽभावेऽपि उत्तरात्रानुवर्तनेन कर्हीति र्हिंप्रत्ययान्तः सन् सेत्स्यति ॥ त्वत्तो मत्तो भवत्त इति लोके प्रसिध्दप्रयोगस्तु 'अहीयरुहो' इति भवति ॥ बहोरिति किं? वृक्षात्प्लक्षाद्विना ॥

२ इदमादीनामनेनादेशमात्रं विधीयते । तस्प्रत्ययस्तु पूर्वसूत्रेण वा क्रमसूत्रापेक्षया उत्तरसूत्रेण वा स्यात् ॥ अन्यथा इतो भवान् एष भवानिति भवदादिना समाधिकरणायोगात् ॥

३ "श्राद्धमद्य भुङ्क्ते ठेनौ ।३।३।८९। श्राद्धशब्दात्प्रथमान्तादद्य भुक्तमित्युपाधिकात् अनेनेति तृतीयार्थे कर्तरि ठ इन् इत्येतौ भवतः ॥ श्राद्धशब्दः कर्मनामधेयं तत्साधनद्रव्ये वर्तिष्ठ्यत्प्रत्ययमुत्पादयति । श्राद्धमनेनाद्य भुक्तं श्राद्धिकः श्राद्धी ।' इति सूत्रं दृष्ट्वाद्येति निपातनाद्भवति ॥

**९९० परेद्यव्यहि** ।३।४।२०। अहि वाच्ये परेद्यवीति निपात्यते ॥ परस्मिन् अह्नि परेद्यवि ॥

**९९१ पूर्वापराधरोत्तरान्यान्यतरेतरादेद्युस्** ।३।४।२१। अह्नि वर्तमानात्पूर्वादेः सप्तम्यन्तादेद्युस् भवति ॥ पूर्वस्मिन् अह्नि पूर्वेद्युः । एवमपरेद्युः अधरेद्युः उत्तरेद्युः अन्येद्युः अन्यतरेद्युः इतरेद्युः ॥

**९९२ उभयाद्द्युश्च** ।३।४।२२। सप्तम्यन्तादुभयशब्दादह्नि द्युस् एद्युस् च भवतः ॥ उभयस्मिन् अह्नि उभयद्युः उभयेद्युः ॥

**९९३ परुत्परार्यैषमो वर्षे** ।३।४।२३। एते वर्षे संवत्सरे निपात्यन्ते ॥ पूर्वस्मिन् वर्षे परुत् । पूर्वतरस्मिन् वर्षे परारि । अस्मिन् वर्षे ऐषमः ॥

**९९४ अनद्यतने र्हिः** ।३।४।२४। अद्यादिसर्वादेः किमः अवैपुल्यार्थाच्च बहोः अनद्यतने काले र्हिर्भवति ॥ यस्मिन्ननद्यतने काले यर्हि । एवं तर्हि अमुर्हि कर्हि अन्यर्हि इत्यादि ॥

**९९५ प्रकारे था** ।३।४।२५। अद्यादिसर्वादेः किमः अवैपुल्यार्थाच्च बहोः प्रकारे था भवति ॥ सर्वैः प्रकारैः सर्वथा । येन प्रकारेण यथा । एवं तथा अमुथा अन्यथा इत्यादि ॥

**९९६ कथमित्थमुः** ।३।४।२६। एतौ प्रकारे निपात्येते ॥ उदित् सप्तुप्रत्याहारार्थः । केन प्रकारेण कथम् । अनेन प्रकारेण इत्थं ॥

**९९७ सङ्ख्याया धा** ।३।४।२७। सङ्ख्यावाचिनः प्रकारे धा

---

१ इदं करोम्यद्य परह्नि त्विदं परार्यदश्च प्रविधेयमित्ययमिति चन्द्रप्रभकाव्ये विद्यमानत्वात् दिवसेऽपि भवति ॥

२ अतीतायाश्च रात्रेः पश्चिमो यामः आगामिन्या रात्रेः पूर्वो यामो दिवसः । स एव कालोऽद्यतनः । एतदन्योऽनद्यतनः । काल इति किं? यस्मिन्ननद्यतने भोजने ॥ अनद्यतन इति किं? यस्मिन्काले यदा ॥ अनद्यतने काले कालमात्रविवक्षायां दादिप्रत्ययो भवति यदा तदा सदानीम् । सप्तम्यर्थमात्रविवक्षायां त्रवपि भवति अमुत्र काले इत्यमोघवृत्तौ ॥

भवति ॥ एकेन प्रकारेण एकधा। एवं द्विधा त्रिधा षोढा दशधा शतधा इत्यादि ॥

९९८ **घडुति सङ्ख्या** ।१।१।९। घतुडत्यन्तं सङ्ख्यावद्भवति ॥ यावद्भिः प्रकारैः यावद्धा। एवं तावद्धा। इयद्धा। कियद्धा। एतावद्धा। कतिभिः प्रकारैः कतिधा। एवं यतिधा ततिधा ॥

९९९ **बहुगणं भेदे** ।१।१।१०। बहुगणशब्दौ भेदे नानात्वे सङ्ख्यावद्भवतः ॥ बहुभिः प्रकारैः बहुधा । एवं गणधा ॥

१००० **वैकाञ्ध्यम्** ।३।४।२९। एकशब्दात् प्रकारे ञ्ध्यं वा भवति ॥ ञ इत् ऐकध्यम्। एकधा ॥

१००१ **द्वित्रेर्ञ्धमेधौ** ।३।४।३०। द्वित्रिभ्यां प्रकारे ञ्धम् एधा इत्येतौ वा भवतः ॥ ञ इत्। द्वैधं द्वेधा द्विधा। त्रैधं त्रेधा त्रिधा ॥

१००२ **तद्वति धण्** ।३।४।३१। द्वित्रिभ्यां प्रकारवति धण् भवति ॥ ण इत्। अधणिति प्रतिषेधान्नाव्ययत्वं। द्वौ प्रकारावेषां द्वैधानि। एवं त्रैधानि कुलानि ॥

१००३ **वारे कृत्वस्** ।३।४।३२। वारे आवृत्तिकाले वर्तमानात्सङ्ख्यावाचिनः कृत्वस् भवति ॥ पञ्च वारान् पञ्चकृत्वः। एवं दशकृत्वः शतकृत्वः इत्यादि ॥

१००४ **चतुस्त्रिद्वेस्सुच्** ।३।४।३३। एतेभ्यो वारे सुच् भवति ॥ उचावितौ। चतुरो वारान् चतुष्करोति। पदस्येति लुक् एवं त्रिः द्विः ॥

१००५ **सकृत्** ।३।४।३४। एकशब्दस्य वारे सकृदिति निपात्यते ॥ सकृदेकवारं ॥

१००६ **परावरात्स्तात्** ।३।४।३७। दिग्देशकालेषु वर्तमानाभ्यां प्रथमापञ्चमीसप्तम्यन्ताभ्यां परावराभ्यां स्तात् भवति ॥ परा दिक्। परो

---

१ भेदो नानात्वमेकत्वप्रतियोगि। भेद इति किं? वैपुल्ये संघे न संख्याकार्यं माभूत्॥
२ वारो धात्वर्थस्यायौगपद्येन वृत्तिः॥
३ कृत्वसोऽपवादश्चकारः सुचो वेति विशेषणार्थश्च ॥

दशः परः कालो वा परस्तात् । एवं पञ्चमीसप्तम्यन्तयोरपि । परस्तादवरस्तात् आगच्छतीत्यादिक्रियाभिः सम्बन्धः ॥

१००७ पश्चोऽपरस्य दिगादेश्चाति ।३।४।४०। दिग्देशकालेषु वर्तमानादपरशब्दादद्भवति आति पश्चादेशश्च ॥ पश्चाद्रमणीयं पश्चादागत इत्यादि ॥

१००८ वोत्तरपदेऽर्धे ।३।४।४१। अपरशब्दस्य अर्धशब्दे उत्तरपदे पश्चादेशो वा भवति ॥ अपरमर्धं पश्चार्धम् । अपरार्धं वा ॥

१००९ पुरःपुरस्तादवोऽवस्तादधोऽधस्तादुपर्युपरिष्टात् ।३।४।४२। पुरसादयः शब्दाः दिग्देशकालेषु साधवो वेदितव्याः ॥ पुरः पुरस्तात् । अवः अवस्तात् । अधः अधस्तात् । उपरि उपरिष्टात् । रमणीयमित्यादि । तकारस्स्ताचेति प्रत्याहारार्थः ॥

१०१० एनोऽदूरे ।३।४।४६। अदूरे दिग्देशकाले वर्तमानाद्दिग्वाचिनः एनो भवति ॥ पूर्वेण ग्रामं । दक्षिणेन राजगृहम् । उत्तरेण ग्राममित्यादि ॥

१०११ लुगञ्चेः ।३।४।४७। अञ्चत्यन्ताद्दिग्वाचिनः परस्यैनस्य लुग् भवति ॥ प्राग्ग्रामात् । उदग्ग्रामात् इत्यादि ॥

१०१२ तीयशम्बबीजात् कृषौ कृञा डाच् ।३।४।४८। कृञा योगे तीयप्रत्ययान्तात् शम्बबीजाभ्यां च डाच् भवति कृषावर्थे ॥ डचावितौ । द्वितीयाकरोति क्षेत्रं द्वितीयं वारं कृषतीत्यर्थः । एवं तृतीयाकरोति शम्बाकरोति तिर्यक् कृषतीत्यर्थः । बीजाकरोति उप्त्वा कृषतीत्यर्थः॥

१०१३ सङ्ख्यादेर्गुणात् ।३।४।४९। सङ्ख्यापूर्वाद्गुणात् कृञा योगे डाच् भवति कृषावर्थे ॥ द्विगुणाकरोति । त्रिगुणाकरोति क्षेत्रं ॥

---

१ आतिप्रत्यये परे दिग्देशकाले वर्तमानस्य केवलपरशब्दस्य दिग्वाचिशब्दपूर्वस्य अपरशब्दस्य च पश्चादेशो भवतीत्यर्थः ॥

२ द्वितीयाकरोतीत्यादयो मुण्डयतीत्यादिवत्क्रियाशब्दास्तेषां क्षेत्रादि कर्मत्वेन विज्ञायते । कृषाविति किं? द्वितीयं करोति पदम् । कृञा इति किं? द्वितीयं दा॰ कृषति ॥

**१०१४ सपत्रनिष्पत्रादतिपीडने** ।३।४।५०। सपत्रनिष्पत्राभ्यां कृञा योगे डाच् भवत्यतिपीडने ॥ सपत्राकरोति निष्पत्राकरोति मृगम् अतिपीडयतीत्यर्थः ॥

**१०१५ मद्रभद्रान्मुण्डने** ।३।४।५१। मद्रभद्राभ्यां कृञा योगे डाच् भवति मुण्डने ॥ मद्राकरोति भद्राकरोति मुण्डयतीत्यर्थः ॥

**१०१६ प्रियसुखादानुकूल्ये** ।३।४।५२। प्रियसुखाभ्यां कृञा योगे डाच् भवति आनुकूल्ये ॥ प्रियाकरोति सुखाकरोति अनुकूलयतीत्यर्थः ॥

**१०१७ दुःखनिष्कुलशूलसमयसत्यात्प्रातिकूल्यनिष्कोषपाकयापनाशपथे** ।३।४।५३। कृञा योगे दुःखात् प्रातिकूल्ये निष्कुलान्निष्कोषे शूलात्पाके समयाद्यापनायां सत्यात् अशपथे डाच् भवति ॥ दुःखाकरोति प्रातिकूल्यं करोतीत्यर्थः । निष्कुलाकरोति दाडिमं निष्कुष्णातीत्यर्थः । शूलाकरोति मांसं पचतीत्यर्थः । समयाकरोति तन्तुवायः कालं यापयतीत्यर्थः । सत्याकरोति वणिक् सत्यंकारं करोतीत्यर्थः ॥

**१०१८ कर्मकर्तृभ्यां प्रागतत्तत्त्वे च्विः** ।३।४।५५। कृञः कर्मणा कृञा योगे भ्वस्तेः कर्तुश्च ताभ्यां योगे च्विर्भवति प्रागतस्य तद्भावे गम्यमाने ॥ स सर्व इत् ॥

**१०१९ च्वौ चास्यानव्ययस्येः** ।२।३।४०। अवर्णस्य च्वौ क्यचि च परे ईद्भवति नाव्ययस्य ॥ अशुक्लं शुक्लं करोति शुक्लीकरोति । अशुक्लः शुक्लो भवति शुक्लीभवति । एवं शुक्लीस्यात् मालीकरोति मालीभवति मालीस्यात् ॥

**१०२० यङ्लेङ्कृति चर्हचो रीदीर्घौ** ।२।३।४१। यङि ये च्वौ च प्रत्यये परे पूर्वस्य ऋतो री भवत्यचो दीर्घः न लेङ्कृतोः । अमुनिं मुनिं करोति मुनीकरोति मुनीभवति मुनीस्यात् गुरूकरोति पित्रीकरोति पित्रीभवतीत्यादि ॥

**१०२१ अनेकाचोऽव्यक्तानुकरणात् कृभ्वस्तिभ्यां द्विश्च**

।३।४।५४। अव्यक्तवर्णस्यानुकरणादनेकाचः कृञा भूअस्तिभ्यां च धातुभ्यां योगे डाच् भवति वा द्विश्च ॥ पटत्करोति। पटपटाकरोति। पटपटाभवति। पटपटास्यात् ॥

१०२२ **चेतोमनोरहोरजोऽरुश्चक्षुषो लुक् च्वौ** ।३।४।५६। चेतस् इत्यादीनां लुग् भवति च्वौ परे ॥ चेतीकरोति चेतीभवति । चेतीस्यात् मनीकरोति । रजीकरोति । रहीकरोति । अरूकरोति । चक्षूकरोतीत्यादि । तदन्तस्यापि लुग्भवत्येव । सचेतीकरोति । समनीकरोति । विरहीकरोति । नीरजीकरोति । सारूकरोति । सचक्षूकरोतीत्यादि ॥

१०२३ **इसुसोर्बहुलम्** ।३।४।५७। लुग्भवति च्वौ परे ॥ सर्पीभवति सर्पिर्भवति । धनूभवति । धनुर्भवति इत्यादि ॥

१०२४ **ईग् हलः** ।३।४।५८। हलन्तस्य बहुलमीक् भवति च्वौ परे ॥ क इत् । दृषदीभवति दृषद्भवतीत्यादि ॥

१०२५ **व्याप्तौ सात्** ।३।४।५९। कृभ्वस्तिभिर्योगे कर्मकर्तृभ्यां प्रागतत्त्वे विषये साद्भवति व्याप्तौ सामस्त्ये गम्यमाने ॥ अभस्म समस्तं भस्म करोति भस्मसात्करोति । भस्मसाद्भवति । भस्मसात्स्यादित्यादि । एवमग्निसात्करोति । अन्नासकृसात इति निषेधान्न षित्वं ॥

१०२६ **जातेः सम्पदा च** ।३।४।६०। कृञादिभिस्सम्पदा च योगे जातिवाचिभ्यां कर्मकर्तृभ्यां प्रागतत्त्वे साद्भवति व्याप्तौ ॥ अग्निसात्करोति सर्वं शस्त्रं सेनायां दैवम् । अग्नीसात्सम्पद्यते दैवात् ॥

१०२७ **तत्राधीने** ।३।४।६१। कृञादिभिः सम्पदा च योगे सप्तम्यन्तादधीने आयत्ते साद् भवति ॥ आत्मन्यधीनं करोति अत्मसात्करोति। आत्मसाद्भवति । आत्मसात्स्यात् । आत्मसात्सम्पद्यते ॥

१०२८ **बह्वल्पार्थात्कारकाच्छसीष्टानिष्टे** ।३।४।६४। बह्वर्थादल्पार्थाच्च कारकाद्यथासङ्ख्यमिष्टानिष्टयोरर्थयोः शसिर्भवति ॥ इदित् । तसिमत्याहारार्थः । बहुशः गणशः भूरिशः भोजयति । अल्पशः स्तोकशः ददातीत्यादि ॥

**१०२९ सङ्ख्यैकार्थाद्वीप्सायाम्** ।३।४।६५। सङ्ख्यावाचिनः एकार्थवाचिनश्च वीप्सायां विषये शसिर्भवति ॥ एकमेकम् एकशः। द्वौद्वौ द्विशः। एवं त्रिशः। दशशः। शतशः। यावच्छः। कतिशः। गणशः। एकार्थाद् वृक्षशः। जनशः। क्रमशः। सङ्ख्यैकादिति किं? जनौ जनौ इत्यादि ॥

**१०३० प्रकृते मयट्** ।३।४।६७। प्रकृते प्रस्तुते प्रचुरे वार्थे मयड् भवति ॥ प्रकृतमन्नमन्नमयम्। एवं दानमयं रणमयम् इत्यादि ॥

**१०३१ अस्मिन्** ।३।४।६८। प्रथमान्तात्तदस्मिन् प्रकृतमित्यर्थे मयड् भवति ॥ अपूपाः प्रकृता अस्मिन् अपूपमयं भोजनम्। एवं घृतमयं। क्षमामयो धर्म इत्यादि ॥

**१०३२ निन्द्ये पाशप्** ।३।४।७०। निन्द्येऽर्थे वर्तमानात् पाशप् भवति ॥ प इत्। निन्द्यो वैयाकरणः वैयाकरणपाशः। एवं मुनिपाशः तार्किकपाशः जायपाशा। पित्त्वात् पुंवद्भावः इत्यादि ॥

**१०३३ तिङश्च प्रकृष्टे तमप्** ।३।४।७१। प्रकृष्टे वर्तमानात्सुबन्तात्तिङन्ताच्च तमप् भवति ॥ प इत् पुम्भावार्थः। सर्वे इमे शुक्लाः अयमेषां प्रकृष्टः शुक्लः शुक्लतमः। एवम् आढ्यतमः गोतमा। तिङन्तमपि ॥

**१०३४ अव्ययैत्किंतिङोऽसत्त्वे तयोर्डाम्** ।३।४।७४। अव्ययादेदन्तात् किमस्तिङन्ताच्च परयोस्तमप्तरपोर्डाम् भवति स्वार्थे न चेत्तौ सत्त्वे द्रव्ये प्रकृष्टे वर्तेते ॥ डित्त्वादन्त्यादेशः। सर्वे इमे पचन्ति अयमेषां प्रकृष्टं पचति पचतितमाम्। एवं पठतितमाम् उच्चैस्तमां प्राह्णेतमां किंतमां ॥

---

१ एतदन्तग्रहणसामर्थ्यात्कालेऽसत्त्वे च भवति नान्यत्र। उच्चैस्तरो वृक्षः। किन्तरं दारु ॥ कालात् ङतनट् काले ।२।२।१९। हलन्तात्कालवाचिनः परस्याः सप्तम्याः ङे तरे तमे तनटि च प्रत्ययेषु कालशब्दे चोत्तरपदे लुग्वा भवति ॥ पूर्वाह्णेतरां पूर्वाह्णतरे। अपराह्णेतरां अपराह्णतरे। पूर्वाह्णेतमां पूर्वाह्णतमे। पूर्वाह्णेतनः पूर्वाह्णतने। पूर्वाह्णेकालः पूर्वाह्णकाले ॥

**१०३५ द्वयोर्विभज्ये च तरप्** ।३।४।७२। द्वयोर्मध्ये प्रकृष्टे विभज्ये विकल्प्ये चार्थे वर्तमानात्सुबन्तात्तिङन्ताच्च तरप् भवति ॥ प इत्। इमौ शुक्लौ अयमनयोः प्रकृष्टः शुक्लः शुक्लतरः । एवमाद्यतरः । इमौ पचतः अयमनयोः प्रकृष्टं पचति पचतितराम् । एवं पठतितमां सुतरां माहेतरां किंतरां । सौघ्नेभ्यो माधुराः पटुतराः ॥

**१०३६ गुणाङ्गाद्वेष्ठेयसू** ।३।४।७५। गुणाङ्गात् द्रव्यवाचिनः परयोस्तमप्तरपोर्यथासङ्ख्यम् इष्ठ ईयसु इत्येतौ वा भवतः ॥ उदित् नमाद्यर्थः । अयमेषां प्रकृष्टः पटुरिति विगृह्य तमबिष्ठे अन्त्याजादिलुक् । पटिष्ठः पटुतमो वा । अयमनयोः प्रकृष्टः पटुः पटीयान् पटुतरो वा । एवं प्रेष्ठः स्थेष्ठः स्थेयान् । वरिष्ठः वरीयान् । गरिष्ठः गरीयान् । बंहिष्ठः बंहीयान् त्रपिष्ठः त्रपीयान् । द्राघिष्ठः द्राघीयान् । वृन्दिष्ठः वृन्दीयान् । प्रथिष्ठः प्रथीयान् । म्रदिष्ठः म्रदीयान् । क्रशिष्ठः क्रशीयान् । भ्रशिष्ठः भ्रशीयान् । द्रढिष्ठः द्रढीयान् । परिव्रढिष्ठः परिव्रढीयान् । स्थविष्ठः स्थवीयान् । दविष्ठः दवीयान् । यविष्ठः यवीयान् । ह्रसिष्ठः ह्रसीयान् । क्षेपिष्ठः क्षेपीयान् । क्षोदिष्ठः क्षोदीयान् ॥

**१०३७ विन्मतोः श्लुग्णीष्ठेयसि** ।२।३।४५। विन्मत्वोः श्लुग् भवति णीष्ठेयस्सु परतः ॥ अयमेषां प्रकृष्टः तपस्वी तपिष्ठः तपीयान् । अन्त्याजादिलुक् । एवं धनिष्ठः धनीयानित्यादि ॥

**१०३८ कन्वाऽल्पयूनोः** ।२।३।४६। अल्पयुवन्शब्दयोः णीष्ठेयस्सु परतः कन्वा भवति ॥

**१०३९ नैकाचः** ।२।३।५८। एकाचः णीष्ठेयस्सु इमनि च परतः अन्त्याजादेर्लुग्न भवति ॥ कनिष्ठः कनीयान् । पक्षे अल्पिष्ठः अल्पीयान् । यविष्ठः यवीयान् ॥

---

१ गुणमभिधाय यः शब्दो द्रव्ये वर्तते स गुणाङ्गः तस्मात् । सहभावधर्मो गुणः सोऽङ्गं निमित्तं यस्यासौ तस्मात् गुणद्वारेण गुणिनि वर्तमानः शब्द इत्यर्थः ॥ प्रियस्थिरेत्यादिना प्रियादिशब्दानां प्राद्यादेशा अत्रावगन्तव्याः ॥

**१०४० प्रशस्यस्य श्रः** ।२।३।४७। प्रशस्यशब्दस्य णीष्ठेयस्सु परतः श्रो भवति ॥ श्रेष्ठः श्रेयान् ॥

**१०४१ वृद्धस्य च ज्यः** ।२।३।४८ वृद्धशब्दस्य प्रशस्यशब्दस्य च णीष्ठेयस्सु परतः ज्यो भवति ॥ ज्येष्ठः ॥

**१०४२ ज्यायान्** ।२।३।४९। ईयसि ज्यायानिति निपात्यते ॥

**१०४३ वर्षः** ।२।३।५०। वृद्धशब्दस्य णीष्ठेस्सु परतः वर्षो भवति ॥ वर्षिष्ठः वर्षीयान् ॥

**१०४४ बाढान्तिकयोः साधनेदौ** ।२।३।५१। बाढान्तिकयोः णीष्ठेयस्सु परतः यथासङ्ख्यं साधनेदौ भवतः ॥ साधिष्ठः साधीयान् । नेदिष्ठः नेदीयान् ॥

**१०४५ बहोर्णीष्ठे भूय्** ।२।३।५४। बहोर्णीष्ठयोः भूय् भवति ॥ भूयिष्ठः ॥

**१०४६ भूर्लुक् चेः** ।२।३।५५। बहोरीयसाविमनि न भूर्भवति इवर्णस्य लुक् च ॥ भूयान् ॥

**१०४७ प्रशस्ते रूपप्** ।३।४।७६। प्रशस्ते वर्तमानाद्रूपप् भवति ॥ प्रशस्तो धर्मः धर्मरूपः । एवमासरूपः आगमरूपः । प्रशस्तं पचति पचतिरूपमित्यादि ॥

**१०४८ ईषदसमाप्तेऽकादेः कल्पब्देश्यब्देशीयर्** ।३।४।७७। ईषदसमाप्तेऽर्थे वर्तमानात्तिङन्तात्सुबन्ताच्च कल्पब्देश्यब्देशीयर्प्रत्यया भवन्ति न कादेः ॥ पराविती पुम्भावार्थौ । ईषदसमाप्तं पचति पचतिकल्पं। पचतिदेश्यं । पचतिदेशीयम् । ईषदसमाप्तो राजा राजकल्पः राजदेश्यः राजदेशीयः । एवं गणधरकल्प इत्यादि । स्त्रियाम् ईषदसमाप्ता राज्ञी राजकल्पेत्यादि । अकादेरिति किम्? तमादिभ्यो न भवन्ति । "तौ ङे ।३।४।७३। इति तरसमपोर्ङसंज्ञा ॥

१ समाप्यते स्म समाप्तः । न समाप्तोऽसमाप्तः । ईषन्मनागसमाप्त ईषदसमाप्तः । तस्मिन् । क आदिर्यस्यासौ कादिः न कादिरकादिस्तस्मात् । अकादेरिति किं? तमादिभ्यो न भवति कल्पादिभ्य एव तमादयः । पटुकल्पतरः । पटुकल्पतमः । पटुदेश्यतरः । पटुकल्पतररूपः ॥

२ तकाराद्यौ तरप्तमपौ ङसंज्ञौ भवतः ॥

१०४९ **सुपः प्राग्बहुर्वा** ।३।४।७८। ईषदसमाप्ते वर्तमानात् सुबन्तात् प्राक् बहुप्रत्ययो वा भवति ॥ ईषदसमाप्तो राजा बहुराजा बहुधीर इत्यादि ॥

१०५० **तिङ्सर्वादेरक्ष्वन्त्यात्पूर्वोऽक्** ।३।४।२२। कुत्सिताद्यर्थे वर्तमानस्य तिङन्तस्य सर्वादेश्चाक्षु अन्त्यादचः पूर्वोऽक्प्रत्ययो भवति॥ कुत्सितमज्ञातमल्पं वा पचाति पचतकि। एवं पठतकि। सर्वके। यके। तके इत्यादि। स्त्रियामयदादीति निषेधान्नेत्। यका सका इत्यादि॥

१०५१ **वाऽकोऽस्योः** ।१।२।२१३। अदसोऽकोऽतः सौ उद्वा भवति॥ उत्यनेोरिति निषेधान्नौत्[1]। असुकः। असुका। असकौ॥

१०५२ **द्येषसुतपृत्रहृन्दारस्य** ।२।३।८८। द्यादीनामन्त्यस्य अनिति आङ्परे के परे इद्वा भवति॥ द्विके द्वके। एषिका एषका॥

१०५३ **प्राकोत्कप्**[2] ।३।४।८१। कप्रत्ययात्प्राक् येऽर्था वक्ष्यन्ते तेषु कप् भवति। प इत्। अधिकारोऽयम्॥

१०५४ **युष्मदस्मदोस्सुपोऽसोभि**[3] ।३।४।८३। सुबन्तयोर्युष्मदस्मदोरक्ष्वन्त्यात् पूर्वोऽक् भवति कुत्सिताद्यर्थे न सादौ ओदादौ भादौ च सुपि॥ त्वयका। मयका। युष्माककम्। अस्माककम्। असोभीति किं? युष्मकासु। अस्मकासु। युवकयोः। आवकयोः। युवकाभ्याम्। आवकाभ्यां॥

१०५५ **कोदिश्चाव्ययस्य** ।३।४।८४। कुत्सिताद्यर्थे अव्ययस्याक्ष्वन्त्यात् पूर्वोऽक्प्रत्ययो भवति कान्तस्य तु दिश्चादेशः॥ कुत्सितमल्पमज्ञातं वा उच्चैः उच्चकैः एवं नीचकैः शनकैः। कान्तस्य। धकित् पृथकदित्यादि॥

---

१ औस्सुङ्क् चादसोऽनोः ।१२५। इति सूत्रेण निषेधात् औकारो न भवतीत्यर्थः॥

२ लोहितान्मणौ कः ।३।४।१११। इति कप्रत्ययः कप्सूत्रेणोक्तस्तस्मात्॥

३ सश्च ओश्च भश्च सोभ् न सोभ् असोभ् तस्मिन्॥

**१०५६ तूष्णीकाम्** ।३।४।८५। कुत्सितायर्थे अकि तूष्णीकामिति निपात्यते ॥

**१०५७ स्वज्ञाजभस्त्राधातुत्यय:** ।१।३।८७। स्वादीनां कयान्तस्य चान्त्यस्य अनित्याद्परे के परे स्त्रियामिद्वा भवति न धातोः ॥ कुत्सिता स्वा स्विका स्वका । ज्ञिका ज्ञका । अजिका अजका । भस्त्रिका भस्त्रका । चटकिका चटकका । आर्यिका आर्यका । इदभावे पुंवद्भावः ॥

**१०५८ कुत्सिताल्पाज्ञाते** ।३।४।८६। कुत्सिताल्पाज्ञातेषु वर्तमानाद्यथायोगं कबादयो भवन्ति ॥ कुत्सितः अल्पः अज्ञातो वा देवः देवकः । एवं धर्मकः अश्वकः नरक इत्यादि । स्त्रियां सूतिका सूतका वृन्दरिका वृन्दारका नरिका ॥

**१०५९ अनुकम्पातन्नीत्योः** ।३।४।८७। अनुकम्पायां तन्नीतौ च अनुकम्पायुक्ते सान्त्वने च वर्तमानाद्यथायोगं कबादयो भवन्ति ॥ अनुकम्पितः पुत्रः पुत्रकः सान्त्वितो वा । एवं वत्सकः देवक इत्यादि । स्त्रियां पुत्रिका पुत्रका ॥

**१०६० ऋक्युत्तरपदस्य प्कन्** ।३।४।९१। बह्वचो नृनाम्न उत्तरपदस्य क्षुचि अनुकम्पायां प्कन् भवति ॥ पानावितौ । अनुकम्पितो देवदत्तः देवकः । एवं जिनकः । स्त्रियां नित्त्वान्नेत् । देवका जिनका इत्यादि ॥

---

१ कुत्सितं निन्द्यं । अल्पं महत्प्रतियोगि । अज्ञातं प्रकृत्युपात्तधर्मव्यतिरेकेण केनचित्स्वस्वादिना धर्मेणाज्ञातमन्यथाऽयोगात् । कुत्सितेभ्यः कुत्सितादौ च प्रत्ययः । राधकः पूर्णकः शूद्रकः इति सञ्ज्ञायां कुत्सायोगात्कुत्सित इत्येव कः ॥ व्याकरणेन नाम त्वं गर्वितः याज्ञिक्येन नाम त्वं गर्वितः इत्येवं क्षेपणमपि कुत्सितमेव न ह्यकुत्सितेनाधिक्षिप्यते इत्यमोघवृत्तौ ॥ वृन्दारकौ रूपमुख्यौ ॥

२ अनुकम्पा कारुण्येनानुग्रहः । तस्या नीतिस्तन्नीतिः अनुकम्पायां युक्ता नीतिरित्यर्थः । नीतिः सामादिप्रयोगः । अनुकम्पायामनुकम्पायुक्तायां च नीतौ गम्यमानायां यथायोगं कबादयो भवन्ति ॥ अनुकम्पा तन्नीतिश्च प्रयोक्तृधर्मोऽवगन्तव्यः ।

**१०६१ ह्रस्वे**[3] ।३।४।९९। ह्रस्वेऽर्थे यथायोगं कबादयो भवन्ति ॥ ह्रस्वोऽश्वः अश्वकः इत्यादि ॥

**१०६२ यत्तत्किमन्याद्द्वयोर्निर्धार्ये डतरः** ।३।४।१०५। द्वयोर्मध्ये निर्धार्ये वर्तमानेभ्यो यत्तत्किमन्येभ्यो डतरो भवति ॥ ड इत्। अन्त्याजादिलुगर्थः। यतरो भवतोश्चैत्रस्ततर आगच्छतु। कतरः पटुः। अन्यतरो गच्छतु ॥

**१०६३ वैकात्** ।३।४।१०६। द्वयोर्निर्धार्ये वर्तमानादेकशब्दाड्डतरो वा भवति ॥ द्वयोरेकतरः एकको वा ॥

**१०६४ बहूनां प्रश्ने डतमश्च** ।३।४।१०७। बहूनां मध्ये निर्धार्ये प्रश्ने च वर्तमानेभ्यो यत्तत्किमन्यैकेभ्यो डतरो डतमश्च वा भवतः नैकशब्दाड्डतरः ॥ ड इत्। यतरो यतमो वा भवतां पटुः ततरस्ततमो वा आगच्छतु। अन्यतरोऽन्यतमो वाऽऽगच्छतु। कतरः कतमो वा देवदत्तः। एकतमः पटुः ॥

**१०६५ कुमारीक्रीडनेयसोऽव्यादिभ्यः**[1] ।३।४।११६। कुमारीक्रीडनात् ईयसन्तात् अव्यादिभ्यश्च स्वार्थे को वा भवति ॥ कन्दुरेव कन्दुकः। एवं गोलकः। श्रेयानेव श्रेयस्कः। एवं गरीयस्कः। अविरेव अविकः। यावकः इत्यादि ॥

**१०६६ तारकावर्णका ज्योतिस्तान्तवे** ।१।३।९२। ज्योतिषि तारकेति तान्तवे वर्णकेति निपात्यते ॥

**१०६७ तीयाट्टीकणविद्यायाम्**[2] ।३।४।११७। तीयप्रत्ययान्तात्

---

३ दीर्घप्रतियोगि ह्रस्वं तस्मिन्। योगविभाग उत्तरार्थः। ह्रस्वं पचति पचतकि। ह्रस्वकालयोगात् क्रिया ह्रस्वोच्यते ॥

१ कुमारीणां यानि क्रीडनानि तद्वाचिभ्यः कुमारीक्रीडने ॥ योग्रहणमव्यादेरेव प्रपञ्च इत्यमोघवृत्तौ ॥ कप्प्रत्ययाधिकारो निवृत्तः ॥

२ अविद्यायामिति किं? प्रसज्यप्रतिषेधोऽयं तेन विद्यायामेव न भवति अन्यत्र सर्वत्र भवत्येव ॥ मुख्यतीय पार्श्वतीयेत्यत्र तीयोऽनर्थकः। अनयव एवार्थवानिति भवति ॥

स्वार्थे टीकण् वा भवति न विद्यायाम् ॥ द्वितीयमेव द्वैतीयीकं । तार्तीयीकम् । अविद्यायामिति किं? । द्वितीया तृतीया विद्या ॥

**१०६८ ञोऽष्टमाद्भागे** ।३।४।११८। अष्टमात् स्वार्थे ञो वा भवति भागे वाच्ये ॥ अष्टम एव आष्टमो भागः । अष्टमो वा ॥

**१०६९ षष्ठात्** ।३।४।११९। षष्ठात् स्वार्थे ञो वा भवति भागे वाच्ये ॥ षष्ठ एव षाष्ठो भागः । षष्ठो वा ॥

**१०७० एकादाकिंश्चासहाये** ।३।४।१२१। असाहाये वर्तमानादेकशब्दादाकिन् कश्च वा भवतः ॥ एक एव एकाकी । एककः ॥

**१०७१ मृदस्तिकः** ।३।४।१२३। मृदः स्वार्थे तिको भवति ॥ मृदेव मृत्तिका ॥

**१०७२ सस्नौ प्रशस्ते** ।३।४।१२४। प्रशस्ते मृदः सस्नौ भवतः ॥ प्रशस्ता मृत् मृत्सा । मृत्स्ना ॥

**१०७३ बहुलं घतोर्द्वयसट्मात्रट्** ।३।४।१२५। घत्वन्तात् स्वार्थे द्वयसट् मात्रट् बहुलं भवतः ॥ टावितौ । यावदेव यावद्द्वयसं यावन्मात्रम् । एवं तावद्द्वयसं तावन्मात्रम् इत्यादि ॥

**१०७४ वर्णात् कारः** ।३।४।१२६। वर्णवाचिनः स्वार्थे कारो भवति ॥ अ एव अकारः । एवं ककारः वकारः चकारः स्यात्कार इत्यादि ॥

**१०७५ भेषजादिहोत्रादेवेभ्यष्ट्यण्ष्ठतल्** ।३।४।१२७।

---

१ एकाकिभिः क्षुद्रैरर्जितम् । असहाय इति किं? एके आचार्याः । एकः द्वौ बहवः ॥

२ तिकं त्यक्त्वा तकं कृत्वा आईत्वे क्रियमाणे प्रक्रियागौरवम् । पञ्चभिः मृत्तिकाभिः क्रीतः पञ्चमृत्तिकः इत्यादावे इत्वाभावश्च स्यादिति तिको विधीयते ॥

३ रूपपि प्राप्तेऽयं विधिः । तत्र केचिद्रूपप्बाधनं नेच्छन्ति । तत्रोत्तरं बहुलग्रहणमत्रापि सम्बध्यं । मृद्रूपा ॥

४ इतिहेति निपातनसमुदाय उपदेशपारम्पर्ये वर्तते । पारम्पर्योपदेशे स्यादैतिह्यमितिह्यव्ययमित्यमरः । भेषजादयः शिष्टेभ्योऽवगन्तव्याः । बहुवचनं भेषजादेराकृतिगणत्वार्थम् ॥ वचनभेदेऽपि याथासंख्यं अन्यथा होत्रादेवावेव भेषजादी विज्ञायेयातामिसमोघनूत्तं ॥

भेषजादिभ्यः स्वार्थे ष्यण् भवति । होत्राया: छः देवात्तल् ॥ भेषजमेव भैषज्यम् । एवमैतिह्यं चातुर्वर्ण्यं त्रैलोक्यं त्रैकाल्यं षाड्गुण्यं चातुर्मास्यं शैल्यं । स्त्रियां शैलीत्यादि । होत्रैव होत्रीयं । देव एव देवता ॥

१०७६ **नामरूपभागाद्धेयम्** ।३।४।१२८। नामादिभ्यः स्वार्थे धेयो भवति ॥ नामैव नामधेयं । रूपधेयं । भागधेयं ॥

१०७७ **मर्तादिभ्यो यः** ।३।४।१२९। मर्तादिभ्यः स्वार्थे यो भवति ॥ मर्त एव मर्त्यः । सूर एव सूर्यः । क्षेम एव क्षेम्यः । भाग एव भाग्यमित्यादि ॥

१०७८ **नवात्नतनखं च नू च** ।३।४।१३०। नवशब्दात् स्वार्थे त्नतनखा यश्च वा भवन्ति तस्य नू इत्यादेशश्च ॥ नवमेव नूत्नं । नूतनं । नवीनं । नव्यं ॥

१०७९ **प्रात्पुराणे** ।३।४।१३१। पुराणेऽर्थे वर्तमानात् प्रात् त्नतनखा भवन्ति ॥ प्रत्नं । प्रतनं । प्रीणं पुराणमित्यर्थः ॥

१०८० **प्रज्ञादिभ्योऽण्** ।३।४।१३२। प्रज्ञादिभ्यः स्वार्थे अण् वा भवति ॥ प्रज्ञ एव प्राज्ञः । वणिगेव वाणिजः । अन्त एव आन्तः । कर्मैव कार्मणमित्यादि ॥

१०८१ **वाचष्ठण्** ।३।४।१३५। वाचः सन्दिष्टेऽर्थे ठण् भवति ॥ सन्दिष्टा वाक् वाचिकं ॥

---

१ प्रगतं कालेन पुराणम् ॥

२ वाचिकं कथयति सन्दिष्टां वाचं कथयतीत्यर्थः । संदिष्टेति किं? चित्रा वाक् देवदत्तस्य । वाऽधिकारेऽपि नित्यमेव प्रत्ययोऽन्यथा तद्विशेषाप्रतीतेः ॥

१०८२ **विनयादिभ्यः** ।३।४।१३६। विनयादिभ्यः स्वार्थे ठण् भवति ॥ विनय एव वैनयिकं । समय एव सामयिकम् इत्यादि ॥

१०८३ **औपयिकम्** ।३।४।१३७। उपाय एव औपयिकम् इति निपात्यते ॥

॥ इति तद्धितसङ्ग्रहः ॥

श्रीमन्नम्रसुरासुराधिपचलन्मौलिप्रभास्वन्मणि–
श्रेणिश्राणितसन्तताघ्यर्विभवो यत्पादपीठीतटः ।
वाचोयुक्तिविविक्तवस्तुविसरो दुष्कर्मनिर्मूलनो
जीयात्सूरिसुभाषितार्चितमहः सोऽयं जिनेन्द्रप्रभुः ॥ १ ॥

॥ प्रक्रियासंग्रहे पूर्वार्द्धं संपूर्णम् ॥



## अशुद्धिशोधनम्

| पत्रम् | पंक्तिः | अशुध्दम् | शुध्दम् |
|---|---|---|---|
| १३ | १४ | भवति | भवतो |
| १३ | १८ | अस्वरसं | अस्वसं |
| २१ | १४ | द्वीः करोति | द्विः करोति |
| २२ | १२ | प्रत्येये | प्रत्यये |
| २४ | ७ | पदन्ते | पदान्ते |
| २९ | २४ | आश्रयणेण | आश्रयणेन |
| ३० | ३ | समामः | सामामः |
| ३० | २५ | त्ययां | त्यदां |
| ३७ | १४ | सखित | सखीत |
| ३८ | १३ | प्रत्येऽसु | प्रत्ययेऽसु |
| ३८ | २५ | णिञ् | णीञ् |
| ४६ | १ | सर्वा | सर्वाः |
| ४६ | १२ | असुभ्यः | असूभ्यः |
| ४८ | ३ | इकान्त | इकारान्त |
| ४९ | २१ | वांम् श | वाम्श |
| ५१ | १७ | स्वदयः | स्वादयः |
| ५५ | १३ | अमन्त्रण | आमन्त्रण |
| ६१ | १६ | प्रदमा | प्रदामा |
| ६७ | ३ | ठकारन्तो | ठकारान्तो |
| ८२ | १३ | वसस्रादि | वस्नसादि |
| ८३ | १० | द्रयांचक्रे | दयांचक्रे |
| १०९ | १२ | नञ् दुम् | नञ् दुसुसु |
| ११४ | १० | बहिष्पर्यपाङ्च् | बहिष्पर्यपाङ् च |

| पत्रम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १४८ | २५ | कार्तिकीकः | कार्तिकिकः |
| ,, | ,, | श्रावणीको | श्रावणिकः |
| १५१ | १६ | दक्षिणात्यः | दाक्षिणात्यः |
| १५४ | १७ | प्रागेतनः | प्रगेतनः |
| १६७ | २६ | महामुनो | महामुनौ |
| १७६ | १४ | प्रियस्थि०— बहल | बहुल |
| १८८ | ३ | प्रज्ञाश्रद्धा० | प्रज्ञाश्रद्धा |
| ,, | २१ | स्वाङ्गाद्धी० | स्वाङ्गाद्धी |
| १९० | १० | मस्वर्थे | मत्वर्थे |
| १९२ | २९ | श्राद्धीकः | श्राद्धिकः |
| १९५ | १ | दशः | देशः |
| ,, | ४ | शब्दादद्भवति | शब्दादाद्भवति |
| १९७ | १९ | अग्नीसात् | अग्निसात् |
| २०० | १३ | विमनि न | विमनि च |

॥ श्रीरस्तु ॥

सुरासुरनराधीशमौलिमालार्चितक्रमम् ॥
आख्यातसर्वतत्त्वार्थं सर्वज्ञं जिनमाश्रये ॥ १ ॥

## ॥ अथ तिङन्तसंग्रहोऽभिधीयते ॥

तद्यथा ॥ भू सत्तायां । भू इत्ययं शब्दः सत्तायामर्थे वर्तते ॥

**१०८४ क्रियार्थो धातुः** ।१।१।२२। क्रिया परिणतिः प्रवृत्तिर्वा सा अर्थो वाच्यो यस्य स शब्दो धातुसंज्ञो भवति ॥ "स्मे च लट् ।४।३।२१५।" इत्यधिकृत्य ॥

**१०८५ सति** ।४।३।२१७। वर्तमानार्थे वर्तमानाद्धातोर्लट्प्रत्ययो भवति ॥ अटावितौ । अकारो 'विदो लटो वेति' विशेषणार्थः । टकार 'ए टित' इति विशेषणार्थः ॥

**१०८६ कृल्लोऽतुन्त्वाम्** ।४।३।४५। कृतो लकाराश्च कर्तरि भवन्ति न तुन्त्वामः ॥ एकद्विबहावित्यधिकृत्य ॥

**१०८७ लोऽन्ययुष्मदस्मासु तिसझिसिप्थस्थमिब्वस्मस्** ।१।४।१। अन्ययुष्मदस्मदर्थेषु प्रत्येकमेकद्विबहुषु वर्तमानाद्धातोर्लस्य यथासंख्यं तिप् तस् झि सिप् थस् थ मिप् वस् मस् इत्यादेशा भवन्ति ॥ प इत् गृल्यब्लाविति विशेषणार्थः ॥

**१०८८ कर्तरि शप्** ।४।३।२०। धातोः कर्तरि शिति लेटि लेङि लटि लङि च मध्ये शप् भवति ॥ शपावितौ । शकारः 'एचोऽश्या' इति विशेषणार्थः । पकारः पूर्ववत् ॥

---

१ अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वित्यमरः ॥ पूर्वापरीभूता साध्यमानरूपा प्रतिपत्तिः क्रिया । परिणाम इत्यर्थः । पूर्वोत्तराकारपरिहारावाप्तिस्थितिलक्षणा परिणतिः शिष्टप्रयोगानुसारित्वाल्लक्षणस्य । पूर्वापरीभूता अवयवक्रिया समुदायरूपा पाकादिः ॥

२ प्रारब्धापरिसमाप्तिर्वा वर्तमानः । प्रवृत्तोपरतश्चैव वृत्ताविरत एव च ॥ नित्यप्रवृत्तः सामीप्यो वर्तमानश्चतुर्विधः ॥ १ ॥ मांसं न खादति । बालाः क्रीडन्ति । मेरुस्तिष्ठति । सिद्धो भवति ॥

**१०८९ अक्ङिल्लुग्घेतौ** ।४।२।१७। पूर्वस्यैक एङरो भवन्ति धातोर्विहिते प्रत्यये परे न किति ङिति लुग्घेतौ च ॥ इत्येङ् अव् ॥

**१०९० झोऽन्तः** ।१।४।८८। धातोर्लादेशस्य झः अन्तो भवति ॥ अदित् एद इत्यतो लुक् ॥

**१०९१ आम्रव्यतः** ।४।२।३४। धातोर्मवादौ लिवर्जितलादेशे पूर्वस्यात आद्भवति ॥ सुङ् पदमिति पदत्वाद्रित्वादि । स भवति । तौ भवतः । ते भवन्ति इति प्रथमपुरुषः ॥ त्वं भवसि । युवां भवथः । यूयं भवथ इति मध्यमपुरुषः ॥ अहं भवामि । आवां भवावः । वयं भवामः इत्युत्तमपुरुषः ॥ अन्याद्यप्रयोगेऽपि । भवति भवतः भवन्ति । भवसि भवथः भवथ । भवामि भवावः भवामः ॥ भवच्छब्दप्रयोगेऽपि प्रथमपुरुष एव तस्य पूज्यार्थवाचकत्वात् । भवान् भवति । भवन्तौ भवतः । भवन्तो भवन्ति ॥ एवं वद्व्यक्तायां वाचि । अदित् । वदति वदतः वदन्ति इत्यादिपरस्मैपदिधातवः शब्विकरणाः सर्वेऽपि नेतव्याः ॥ टुनदु समृद्धौ ॥ टुशब्दोतावितौ ॥

**१०९२ उदितः** ।४।२।१९७। उदितो धातोर्नम् भवति ॥ अमावितौ । मित्त्वादन्त्यादचः परो भवति शेषं प्राग्वत् । नन्दति नन्दतः नन्दन्तीत्यादि ॥ एवं चदु दीप्तिह्लादनयोः । चन्दति चन्दतः चन्दन्तीत्यादि ॥ एधि वृद्धौ । इदित् प्राग्वद्धातुसंज्ञायाम् । सतीति लट् ॥

**१०९३ तातांझथासाथांध्वमिल्वहिमहिङ्ङिदिच्छीयसंक्ष्ण्वपस्कृनिविशः** ।१।४।२। ङितः इदितः शीयादेशात् संक्ष्णु अपस्कृ निविश् इत्येतेभ्यश्च धातुभ्यः परस्य लः अन्ययुष्मदस्मासु प्रत्येकमेकद्विबहुषु यथासङ्ख्यं त आतां झ थास् आथां ध्वम् इल् वहि महिङ् इत्यादेशा भवन्ति ॥ लङावितौ । लकारो रञौ झेलोरिति विशेषणार्थः । ङकारः सुङिति प्रत्याहारार्थः । शप् ॥

---

१ सम्पूर्वः क्ष्णु तेजने । अपपूर्वसटागमयुक्तः कृ विक्षेपे । निपूर्वो विश् प्रवेशने ॥

**१०९४ ए टितः** ।१।४।९२। धातोष्टिल्लादेशस्य तङ एद्भवति ॥ षष्ठ्यास्स्थानेऽन्तेऽल इत्यन्तादेशः ॥

**१०९५ वह्यामो गेश्** ।१।४।९३। टितो लस्तङो वहेरितः आमश्च गेश् भवति ॥ गशावितौ। गकारो गित इति सन्धिप्रतिषेधार्थः। शकारः सर्वादेशार्थः ॥

**१०९६ आतोऽपः** ।४।२।३६। धातोर्लिवर्जितलादेशस्य आतः अतः परस्य इय् भवति न पितः ॥ लुव्य्योर्वल्काविति यलुक्। एङ्। झोऽन्तः ॥

**१०९७ थासस्से** ।१।४।९५। टितो लस्थासस्से भवति ॥ ध्वमिलोरति एद इति लुक्। मवयोरात्। एधते एधेते एधन्ते। एधसे एधेथे एधध्वे। एधे एधावहे एधामहे ॥ एवं स्पर्धि सङ्घर्षे ॥ स्पर्द्धते स्पर्द्धेते स्पर्द्धन्ते ॥ वदुङ् स्तुत्यभिवादनयोः ॥ उङावितौ। वन्दते वन्देते वन्दन्ते इत्यादि आत्मनेपदिधातवोऽन्येऽपि नेतव्याः ॥ डुपचीष् पाके। डुशब्दे-कारषकारा इतः पूर्ववल्लडादयः। पचति पचतः पचन्ति। पचसि पचथः पचथ। पचामि पचावः पचामः ॥

**१०९८ ञीदिदपवदानुपसर्गज्ञः** ।१।४।६६। ञितः ईदितः अपवदः अनुपसर्गस्य जानातेर्धातोर्लः कर्तरि फलेशे तङ् भवति ॥ शेषं प्राग्वत्। पचते पचेते पचन्ते। पचसे पचेथे पचध्वे। पचे पचावहे पचामहे ॥ एवं णीञ् प्रापणे। ञ इत् फलेशे तङर्थः ॥

**१०९९ आदेः ष्णोऽष्वक्कष्ट्याष्ठीवः स्नम्** ।४।२।२६१। धातोरादेः षस्य सो भवति णस्य नः न ष्वक्कष्ट्याष्ठीवाम् ॥ पूर्ववल्लडादि। ञित्त्वादुभयपदित्वं। नयति नयतः नयन्तीत्यादि। नयते नयेते नयन्ते इत्यादि ॥

---

१ वहेरिः वही स च आम् च तस्य। 'ए टितः' इत्यनेनैव वहेरित एद्भवति तथापि गेश् विधानं सन्धिनिषेधार्थम्। अन्यथा सन्धिर्भवत्येव। शकारः सर्वादेशार्थः। आमो यथा सर्वादेशस्तथा वहेरपि प्रसंगे वहेरिरिति इकारप्रश्लेषः ॥

२ ष्वष्क गतौ। ष्टै स्त्यै संघाते च। ष्ठीवु निरसने ॥

**११०० तस्यागतात्र्थाधिपर्यर्चास्वत्यतिक्रमात्युपसर्गः प्राक्** ।१।१।२५। धातोस्सम्बन्धी प्रादिरुपसर्गसंज्ञो भवति ततः प्राक्च नियमेन प्रयोज्यः । गतार्थावधिपरी अर्चायां स्वती अतिक्रमेऽति च वर्जयित्वा ॥ इत्यपपूर्वाद्वदेः अपवदति अपवदते इत्यादि उभयपदिधातवोऽन्येऽपि नेतव्याः । प्र परा अप सम् अनु अव निर् दुर् वि आङ् नि अधि अपि अति सु उद् अभि प्रति परि उप इति प्रादयो विंशतिः ॥

**११०१ अनद्यतने लङ्** ।४।३।२०७। न्यायोत्थानसंवेशनमध्यकालोऽद्यतनः । ततोऽन्यस्मिन्ननद्यतने भूते वर्तमानाद्धातोर्लङ् भवति ॥ ङ इत् 'एङितो लुगिति' विशेषणार्थः । अदित् "श्लेले यगिति ।११७१।" विशेषणार्थः । शबादि ॥

**११०२ लङ्लुङ्लृङ्क्ष्वमाङाट्** ।४।२।१३१। धातोर्लङि लुङि लृङि च अट् भवति न माङ्योगे ॥ ट इत् टिदादिः ॥

---

१ प्रकरणाद्युपायान्तरेण गतो निश्चितोऽर्थो ययोस्तौ गतार्थौ । अधिश्च परिश्च अधिपरी । सुश्च अतिश्च स्वती । अर्चायां पूजार्थे स्वती अर्चास्वती । फले निष्पन्ने क्रियायाः प्रवृत्तिरतिक्रमः । अतिक्रमेऽर्थे अतिस्तथोक्तः । पुनर्द्वन्द्वः पश्चात् नञ्समासः अगतेत्यादि किं? अध्यागच्छति आगच्छत्यधि । पर्यागच्छति आगच्छति परि । उपरिभावस्य च प्रकरणादेः प्रतिपत्तौ गतार्थत्वमप्रतिपत्तौ अध्यागच्छति पर्यागच्छतीति प्राक्त्वमेव ॥ अर्चास्वती सुसिक्तं भवता । अतिसुतं भवता । अत्र धात्वर्थः प्रशस्यते अन्यत्र सुषिक्तं किं तवात्रेति धात्वर्थः कुत्स्यते । अतिक्रमे अतिः अतिसिक्तमेव भवता । अतिस्तुत्वा । यदर्थं क्रिया तस्मिन् क्रियाकार्ये निष्पन्नेऽपि प्रवृत्तिरतिक्रमः ॥ प्रागधिकारः कुतो विज्ञायते? प्राक्चेत्यत एव निर्देशात् । यद्यन्ययमपि धातोः प्रागेव स्यात् प्राक्चेत्ययं च शब्दस्य परतो निर्देशो नोपपद्येत । अव्ययत्वाद्धातोर्विज्ञायते । अत एव प्रागेवायमधिकार इति ॥ न केवलमुपसर्गसञ्ज्ञा एव किन्तु पूर्वं च धातोः प्रयुज्यते इत्यनेन सञ्ज्ञा प्रयोगनियमश्च क्रियते । तदभिव्यक्त्यर्थश्चकारः ॥

२ न विद्यतेऽद्यतनो यस्मिन्निति बहुव्रीहिपरिग्रहः किं? अद्य ह्यो भुंक्ष्महि इति व्यामिश्रे भूतसामान्ये च मा भूत् । जम्बूद्वीपं विदेहेऽभूदितः सप्तमजन्मनि । भूतानद्यतने लङ्विषयेऽपि भूतमात्रविवक्षायां लुङ् ॥

३ विषये सतीत्यध्याहार्यं विषयविज्ञानाद्व्यिकरणव्यवधानेऽपि भवति ॥

**११०३ ऐर्ङितो लुक्** ।१।४।१०५। ङिल्लादेशस्यातङः इतो लुम्भवति ॥

**११०४ तस्थस्थवस्मस्मेस्तान्तन्तवमां लेटश्च** ।१।४।११४। ङितो लस्य लेटश्च तसादीनां षण्णां यथासङ्ख्यं तामादयो भवन्ति ॥ झोऽन्तस्तस्य पदस्येति लुक् शेषं प्राग्वत्। अभवत् अभवताम् अभवन्। अभवः अभवतम् अभवत। अभवम् अभवाव अभवाम ॥

**११०५ आरैजाद्यचः** ।४।२।१३२। अजादेर्धातोर्लङ्लुङ्लृङ्षु आदेरचः आरैचो भवन्ति न माङ्योगे ॥ लङि टित्त्वाभावात् एत्वादि न भवति। ऐधत ऐधेताम् ऐधन्त। ऐधथाः ऐधेथाम् ऐधध्वम्। ऐधे ऐधावहि ऐधामहि ॥ एवमन्येऽप्यात्मनेपादिनः॥ अपचत् अपचताम् अपचन्। अपचः अपचतम् अपचत। अपचम् अपचाव अपचाम ॥ अपचत अपचेताम् अपचन्त। अपचथाः अपचेथाम् अपचध्वम्। अपचे अपचावहि अपचामहि ॥ एवमन्येऽप्युभयपदिनः ॥

**११०६ प्रादिर्नाप्रत्यये** ।१।१।२४। प्रादिर्धातुर्न भवति न चेत्ततः प्रत्ययः परो भवति ॥ इत्यधातुत्वात्तं व्युदस्याडादि। अपावदत् अपावदताम् अपावदन् इत्यादि। अपावदत अपावदेताम् अपावदन्त इत्यादि ॥

**११०७ लिङ्लेटावाशिषि** ।४।४।१३६। आशिषि धातोर्लिङ्लेटौ भवतः ॥ इति लेट्। ट इत् उक्तार्थः। एकारः लेटश्चेति विशेषणार्थः ॥

**११०८ सीम्येर्ह्युन्याम्** ।१।४।११४। लेटस्सेर्हिर्भवति इत उत् मेर्निः एत आम् ॥

---

१ अतङ इति किं? अपचावहि। इकारान्तविज्ञानाद्वाहरङ्गत्वाच्चेह न भवति अरुदिताम् अरुदित ॥

२ आशंसनमाशीः। आङः शासु इच्छायां धातुः। आशिषि गम्यमानायां धातोर्लिङ्लेटौ भवतः ॥

३ सिश्च इश्च मिश्च एश्च सीम्येस्तस्य। हिश्च उश्च निश्च आम् च ह्युन्याम्। लेटः सि इ मि ए इत्येतेषां यथासंख्यं हि उः नि आम् इत्येते आदेशा भवन्ति। हिन्योरिकारस्योच्चारणसामर्थ्यात् उत्वं प्रागेव क्रियते। इवहिमहिङां परविधिरेव ॥

**११०९ तुह्योस्तात्ङ्वाशिषि** ।१।४।१२२। आशिषि तुह्योस्तात्ङ्वा भवति ॥

**१११० अतो हेः** ।४।२।३९। अतः परस्य हेर्ङिवर्जितलादेशस्य लुग्भवति ॥

**११११ म्वेनादेष्टाप्** ।१।४।११५। लेटो म्वेनादेष्टाप् भवति ॥ टपावितौ । दीर्घः । भवतु भवताद्वा भवतां भवन्तु । भव भवताद्वा भवतं भवत । भवानि भवाव भवाम ॥ एवमन्येऽपि परस्मैपदिनः ॥

**१११२ स्वो वाम्** ।१।४।११७। लेटः सात्परस्य एतो वो भवति वात्परस्य अम् ॥

**१११३ एतोऽगेप्** ।१।४।११६। लेटो म्वेनादेरेतः ऐप् भवति न गित् ॥ शेषं प्राग्वत् । एधताम् एधेताम् एधन्ताम् । एधस्व एधेथाम् एधध्वम् । एधै एधावहै एधामहै । एवमन्येऽप्यात्मनेपदिनः ॥ पचतु पचताद्वा पचतां पचन्तु । पच पचताद्वा पचतं पचत । पचानि पचाव पचाम ॥ पचतां पचेतां पचन्तां । पचस्व पचेथां पचध्वं । पचै पचावहै पचामहै । एवमन्येऽप्युभयपादिनः ॥

**१११४ विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थने** ।४

---

१ मकारादेर्वकारादेरेकारादेशलेडादेशस्य टापागमो भवति । म्वेनः आदौ यस्य स म्वेनादिः इति लेडादेशस्य समुदायस्य विशेषणमादिशब्दः । अन्यथा एधन्तामित्यनकारस्यापि टापा भवितव्यम् ॥

२ अज्ञातज्ञापनं विधिरित्येके ॥ नियमेन कर्तव्यं आवश्येन क्रिया ॥ स्वाभिमुख्यकरणं निमन्त्रणमित्येके ॥ कामचारतः स्वेच्छया । कर्तव्येष्वनुज्ञापनमामन्त्रणमित्येके ॥ एषामुदाहरणानि विधौ कटं भवान् कुर्यात् करोतु ॥ ग्रामं भवान् गच्छेत् गच्छतु ॥ निमन्त्रणे सन्ध्यासु भवान् नियमं कुर्यात् करोतु । सूत्रं यथाक्रमं भवानधीयीत अधीताम् ॥ आमन्त्रणे इह भवानासीत आस्ताम् ॥ देवदत्तः पठेत् पठतु ॥ अधीष्टे तत्त्वं नो बोधयेयुः ( प्रसीदयेयुः? ) पूज्याः ॥ सम्प्रश्ने किंनु खलु भो व्याकरणमधीयीय धर्मशास्त्रमधीयीय? । किंनु खलु भो व्याकरणमध्ययै धर्मशास्त्रमध्ययै? ॥ प्रार्थने भवति मे प्रार्थना व्याकरणमधीयीय अध्ययै ॥ लेटो बाधनादावृत्तौ इह लङ् न भवति ॥

।४।१२६। विधिर्नियोगः। निमन्त्रणं नियमेन कर्तव्यम्। आमन्त्रणं कामचारतः कर्तव्यम्। अधीष्टः सत्कारपूर्वको व्यापारः। सम्प्रश्नः सम्प्रधारणं। प्रार्थना याच्ञा। एतेषु धातोर्लेङ्लेटौ भवतः॥ इति लेङ्। ङकावितौ अतस्तिबादयः॥

**१११५ ङ्याद्क्यासद्** ।१।४।१०९। लेङोऽतङो ङ्याड् भवति लिङः क्यासद्॥ ङटका इतः॥

**१११६ इय्यः** ।४।२।२५। अलेर्लेः या इत्यस्य अतः परस्य इय् भवति॥ वलि यलुक्॥

**१११७ लेलेः** ।१।४।१०८। लेङ्लिङोर्झेर्जुस् भवति॥ ज इत् शेषं प्राग्वत्। भवेत् भवेतां भवेयुः। भवेः भवेतं भवेत। भवेयं भवेव भवेम॥ तङि॥

**१११८ टीय्** ।१।४।१११। लेङ्लिङोस्तङष्टीय् भवति॥ टिदादिः। वलि यलुक्। शेषं प्राग्वत्॥

**१११९ रन्नौ झेलोः** ।१।४।११०। लेङ्लिङोर्झस्य रन् भवति इलोऽत्॥ एधेत एधेयाताम् एधेरन्। एधेथाः एधेयाथाम् एधेध्वम्। एधेय एधेवहि एधेमहि॥ एवमन्येऽप्यात्मनेपदिनः॥ पचेत् पचेतां पचेयुः। पचेः पचेतं पचेत। पचेयं पचेव पचेम॥ पचेत पचेयातां पचेरन्। पचेथाः पचेयाथां पचेध्वं। पचेय पचेवहि पचेमहि॥ एवमन्येऽप्युभयपदिनः सार्वधातुके नेयाः॥ अद भक्षणे पूर्ववल्लडादयः॥

**११२० ह्वदादेः श्लुब्लुक्** ।४।३।२१। ह्वादेः शपः श्लुप् भवति अदादेः श्लुक्॥ चरिति चर्। अत्ति अत्तः अदन्ति। अत्सि अत्थः अत्थ। अद्मि अद्वः अद्मः॥ शीङ् स्वप्ने॥ ङ इत् ततो लडादयः॥

**११२१ एङ्शीङः** ।४।२।३। शीङः श्लेले इति शकारेत्प्रत्यये लेटि लेङि लटि लङि च परे एद्भवति॥ अतः परत्वाभावादात इय् न भवति॥

**११२२ शीङो रत्** ।१।४।९१। शीङः परस्य झस्य रद्भवति॥

शेषं प्राग्वत् । शेते शयाते शेरते । शेषे शयाथे शेध्वे । शये शेवहे शेमहे ॥ ब्रूञ् व्यक्तायां वाचि ॥ ञ इत् ततो लडादि । पिति ॥

११२३ **ब्रुव ईट्** ।४।२।२५। ब्रुञः परस्य अलेर्लेः अकुङ्ङितो हलादेरीट् भवति ॥ ट इत् । टिदादिः । एङ्क्वौ । तसादौ ॥

११२४ **श्नस्यक्लौ** ।४।१।१४७। धातोश्शिति लादेशे च ङिद्वद्भवति न पिल्लिङ्लिट्सु ॥ इति क्त्विवाभेङ्क्वौ । भ्रूहल्स्युव् । ब्रवीति ब्रूतः ब्रुवन्ति । ब्रवीषि ब्रूथः ब्रूथ । ब्रवीमि ब्रूवः ब्रूमः ॥ तङि ॥

११२५ **तङोऽनतः** ।१।४।९०। अनतस्तङो झस्य अद्भवति ॥ शेषं प्राग्वत् । ब्रूते ब्रुवाते ब्रुवते । ब्रूषे ब्रुवाथे ब्रूध्वे । ब्रुवे ब्रूवहे ब्रूमहे ॥

११२६ **ब्रुवस्तिप्पञ्चतो णश्पञ्चत् ब्रुवश्चाहः** ।१।४।१०४। ब्रुवो लटस्तिपः णश् वा भवति तसोऽतुस् झेरुस् सिपस्थ थसोऽथुस् ब्रुवश्चाह इत्यादेशः ॥ णशावितौ अदुच्चारणार्थः ॥

११२७ **थ्याहः** ।४।२।८२। ब्रुव आहस्थे तो भवति । आह आहतुः आहुः । आत्थ आहथुः ॥ लङि ॥

११२८ **अदोऽट्** ।४।२।२८। अदः परस्य अलेर्लेः अकुङ्ङितो हलादेरट् भवति ॥ आरैच् । आदत् आत्ताम् आदन् । आदः आत्तम् आत्त । आदम् आद्व आद्म ॥ अशेत अशयाताम् अशेरत । अशेथाः अशयाथाम् । अशेध्वम् । अशयि अशेवहि अशेमहि ॥ अब्रवीत् अब्रूताम् अब्रुवन् ।

---

१ तङो झकारस्य अनतः अनकारादुत्तरस्य अत् इत्ययमादेशो भवति । च्युङ् गतौ च्यवन्ते प्लवन्ते अत्र परत्वाच्च शपि कृते अकारात्परो झकारः इति अदित्यादेशो न स्यात् ॥

२ ब्रुवो लटः तिप् तस् झि । सिप् थस् इत्येतेषां पञ्चानां यथासंख्यं णश् अतुस् उस् थ अथुस् इत्येते पञ्चादेशा भवन्ति । तत्संयोगे च ब्रुव आहादेशो भवति ॥ पञ्चानां वर्गः पञ्चवत् तिपां पञ्चवत् तिप्पञ्चवत् । णशां पञ्चवत् णश्पञ्चवत् ॥

अब्रवीः अब्रूतम् अब्रूत । अब्रवम् अब्रूव अब्रूम ॥ अब्रूत अब्रुवाताम् अब्रुवत । अब्रूथाः अब्रुवाथाम् अब्रूध्वम् । अब्रुवि अब्रूवहि अब्रूमहि ॥ लेटि ॥

**११२९ जल्होर्हो धिः** ।४।२।३२। जलन्ताज्जुहोतेश्च धातोः परस्य अलेर्लेः हस्य धिर्भवति ॥ इदुच्चारणार्थः शेषं प्राग्वत् ॥ अत्तु अत्ताद्वा अत्ताम् अदन्तु । अद्धि अत्ताद्वा अत्तम् अत्त । अदानि अदाव अदाम ॥ शेतां शयातां शेरतां । शेष्व शयाथां शेध्वं । शयै शयावहै शयामहै ॥

**११३० हि चाप्** ।१।४।१२३। हि च ताश्च पिन्न भवति ॥ अपिति हल्यब्लाविति ङिद्वद्भावादेडीटौ न भवतः । ब्रवीतु ब्रूताद्वा ब्रूतां ब्रुवन्तु । ब्रूहि ब्रूताद्वा ब्रूतं ब्रूत । ब्रवाणि ब्रवाव ब्रवाम ॥ ब्रूतां ब्रुवातां ब्रुवतां । ब्रूष्व ब्रुवाथां ब्रूध्वं । ब्रवै ब्रवावहै ब्रवामहै ॥ लेङि ॥

**११३१ श्लुंगुसि** ।४।२।३७। उसि आतः श्लुग्भवति ॥ शेषं प्राग्वत् । अद्यात् अद्याताम् अद्युः । अद्याः अद्यातम् अद्यात । अद्याम् अद्याव अद्याम ॥ शयीत शयीयातां शयीरन् । शयीथाः शयीयाथां शयीध्वं । शयीय शयीवहि शयीमहि ॥ ब्रूयात् ब्रूयातां ब्रूयुः । ब्रूयाः ब्रूयातं ब्रूयात । ब्रूयां ब्रूयाव ब्रूयाम ॥ ब्रुवीत ब्रुवीयातां ब्रुवीरन् । ब्रुवीथाः ब्रुवीयाथां ब्रुवीध्वं । ब्रुवीय ब्रुवीवहि ब्रुवीमहि ॥ हु दानादनयोः ॥ ततो लडादयः । ह्वादेः श्लुब्लुगिति शपः श्लुप् ॥

**११३२ द्विर्धातुः श्लुब्लिङ्ङे प्रत्यये प्राक् त्वच्यच्चः** ।४।१।४३। श्लुपि लिटि ङे च प्रत्यये धातुर्द्विर्भवति । अजादौ तु परे तन्निमित्तात् अच्कार्यात्प्रागेव द्विः ॥

**११३३ कुह्रोश्चुः** ।४।१।८४। द्विर्भावे पूर्वस्य कुहयोश्चुर्भवति ॥ आसन्न इति घोषवतो महाप्राणस्य तादृशो झः ॥

---

१ धातोर्यः उस् तस्मिन् परतः अकारस्य श्लुग्भवति । भिन्द्युः निन्द्युः । उसीति किं? भिन्द्यात् । धातोरित्येकारस्य विशेषणात् याटोऽप्याकारस्य भवत्येव । शित्व-मुत्तरार्थम् ॥

**११३४ आण्जश्चज्झषः** ।४।१।७७। द्विर्भावे पूर्वस्य ऋतोऽद्भवति अचोऽण् झषो जश् ॥ इति झस्य जः पित्योत् ॥

**११३५ द्व्युक्तिजक्षपञ्चतोऽत्** ।१।४।८९। द्विरुक्ताज्जक्षादिपञ्चकाच्च धातोः परस्य झः अद्भवति ॥ अन्तापवादः ॥

**११३६ ह्विणोऽचीकः श्लेले यञ्** ।४।२।१। हु इण् इत्येतयोरिकः अजादौ किति ङिति च श्लेले यञ् भवति ॥ इयुवपवादः । जुहोति जुहुतः जुह्वति । जुहोषि जुहुथः जुहुथ । जुहोमि जुहुवः जुहुमः ॥ ओहाङ् गतौ ॥ ओङावितौ पूर्ववल्लडादि ङित्त्वाल्लस्तङ् ॥

**११३७ पॄभृहाङ्माङामित्** ।४।१।९५। पॄ ऋ भृ हाङ् माङ् इत्येतेषां श्लुपि द्विर्भावे पूर्वस्याच इद्भवति ॥

**११३८ हल्यघोरीः** ।४।२।४८। श्राप्रत्ययस्य अज्ञेश्च धातोरातः अपिति यि च हलि लिवर्जितलादेशे ईद्भवति न घोः ॥

**११३९ श्राज्ज्ञेरातः** ।४।२।४७। श्राप्रत्ययस्य अज्ज्ञेश्च धातोरातः अपिति यि च लिवर्जितलादेशे लुग्भवति ॥ जिहीते जिहाते जिहते । जिहीषे जिहाथे जिहीध्वे । जिहे जिहीवहे जिहीमहे ॥ डुधाञ् धारणे च ॥ डुञावितौ ततो लडादि शपः श्लुपि द्विर्भावे पूर्वस्य जश्त्वात्त्वे ॥

**११४० दाधा घ्वब्** ।१।१।२३। दारूपो धारूपश्च धातुर्घुसंज्ञो

---

१ द्वे उक्ती यस्य स द्व्युक्तिः द्विरुक्त इत्यर्थः । पञ्चानां वर्गः पञ्चत् जक्षाणां पञ्चत् जक्षपञ्चत् जक्षादिपञ्चकमित्यर्थः । द्व्युक्तिश्च जक्षपञ्चच्च द्व्युक्तिजक्षपञ्चत् तस्मात् । द्विरुक्ताज्जक्षादिभ्यः पञ्चभ्यः परस्यादेशावयवस्य झकारस्यादित्ययमादेशः ॥ अन्तादेशापवादः । अतदर्थमेवेदं वचनम् । तङि उत्तरेण भवतीति झेरेवात्रोदाहृतम् ॥

२ दारूपाश्चत्वारः । दाण् दाने । दोऽवखण्डने । देङ् रक्षणे । डुदाञ् दाने । धारूपौ द्वौ धेट् पाने । डुधाञ् धारणे । दाश्च धौ च दाधाः । दाधा इति सञ्ज्ञिनां पुंबहुत्वनिर्देशेऽपि तत्समानाधिकरणे घ्विति सञ्ज्ञानिर्देशो सामान्याश्रयणान्नपुंसकमेव वचनम् । अवित्ययं निर्देशः पकारे बकारे च समानः । पकारस्यापि जश्त्वे चर्त्वस्य पाक्षिकत्वादत्र सन्देहः किं न विद्यते बकारोऽस्येत्यावित्युच्यते उत न विद्यते पकारोऽस्येति ? तत्र यद्ययं पकारः स्यात् प्रणिबापयतीत्यत्रापि प्रतिषेधः स्यात् । अतोऽयं बकारः । दाब् दैबो बत्वकरणात् यदि चायं पकारः स्यादसन्देहार्थं पकार एव सूत्रे उच्चार्यो न बकारः ॥

भवति न पित् ॥ इति गुत्वात् हृल्यघोरीरिति ईत्व भवति। आतो लुक् ॥

**११४१ धाञो जलि च** ।१।२।७७। झषन्तस्य धाञो बशो भष् भवति जलादौ प्रत्यये परे ॥ शेषं प्राग्वत्। दधाति धत्तः दधति। दधासि धत्थः धत्थ। दधामि दध्वः दध्मः ॥ धत्ते दधाते दधते। धत्से दधाथे धद्ध्वे। दधे दध्वहे दध्महे ॥ लङि ॥

**११४२ सिविदञ्झेरभ्वः** ।१।४।१०७। सिप्रत्ययाद्विदः अज्झेश्च ङितो लः झेर्जुस् भवति न भुवः ॥ ज इत् ॥

**११४३ जुस्पक्ष्येङ्ः** ।४।२।१६। धातोरिकः जुसि पाकि च एङ्रो भवन्ति ॥ अजुहोत् अजुहुताम् अजुहवुः। अजुहोः अजुहुतम् अजुहुत। अजुहवम् अजुहुव अजुहुम ॥ आजिहीत आजिहाताम् आजिहत। आजिहीथाः आजिहाथाम् आजिहीध्वम्। आजिहि आजिहीवहि आजिहीमहि ॥ अदधात् अदत्ताम् अदधुः। अदधाः अदत्तम अधत्त। अदधाम् अदध्व अदध्म ॥ अधत्त अदधाताम् अदधत। अधत्थाः अदधाथाम् अधध्वम्। अदधि अदध्वहि अदध्महि ॥ लेटि हेर्धिः शेषं प्राग्वत्। जुहोतु जुहुताद्वा जुहुतां जुह्वतु। जुहुधि जुहुताद्वा जुहुतं जुहुत। जुहवानि जुहवाव जुहवाम ॥ जिहीतां जिहातां जिहतां। जिहीष्व जिहाथां जिहीध्वं। जिहै जिहावहै जिहामहै ॥

**११४४ घोर्हि** ।४।१।६८। घोर्हौ अच एद्भवति न च द्विः ॥ दधातु धत्ताद्वा धत्तां दधतु। धेहि धत्ताद्वा धत्तं धत्त। दधानि दधाव दधाम ॥ धत्तां दधातां दधतां। धत्स्व दाधाथां धद्ध्वं। दधै दधावहै दधामहै ॥ लेङि। जुहुयात् जुहुयातां जुहुयुः। जुहुयाः जुहुयातं जुहुयात। जुहु-

---

१ घुसंज्ञस्य धातोर्हकारादौ प्रत्यये हि इत्यस्मिन् लेडादेशे परे अच एकारादेशो भवति न च द्विः। प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणमिति घुग्रहणे यङ्लुगन्तस्यापि ग्रहणमिति। घुग्रहणे यङ्लुगन्तस्यापि हौ तदन्तस्याच एत्वं न च द्विरिति कृतस्यापि द्विर्वचनस्य निवृत्तिः ॥ यङ्लुकि सर्वस्यापि घुसंज्ञकस्य धारूपस्य धेहि दारूपस्य देहि इत्येव रूपं भवति ॥

यां जुहुयाव जुहुयाम ॥ जिहीत जिहीयातां जिहीरन् । जिहीथाः जिहीयाथां जिहीध्वं । जिहीय जिहीवहि जिहीमहि ॥ दध्यात् दध्यातां दध्युः । दध्याः दध्यातं दध्यात । दध्यां दध्याव दध्याम ॥ दधीत दधीयातां दधीरन् । दधीथाः दधीयाथां दधीध्वं । दधीय दधीवहि दधीमहि ॥ दिवू क्रिडाविजिगीषाव्यवहारद्युतिस्तुतिकान्तिमोदमदस्वप्नगतिषु ॥ ऊदित् । ततो लडादि ॥

**११४५ दिवादेः श्यः** ।४।३।२२। दिवादिभ्यः कर्तरि श्लेले श्यो भवति ॥ श इत् शपोऽपवादः । शित्त्वात् ङिद्वद्भावेन एङ्गो न भवन्ति । धातोर्भ्वीग्दीर्घ इति दीर्घः । दीव्यति दीव्यतः दीव्यन्ति । दीव्यसि दीव्यथः दीव्यथ । दीव्यामि दीव्यावः दीव्यामः ॥ षुङौ प्राणिप्रसवे ॥ औङावितौ । आदेः ष्ण इति षस्य सः ङित्त्वाल्लस्तङ् । शेषं प्राग्वत् । सूयते सूयेते सूयन्ते । सूयसे सूयेथे सूयध्वे । सूये सूयावहे सूयामहे ॥ णहीं बन्धने ॥ ईदित् । णस्य नः । नह्यति नह्यतः नह्यन्ति । नह्यसि नह्यथः नह्यथ । नह्यामि नह्यावः नह्यामः ॥ नह्यते नह्येते नह्यन्ते । नह्यसे नह्येथे नह्यध्वे । नह्ये नह्यावहे नह्यामहे ॥ लङि । अदीव्यत् अदीव्यताम् अदीव्यन् इत्यादि ॥ असूयत असूयेताम् असूयन्त इत्यादि ॥ अनह्यत् अनह्यताम् अनह्यन् । इत्यादि ॥ अनह्यत अनह्येताम् अनह्यन्त । इत्यादि ॥ लेटि । दीव्यतु दीव्यताद्वा दीव्यतां दीव्यन्तु । इत्यादि ॥ सूयतां सूयेतां सूयन्ताम् इत्यादि ॥ नह्यतु नह्यताद्वा नह्यतां नह्यन्तु । इत्यादि ॥ नह्यतां नह्येतां नह्यन्ताम् इत्यादि ॥ लेङि । दीव्येत् दीव्येतां दीव्येयुः इत्यादि ॥ सूयेत सूयेयातां सूयेरन् इत्यादि ॥ नह्येत् नह्येतां नह्येयुः इत्यादि ॥ नह्येत नह्येयातां नह्येरन् इत्यादि ॥ षुञ् अभिषवे । ञ इत् । षस्य सः । लडादिः ॥

**११४६ स्वादेः** ।४।३।२८। स्वादिभ्यो धातुभ्यः कर्तरि श्लेले श्नु-

१ धातोर्भ्वीग्दीर्घोऽयहल्नि चाच्छुर्कुरोरित्यत्र अयहल्नीति प्रतिषेधात् कथं इदीर्घो भवतीति न शंकनीयं । तत्र अयहल्नीति निरनुबन्धकयप्रत्यये परे दीर्घनिषेधात् अत्र सानुबन्धकयप्रत्ययत्वाद्दीर्घो भवत्येव ॥

भवति ॥ श इत् । श्लुङ्लाविति ङिद्वद्भावार्थः । अत एव नैङ् ॥

**११४७ म्वि लुग्वा** ।४।२।४१। असंयोगात्परस्य प्रत्ययस्योतः मवयोर्लुग्वा भवति ॥ शेषं प्राग्वत् । सुनोति सुनुतः सुन्वन्ति । सुनोषि सुनुथः सुनुथ । सुनोमि सुन्वः सुनुवः सुन्मः सुनुमः ॥ अशौङ् व्याप्तौ ॥ औङावितौ पूर्ववल्लडादि । न शादिति श्नुत्वाभावः । संयोगात्परत्वादुतो लुम्न भवति । अश्नुते अश्नुवाते अश्नुवते । अश्नुषे अश्नुवाथे अश्नुध्वे । अश्नुवे अश्नुवहे अश्नुमहे ॥ चिञ् चयने ञ इत् पूर्ववत्प्रक्रिया । चिनोति चिनुतः चिन्वन्ति । चिनोषि चिनुथः चिनुथ । चिनोमि चिन्वः चिनुवः चिन्मः चिनुमः ॥ चिनुते चिन्वाते चिन्वते । चिनुषे चिन्वाथे चिनुध्वे । चिन्वे चिन्वहे चिनुवहे चिन्महे चिनुमहे ॥ लङि ॥ असुनोत् असुनुताम् असुन्वन् । असुनोः असुनुतम् असुनुत । असुनवम् असुन्व असुनुव असुन्म असुनुम ॥ आश्नुत आश्नुवाताम् आश्नुवत । आश्नुथाः आश्नुवाथाम् आश्नुध्वम् । आश्नुवि आश्नुवहि आश्नुमहि ॥ अचिनोत् अचिनुताम् अचिन्वन् । अचिनोः अचिनुतम् अचिनुत । अचिनवम् अचिन्व अचिनुव अचिन्म अचिनुम ॥ अचिनुत अचिन्वाताम् अचिन्वत । अचिनुथाः अचिन्वाथाम् अचिनुध्वम् । अचिन्वि अचिन्वहि अचिनुवहि अचिन्महि अचिनुमहि ॥ लेटि ॥

**११४८ असंयोगादोः** ।४।२।४०। असंयोगात्परो य उत्ततः परस्य हेः श्लुग्भवति ॥ सुनोतु सुनुताद्वा सुनुतां सुन्वन्तु । सुनु सुनुताद्वा सुनुतं

---

१ असंयोगात्परो य उकारस्तदन्तो यः प्रत्ययो धातोस्तस्य मकारादौ चापिति लिवर्जितलादेशे परे लुग्वा भवति ॥ प्रत्ययविशेषणादिह न भवति युवः युमः । असंयोगादिति किं? अर्णुवः अर्णुमः तर्णुवः तर्णुमः ॥ अपितीति किं? सुनोमि तनोमि । ऋणोञ् गतौ । उः । तृणोञ् अदने तनादिः । सुन्वतीत्यत्र श्नो हलः परत्वाभावात् भ्रूहल्श्नोरिति सूत्रेण उव् न भवति ॥ 'अस्वे' इति यत्नेव ॥

२ असंयोगात्परो य उकारस्तदन्तो यः प्रत्ययो धातोस्ततः परस्य हकारादेर्लिवर्जितलादेशस्य श्लुग्भवति ॥ कुरु तनु चिनु ॥ असंयोगादिति किं? अर्णुहि । ओरित्यतो विशेषणादिह न भवति सुहि रुहि । ह इति किं? तनुतात् त्वम् ॥

सुनुत । सुनवानि सुनवाव सुनवाम ॥ अश्नुताम् अश्नुवाताम् अश्नुवताम् । अश्नुष्व अश्नुवाथाम् अश्नुध्वम् । अश्नवै अश्नवावहै अश्नवामहै ॥ चिनोतु चिनुताद्वा चिनुतां चिन्वन्तु । चिनु चिनुताद्वा चिनुतं चिनुत । चिनवानि चिनवाव चिनवाम ॥ चिनुतां चिन्वातां चिन्वतां । चिनुष्व चिन्वाथां चिनुध्वं । चिनवै चिनवावहै चिनवामहै ॥ लिङि ॥ सुनुयात् सुनुयातां सुनुयुः । सुनुयाः सुनुयातं सुनुयात । सुनुयां सुनुयाव सुनुयाम ॥ अश्नुवीत अश्नुवीयाताम् अश्नुवीरन् । अश्नुवीथाः अश्नुवीयाथाम् अश्नुवीध्वम् । अश्नुवीय अश्नुवीवहि अश्नुवीमहि ॥ चिनुयात् चिनुयातां चिनुयुः । चिनुयाः चिनुयातं चिनुयात । चिनुयां चिनुयाव चिनुयाम ॥ चिन्वीत चिन्वीयातां चिन्वीरन् । चिन्वीथाः चिन्वीयाथां चिन्वीध्वं । चिन्वीय चिन्वीवहि चिन्वीमहि ॥ डुक्रीञ् द्रव्यविनिमये ॥ डुञावितौ प्राग्वल्लडादि ॥

**११४९ क्र्यादेः** ।४।३।३०। क्र्यादिभ्यो धातुभ्यः कर्तरि श्ले श्नाप्रत्ययो भवति ॥ श इत् । शिस्त्वान्ङ् । हलादौ । हल्यघोरीरिति ईत् । अच्यातो लुक् णत्वं । क्रीणाति क्रीणितः क्रीणन्ति । क्रीणासि क्रीणीथः क्रीणीथ । क्रीणामि क्रीणीवः क्रीणीमः ॥ वृङ् संभक्तौ ॥ ङ इत् लडादि । वृणीते वृणाते वृणते । वृणीषे वृणाथे वृणीध्वे । वृणे वृणीवहे वृणीमहे ॥ ग्रही उपादाने । ईदित् । लडादि ॥

**११५० वशिव्यचिव्यधिज्याग्रहिव्रश्चिप्रच्छिभ्रज्जां क्ङिति** ।४।१।११६। वश्यादीनां किति ङिति च प्रत्यये परे साचो यञः इग्भवति ॥ शेषं प्राग्वत् । गृह्णाति गृह्णीतः गृह्णन्ति । गृह्णासि गृह्णीथः गृह्णीथ । गृह्णामि गृह्णीवः गृह्णीमः ॥ गृह्णीते गृह्णाते गृह्णते । गृह्णीषे गृह्णाथे गृह्णीध्वे । गृह्णे गृह्णीवहे गृह्णीमहे ॥ लङि ॥ अक्रीणात् अक्रीणीताम् अक्री-

---

१ स्तन्भूस्तुन्भूस्कन्भूस्कुन्भूस्कोः श्ना च ।४।३।२९। इत्यधिकृत्य ॥

२ वश कान्तौ । व्यच् व्याजीकरणे । व्यध ताडने । ज्या वयोहानौ । ग्रही उपादाने । ओव्रश्चौ च्छेदने । प्रच्छ ज्ञीप्सायाम् । भ्रस्ज पाके ॥

णन्। अक्रीणाः अक्रीणीतम् अक्रीणीत। अक्रीणाम् अक्रीणीव अक्रीणीम॥ अवृणीत अवृणाताम् अवृणत। अवृणीथाः अवृणाथाम् अवृणीध्वम्। अवृणि अवृणीवहि अवृणीमहि॥ अगृह्णात् अगृह्णीताम् अगृह्णन्। अगृह्णाः अगृह्णीतम् अगृह्णीत। अगृह्णाम् अगृह्णीव अगृह्णीम॥ अगृह्णीत अगृह्णाताम् अगृह्णत। अगृह्णीथाः अगृह्णाथाम् अगृह्णीध्वम्। अगृह्णि अगृह्णीवहि अगृह्णीमहि॥ लोटि। क्रीणातु क्रीणीताद्वा क्रीणीतां क्रीणन्तु। क्रीणीहि क्रीणीताद्वा क्रीणीतं क्रीणीत। क्रीणानि क्रीणाव क्रीणाम॥ वृणीतां वृणातां वृणतां। वृणीष्व वृणाथां वृणीध्वं। वृणै वृणावहै वृणामहै॥

११५१ **हलः श्नः शानज्झौ**।४।१।२१। हलन्ताद्धातोः परस्य श्नः हौ परे शानो भवति॥ अतो हे इति हेर्लुक्। गृह्णातु गृह्णीताद्वा गृह्णीतां गृह्णन्तु। गृहाण गृह्णीताद्वा गृह्णीतं गृह्णीत। गृह्णानि गृह्णाव गृह्णाम॥ गृह्णीतां गृह्णातां गृह्णतां। गृह्णीष्व गृह्णाथां गृह्णीध्वं। गृह्णै गृह्णावहै गृह्णामहै॥ लेङि॥ क्रीणीयात् क्रीणीयातां क्रीणीयुः। क्रीणीयाः क्रीणीयातं क्रीणीयात। क्रीणीयां क्रीणीयाव क्रीणीयाम॥ वृणीत वृणीयातां वृणीरन्। वृणीथाः वृणीयाथां वृणीध्वं। वृणीय वृणीवहि वृणीमहि॥ गृह्णीयात् गृह्णीयातां गृह्णीयुः। गृह्णीयाः गृह्णीयातं गृह्णीयात। गृह्णीयां गृह्णीयाव गृह्णीयाम॥ गृह्णीत गृह्णीयातां गृह्णीरन्। गृह्णीथाः गृह्णीयाथां गृह्णीध्वं। गृह्णीय गृह्णीवहि गृह्णीमहि॥ तुदी व्यथने॥ ईदित् लडादि॥

११५२ **तुदादिभ्यः शः**।४।१।२२। तुदादिभ्यः कर्तरि श्लेले शो भवति॥ श इत्॥

१ श्नाप्रत्ययस्य हौ परे शानादेशो भवति। हल इति किं? क्रीणीहि। श्न इति किं? स्तन्भुहि। स्तुन्भुहि। श्न इति स्थानिनिर्देशः आदेशसम्प्रत्ययार्थः। इतरथा हि सर्वविषयः क्रियाविषयो वा प्रत्ययो विज्ञायेत। हाविति किं? स्तभ्नाति॥

[१]११५३ **ह्रस्वस्य हलः** ।४।२।१८। हलन्तस्य धातोर्ह्रस्वस्येक एङ्भवति अक्ङिल्लुग्धेतौ प्रत्यये परे ॥ इति प्राप्तौ शिति ङिद्वद्भावादेङ् न भवति । शेषं प्राग्वत् । तुदति तुदतः तुदन्तीत्यादि ॥ मृ प्राणत्यागे ॥

११५४ **म्रियतेर्लुङ्लिङ्ललेः** ।१।४।१६। म्रियतेः परेषां लुङ्लिङ्लट्लङ्लेट्लेङां तङो भवन्ति ॥

११५५ **रिः** ।४।२।१५। धातो ऋतः यङ्चक्क्याश्शेषु रिर्भवति ॥ ऋहलिति इय् । म्रियते म्रियेते म्रियन्ते । म्रियसे इत्यादि ॥ मुच्लृन् मोक्षणे ॥ लृञावितौ ॥

११५६ **लिपादितृफदृफगुफोभशुभः शे**[२] ।४।२।१९८। लिपादीनां तृफादीनां च धातूनां श परे नम् भवति ॥ अमावितौ । मित्त्वादन्त्यादचः परः ञ्नामिति नस्य ञः । मुञ्चति मुञ्चतः मुञ्चन्ति इत्यादि । मुञ्चते मुञ्चेते मुञ्चन्ते इत्यादि । लङि । अतुदत् अतुदताम् अतुदन् इत्यादि । अम्रियत अम्रियेताम् अम्रियन्त इत्यादि । अमुञ्चत् अमुञ्चताम् अमुञ्चन् इत्यादि । अमुञ्चत अमुञ्चेताम् अमुञ्चन्त ॥ लेटि ॥ तुदतु तुदताद्वा तुदतां तुदन्तु इत्यादि । म्रियतां म्रियेतां म्रियन्ताम् इत्यादि । मुञ्चतु मुञ्चताद्वा मुञ्चतां मुञ्चन्तु इत्यादि । मुञ्चतां मुञ्चेतां मुञ्चन्ताम् इत्यादि ॥ तुदेत् तुदेतां तुदेयुः इत्यादि । म्रियेत म्रियेयातां म्रियेरन् इत्यादि ॥ मुञ्चेत् मुञ्चेतां मुञ्चेयुः इत्यादि । मुञ्चेत मुञ्चेयातां मुञ्चेरन् ॥ तनूञ् विस्तारे ॥ ऊञावितौ ततो लङादि ॥

---

१ ह्रस्वस्येति ग्रहणं किं? पूरयति । कीर्तयति ॥ अक्ङिल्लुग्धेताविति किं? भिन्नः भिन्नवान् । सुत्वा सुत्वानौ सुत्वानः । बेभिदः ॥ अक्ङिल्लुग्धेतुरिति प्रसज्यप्रतिषेधादिह न भवति अनृच्छात् । हल इत्युत्तरार्थमिह हि पूर्वेणाव्यवहितस्य सिद्धे व्यवहितार्थमेतदिति विज्ञायते । एकदेशव्यवधानकृतार्थत्वाद्विधेरनेकवर्णव्यवधाने न भवति भिक्षते सन्धुक्षते भिनत्ति ॥ इको धातुनेह विशेषणादिह न भवति अकणिषं अकणिताश्वः रणिताश्वः ॥

२ तृफ तृन्फ तृप्तौ । दृफ दृन्फ उत्क्लेशे । गुफ गुन्फ ग्रथने । उभ उन्भ पूरणे शुभ शुन्भ शोभार्थे । लिपादिग्रहणं किं? तुदति । तृपादीनां शे नस्य लुगिति तृपादीनां नम्वचनं । शे इति किं? लेप्ता लेप्तुम् ॥

११५७ **कृञ्तनादेरुः** ।४।३।३३। कृञस्तनादिभ्यश्च श्लेले उर्भवति ॥ पित्येङ् । म्वि उग्वेति मवयोरुतो वा लुक् । तनोति तनुतः तन्वन्ति इत्यादि ॥ मनूङ् बोधने ॥ ऊङावितौ लडादि ङित्त्वात्तङ् । मनुते मन्वाते मन्वते इत्यादि ॥ डुकृञ् करणे । डुञावितौ लडादि अरि ॥

११५८ **अतःशि चोत्** ।४।२।४३। कृञोऽत उद्भवति शित्यपिति यि च लिवर्जितलादेशे च परतः ॥ अपिति ङित्त्वान्नेङ् ॥

११५९ **कुर्यि च** ।४।२।४२। कृञः परस्योतो लुग्नित्यं भवति मवादावपिति यि च लिवार्जितलादेशे परतः ॥ करोति कुरुतः कुर्वन्ति । करोषि कुरुथः कुरुथ । करोमि कुर्वः कुर्मः ॥ कुरुते कुर्वाते कुर्वते । कुरुषे इत्यादि ॥ लङि । अतनोत् अतनुताम् अतन्वन् इत्यादि ॥ अमनुत अमन्वाताम् अमन्वत इत्यादि ॥ अकरोत् अकुरुताम् अकुर्वन् इत्यादि ॥ अकुरुत अकुर्वाताम् अकुर्वत इत्यादि ॥ लेटि । तनोतु तनुताद्वा तनुतां तन्वन्तु इत्यादि॥ मनुतां मन्वातां मन्वतां इत्यादि ॥ करोतु कुरुताद्वा कुरुतां कुर्वन्तु इत्यादि॥ कुरुतां कुर्वातां कुर्वताम् इत्यादि ॥ लेङि ॥ तनुयात् तनुयातां तनुयुः इत्यादि ॥ मन्वीत मन्वीयातां मन्वीरन् इत्यादि ॥ कुर्यात् कुर्यातां कुर्युः इत्यादि ॥ कुर्वीत कुर्वीयातां कुर्वीरन् इत्यादि ॥ रुधृञ् आवरणे ॥ ऋञावितौ । लडादि ॥

११६० **रुधांन्नम् न्लुक् च**[1] ।४।३।३४। रुधादीनां कर्तरि श्लेले नम् भवति तेषां नस्य लुक् च भवति ॥ शपोऽपवादः म इत् ॥

११६१ **अधः** ।१।२।८०। अधाञो झषन्ताद्धातोः परयोस्तस्थयोर्धो भवति ॥ जश्त्वं ॥

११६२ **नमस्त्योर्लुक्**[2] ।४।२।४६। नम्विकरणस्य अस्तेश्च धातोरतः

---

१ षष्ठी बहुवचनम् मम्मो हल्तिावित परस्वोऽनुनासिकः । रुधादीनां धातूनां कर्तरि श्लेले नम् भवति । नकारस्य च लुक् । मित्वादयमन्त्यादचः परो वेदितव्यः । नमो मकारस्य विधानसामर्थ्यात् लुम भवति । अयं शपस्त्वेककार्यत्वाद्बाधकः ॥

२ अपितीति किं? रुणद्धि । अत इति किं? अन्त्यस्य मा भूत् । तकारः किं? आस्तां आसन् ॥ "जरि जरः स्वे वा ।१।१।१२३। हलन्तस्य स्वे जरि परे लुग्भवति वा ॥ भित्वः

शित्यपिति थि च लादेशे परे लुग् भवति ॥ चर्त्वं च । रुणद्धि रुन्द्धः रुन्धन्ति । रुणत्सि रुन्द्धः रुन्द्ध । रुणध्मि रुन्ध्वः रुन्ध्मः ॥ भुज पालनाभ्यवहारयोः ॥ अदिम् ॥

११६३ शपनाथशिक्षभुजादुपलम्भनाशीर्जिज्ञासात्राणे ।१।४।१२। शपो लस्तङ् भवति उपलम्भने नाथ आशिषि शिक्षो जिज्ञासायां भुजादत्राणे ॥ इत्यपालने तङ् कुत्वादि शेषं प्राग्वत् । भुङ्क्ते भुञ्जाते भुञ्जते । भुङ्क्षे भुञ्जाथे भुङ्ग्ध्वे । भुञ्जे भुञ्ज्वहे भुञ्ज्महे ॥ युजृन् योगे । ऋञावितौ पूर्ववत्प्रक्रिया । युनक्ति युङ्क्तः युञ्जन्ति । युनक्षि युङ्क्थ युङ्क्थ । युनज्मि युञ्ज्वः युञ्ज्मः ॥ युङ्क्ते युञ्जाते युञ्जते । युङ्क्षे युञ्जाथे युङ्ग्ध्वे । युञ्जे युञ्ज्वहे युञ्ज्महे ॥ लङि ॥

---

भिन्ताम् । भिन्त । स्वे इति किं? तत्त्वौ । इति चिन्तामणावुक्तम् " । रुन्द्धः इत्यत्र 'म्नां जय्यपदान्ते' इति सूत्रेण बहुवचनात् णत्वं बाधित्वा पदान्ते नकारमकारयोः परस्वोऽनुनासिको भवति जयि परे । विस्रम्भः इत्यादिवत् । पुनर्णत्वे प्राप्ते सकृद्बाधितो विधिर्बाधित एव ॥

१ शप नाथ शिक्ष भुज इत्येतेभ्यो यथासंख्यं उपलम्भनं आशिषि जिज्ञासायां अत्राणे च लकारस्य पूर्ववत्तङो भवन्ति ॥ शपः उपलम्भने उपलम्भनं प्रकाशनं देवदत्ताय शपते जिनदत्ताय शपते देवदत्तं प्रकाशयति एवंभूतोऽसाविति देवदत्तमाचष्टे इत्यर्थः । अथवा स्वाभिप्रायस्य परत्राविष्करणमुपलम्भनं शपथः । देवदत्ताय शपते इति वाचामात्रेण शरीरस्पर्शनेन वा देवदत्ते स्वाभिप्रायमाविष्करोतीत्यर्थः ॥ प्रोषितस्य वा भावाभावयोरुपलब्ध्यर्थयोः कस्यचिदासेवनमुपलम्भनं । देवदत्ताय शपते इति प्रोषिते देवदत्ते तस्य भावाभावयोरुपलब्ध्यर्थयोः कञ्चिदासेवते इत्यर्थः ॥ उपलम्भने इति किं? देवदत्तं शपति आक्रोशतीत्यर्थः ॥ आशिषि नाथः सर्पिषो नाथते सर्पिर्मे भूयादित्याशास्तीत्यर्थः । आशिषीति किं? मधु नाथति माणवकमुपनाथति इति याच्ञायां न भवतीत्यर्थः । शिक्षो जिज्ञासायां विद्याः शिक्षते विद्या जिज्ञासयितुमात्मनः शक्तिमिच्छतीत्यर्थः । जिज्ञासायामिति किं? भोक्तुं शिक्षति । शिक्षेति शक्तेः सन्नन्तस्येदं ग्रहणमकारान्तस्य । न शिक्षि विद्योपादाने इत्यस्य ॥ भुजादत्राणे ओदनं भुंक्ते उपभुंक्ते परिभुंक्ते । अत्राण इति किं? पृथिवीं भुनक्ति । त्राणं पालनं तत्र प्रतिषेधे अन्यत्र सर्वत्र तङ् तेन 'अम्बरीशश्च नाभागो बुभुजाते चिरं महीम् ।' इत्यनुपपन्नम्? नात्र हि पालनं विवक्षितं किं तर्हि तदाश्रय उपकारः ॥ अनेकार्थाश्च धातवो भवन्ति उभयपदीनाश्चैवमन्ये मन्यन्ते ॥ भुजादिः साकारपाठस्योपादानात् 'भुजो कौटिल्ये' इत्येतस्मान्न भवति निर्भुजति पाणिम् । प्रतिभुजति वासांसि ॥

**११६४ ला** ।१।२।९४। लादेशेन सह यः संयोगस्तदन्तस्य पदस्य लुग्भवति ॥

**११६५ सिपि दश्च वा** ।१।२।७३। पदान्ते सस्य दस्य च सिपि रिर्वा भवति ॥ रस्य विसर्जनीयः शेषं प्राग्वत् । अरुणत् (द्) अरुन्द्धाम् अरुन्द्धन् । अरुणः अरुणद्धा अरुन्द्धम् अरुन्द्ध । अरुणधम् अरुन्ध्व अरुन्ध्म ॥ अभुङ्क्त अभुञ्जाताम् अभुञ्जत । अभुङ्क्थाः अभुञ्जाथाम् अभुङ्ग्ध्वम् । अभुञ्जि अभुञ्ज्वहि अभुञ्ज्महि ॥ अयुनक् (ग्) अयुङ्क्ताम् अयुञ्जन्। अयुनक् (ग्) अयुङ्क्तम् अयुङ्क्त। अयुनजम् अयुञ्ज्व अयुञ्ज्म ॥ अयुङ्क्त अयुञ्जाताम् अयुञ्जत । अयुङ्क्थाः अयुञ्जाथाम् अयुङ्ग्ध्वम् । अयुञ्जि अयुञ्ज्वहि अयुञ्ज्महि ॥ लोटि ॥ रुणद्धु रुन्द्धाद्वा रुन्द्धां रुन्द्धन्तु । रुन्धि रुन्द्धाद्वा रुन्द्धं रुन्द्ध । रुणधानि रुणधाव रुणधाम ॥ भुङ्क्तां भुञ्जातां भुञ्जतां । भुङ्क्ष्व भुञ्जाथां भुङ्ग्ध्वं । भुनजै भुनजावहै भुनजामहै ॥ युनक्तु युङ्क्ताद्वा युङ्क्तां युञ्जन्तु । युङ्ग्धि युङ्क्ताद्वा युङ्क्तं युङ्क्त । युनजानि युनजाव युनजाम ॥ युङ्क्तां युञ्जातां युञ्जतां । युङ्क्ष्व युञ्जथां युङ्ग्ध्वं । युनजै युनजावहै युनजामहै ॥ लेङि । रुन्ध्यात् रुन्ध्यातां रुन्ध्युरित्यादि ॥ भुञ्जीत भुञ्जीयातां भुञ्जीरन् इत्यादि ॥ युञ्ज्यात् युञ्ज्यातां युञ्ज्युरित्यादि ॥ युञ्जीत युञ्जीयातां युञ्जीरन् इत्यादि ॥ चुर लुण्ट स्तेये ॥ अदित् ॥

**११६६ चुरादिभ्यो णिच्** ।४।१।७। चुरादिभ्यो धातुभ्यः स्वार्थे णिच् भवति ॥ णचावितौ ह्रस्वस्य हल इत्येङ् । चोरीत्यतो लडादयः । शेषं प्राग्वत् । चोरयति चोरयतः चोरयन्ति । चोरयसि चोरयथः चोरयथ । चोरयामि चोरयावः चोरयामः ॥ च्छदि संवरणे । इदित् । णिचि ॥

**११६७ ञ्णित्यस्याः** ।४।१।२३०। धातोरुपान्त्यस्यात आद्भवति ञिति णिति च प्रत्यये परे ॥ अवयवे कृतं लिङ्गं समुदायस्य विशेषणं भवति अवयवेऽकृतार्थत्वादिति न्यायेन णिजन्तादेव तङ्। च्छादयते च्छाद-

येते च्छादयन्ते इत्यादि ॥ लक्षी दर्शनाङ्कनयोः ॥ ईदित् । णिजादि अनुपान्त्यत्वात् नात् । लक्षयति लक्षयतः लक्षयन्ति इत्यादि ॥ लक्षयते लक्षयेते लक्षयन्ते इत्यादि ॥ लङि । अचोरयत् अचोरयताम् अचोरयन् इत्यादि ॥ अच्छादयत अच्छादयेताम् अच्छादयन्त इत्यादि ॥ अलक्षयत् अलक्षयताम् अलक्षयन् इत्यादि ॥ अलक्षयत अलक्षयेताम् अलक्षयन्त इत्यादि ॥ लेटि । चोरयतु चोरयताद्वा चोरयतां चोरयन्तु इत्यादि ॥ च्छादयतां च्छादयेतां च्छादयन्ताम् इत्यादि ॥ लक्षयतु लक्षयताद्वा लक्षयतां लक्षयन्तु इत्यादि ॥ लक्षयतां लक्षयेतां लक्षयन्ताम् इत्यादि ॥ लेङि । चोरयेत् चोरयेतां चोरयेयुः इत्यादि ॥ च्छादयेत च्छादयेयातां च्छादयेरन् इत्यादि ॥ लक्षयेत् लक्षयेतां लक्षयेयुरित्यादि ॥ लक्षयेत लक्षयेयातां लक्षयेरन् इत्यादि ॥ युज पृच संयमने ॥ अदित् ॥

११६८ **युजादेर्वा** ।४।१।८। युजादिभ्यो धातुभ्यः स्वार्थे णिज्वा भवति ॥ पक्षे शबेव शेषं प्राग्वत् । योजयति योजयतः योजयन्ति इत्यादि ॥ योजति योजतः योजन्तीत्यादि ॥ अर्चि पूजायाम् । इदित् । णिजभावपक्षे सावकाश इति णिजन्तात्तङ् न भवति । अर्चयति अर्चयतः अर्चयन्तीत्यादि ॥ अर्चते अर्चेते अर्चन्ते इत्यादि ॥ वृञ् वरणे ॥ ञ इत् णिच्यरात्त्वे । वारयति वारयतः वारयन्तीत्यादि ॥ वरति वरते इत्यादि ॥ लङि ॥ अयोजयत् अयोजयताम् अयोजयन् इत्यादि ॥ अयोजत् अयोजताम् अयोजन् इत्यादि ॥ आर्चयत् आर्चयताम् आर्चयन् इत्यादि ॥ आर्चत आर्चेताम् आर्चन्त इत्यादि ॥ अवारयत् अवारयताम् अवारयन् इत्यादि । अवरत् अवरत इत्यादि ॥ लेटि ॥ योजयतु योजयताद्वा योजयतां योजयन्तु इत्यादि ॥

---

१ सावकाशानवकाशयोरनवकाशविधिर्बलवान् । अत्र सावकाशविधिस्तङ् अर्चीत्यत्रावयवे इकारस्य कृतार्थत्वात् । निरवकाशविधिरतङ् तस्य अवयवेऽनवकाशात् समुदायाद्भवति ॥ परं स्यात्पूर्वपरयोर्नित्यं स्यात्परनित्ययोः ॥ नित्यात्तथाऽन्तरंगं स्यात्तोऽप्यनवकाशकम् ॥ १ ॥

योजत् ॥ अर्चयतु अर्चयताद्वा अर्चयताम् अर्चयन्तु इत्यादि ॥ अर्चताम् अर्चेताम् अर्चन्ताम् इत्यादि ॥ वारयतु वारयताद्वा वारयतां वारयन्तु । वरतु । वरताम् । इत्यादि ॥ लेङि ॥ योजयेत् योजयेतां योजयेयुः इत्यादि ॥ योजेत । अर्चयेत् अर्चयेताम् अर्चयेयुरित्यादि ॥ अर्चेत अर्चेयाताम् अर्चेरन् इत्यादि ॥ वारयेत् वारयेतां वारयेयुरित्यादि ॥ वरेत् वरेतां वरेयुरित्यादि ॥ वरेत वरेयातां वरेरन् इत्यादि ॥ एवं तत्तद्गणधातवः सर्वेऽपि नेतव्याः ॥ इति कर्तरि लेलप्रकरणम् ॥

॥ कर्मभावविवक्षायाम् ॥

**११६९. साप्यानाप्याल्लक्ष्यप्खलार्थाः कर्मभावे** ।४।३।५५। सकर्मकाद्धातोः कर्मणि विवक्षिते लडादयो भवन्त्यकर्मकाद्भावे ॥ इति लडादयः ॥

**११७० कर्मभावे** ।४।३।१७। कर्मणि भावे च विवक्षिते धातोर्लस्तङेव भवति ॥

---

१ वेति निवृत्तं कृल्ल इत्यग्रहणात् ॥ सकर्मकादकर्मकाच्च धातोर्लक्ष्यप्खलार्थाः प्रत्ययाः यथासंख्यं कर्मणि भावे च भवन्ति ॥ एवं लकाराणां त्रयोऽर्थाः अन्येषां द्वौ द्वौ । क्रियया आप्तुं विषयीकर्तुं योग्यं आप्यम् । आप्येन सह वर्तमानः साप्यः । न विद्यते आप्यो यस्यासौ अनाप्यः । साप्यश्च अनाप्यश्च साप्यानाप्यम् तस्मात् ॥ घ्यण् इत्यत आरभ्य 'वदः सुपः क्यप् च' इति पकारेण प्रत्याहारः । घ्यण् तव्य आनीय य क्यप् इति पञ्च प्रत्ययाः ॥ साप्यानाप्यादिति किं? सकर्मकाद्भावे माभूत् कटं क्रियते देवदत्तेनेति । अविवक्षिते कर्मणि अकर्मका एवेति भवन्ति भुज्यते देवदत्तेन ॥ धातोरर्थान्तरे वृत्तेर्धातुत्वेनोपसंग्रहात् ॥ प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥ १ ॥ अत्रोदाहरणानि वहति नदी । जीवति देवदत्तः । मेघो वर्षति । उच्यते देवदत्तेन ॥ द्विकर्मकाणां धातूनां गुणमुख्यकर्मणोस्तुल्यलक्ष्यत्वाभावात् युगपत्क्रियायोगे मुख्यक्रियास्वरूपकाणि भवन्ति । अजा नीयते ग्रामम् । गौर्दुह्यते पयः । माणवको बोध्यते धर्मम् । माणवकं बोध्यते शास्त्रम् ॥

२ कर्मभावयोरनेन विधानात् कर्तरि गतः सर्वो विधिः ॥

११७१ श्लले यक् ।४।३।१९। कर्मभावयोर्धातोः श्लले यक् भवति ॥ क इत् । किन्त्वान्नैङरौ । भावो धात्वर्थः क्रिया तस्यैकत्वात्तत्रैकवचनं त एव । अत्र लकारेण कर्तुरनभिधानात् अप्राधान्येन कर्तरि तृतीया विभक्तिः भवति । शेषं प्राग्वत् । भूयते देवदत्तेन विदुषा । ताभ्यां भूयते । तैर्भूयते । त्वया भूयते । मया भूयते ॥

सन्मात्रं भावलिङ्गं स्यादसंपृक्तं तु कारकैः ॥
धात्वर्थः केवलश्शुद्धो भाव इत्यभिधीयते ॥ १ ॥
क्रियापदं कर्तृपदेन युक्तं व्यपेक्षते यत्र किमित्यपेक्षाम् ॥
सकर्मकं तं सुधियो वदन्ति शेषस्ततो धातुरकर्मकस्स्यात् ॥ २ ॥
लज्जासत्तास्थितिजागरणं वृद्धिक्षयभयजीवितमरणम् ॥
स्वप्नक्रीडाव्रजिदीप्त्यर्थां धातव एते कर्मविहीनाः ॥ ३ ॥

अकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्तीत्यनुपूर्वत्वे तस्य । तस्यागतार्थेत्युपसर्गसंज्ञायां भवतेः सोपसर्गत्वात्सकर्मकात् कर्मणि लस्तादयो नवापि भवन्ति । शेषं प्राग्वत् । अनुभूयते अनुभूयेते अनुभूयन्ते इत्यादि ॥ एध्यते ॥ पच्यते पच्येते पच्यन्ते ॥ ताङि । अभूयत ॥ अन्वभूयत अन्वभूयेताम् अन्वभूयन्त इत्यादि ॥ ऐध्यत ॥ अपच्यत अपच्येताम् अपच्यन्त इत्यादि ॥ लेटि ॥ भूयताम् ॥ अनुभूयताम् अनुभूयेताम् अनुभूयन्ताम् इत्यादि ॥ एध्यतां ॥ पच्यतां पच्येतां पच्यन्ताम् इत्यादि ॥ लेङि । भूयेत । अनुभूयेत ॥ एध्येत ॥ पच्येत पच्येयातां पच्येरन् इत्यादि ॥ अद्यते । आद्यत । अद्यताम् । अद्येत ॥

११७२ य्यय् ।४।२।४। शीङः इको ये क्ङित्यय् भवति ॥ शय्यते । अशय्यत । शय्यतां । शय्येत ॥

---

१ धातोः कर्मणि भावे च वर्तमानस्य । श् शिदादौ लेले लेटि लेङि लटि लङि च प्रत्यये परे मध्ये यक्प्रत्ययो भवति । शिद्ग्रहणमुत्तरार्थम् । शे ले इति किं? चक्रे कृषीष्ट ॥

२ सत्तामात्रं भाव इति विधेयम् ॥

**११७३ अस्तिब्रुवोर्भूवचौ** ।४।२।९१। अस्तेर्ल्यश्लि प्रत्यये भू भवति ब्रुवो वच् ॥

**११७४ श्व्यादिस्वब्वचः किति** ।४।१।११५। श्व्यादीनां स्वब्वचोश्च साचो यञ इग्भवति किति परे ॥ उच्यते । औच्यत उच्यताम् उच्येत ॥ यङ्लेङ्कृति चर्दचोरीदीर्घाविति दीर्घः । हूयते । अहूयत । हूयतां । हूयेत ॥ हायते । अहायत । हायतां । हायेत ॥

**११७५ ई हल्यप्ये** ।४।२।८७। घुसंज्ञानां मास्थागापाहाक्सानां च धातूनां हलादौ क्ङिति ल्यश्लि प्रत्यये परे ईद्भवति न प्ये ॥ दीयते । अदीयत । दीयतां । दीयेत ॥ दीव्यते । अदीव्यत । दीव्यतां । दीव्येत ॥ सूयते । असूयत । सूयतां । सूयेत ॥ नह्यते अनह्यत । नह्यतां । नह्येत ॥ अश्यते । आश्यत । अश्यताम् । अश्येत ॥ यङलेङिति दीर्घः । चीयते । अचीयत । चीयतां । चीयेत ॥ क्रीयते । अक्रीयत । क्रीयतां । क्रीयेत ॥ रिः । क्रियते । अक्रियत । क्रियतां । क्रियेत ॥ गृह्यते । अगृह्यत । गृह्यतां । गृह्येत ॥ तुद्यते । अतुद्यत । तुद्यतां तुद्येत ॥ रिः । म्रियते । अम्रियत । म्रियतां । म्रियेत ॥ मुच्यते । अमुच्यत । मुच्यतां । मुच्येत ॥

**११७६ तनो यकि** ।४।१।२७०। तनो धातोराद्वा भवति यकि परे ॥

---

१ घुमास्थागापाहाक्सा इत्येतेषां धातूनां प्यवर्जितहलादौ श्ले प्रत्यये ईकारादेशो भवति । मा माने माङ् माने । ष्ठा गतिनिवृत्तौ । गै शब्दे । पा पाने । ओहाक् त्यागे । षोऽन्तकर्मणि । हलीति किं? तस्थतुः तस्थुः । अप्येति किं? प्रधाय प्रदाय । प्रमाय । प्रस्थाय । प्रगाय । प्रपाय । प्रवहाय । अवसाय । ल्यश्लीति किं? अदातां अधतः अस्थातां । अपातां । कितीति किं? दाता धाता ॥ अप्येति कथं प्रतिषेध इति न शंकनीयम् । प्यः प्रत्ययः । क्त्वायतोः प्यादेशः स्थानिवत्त्वेन किति भवति अतो एव निषेधः ॥

२ वन्यनुनासिकस्याः ।४।१।२६६। ये वा ।४।१।२६९। इति सूत्रद्वयमधिकृत्य (एतत्सूत्रद्वयमग्रे वर्तते) यकीति किं? तन्तन्यते ॥ केषाञ्चित् 'तेनोतेर्यकि' इति सूत्रम् । तेषां धातुनिर्देशार्थ एव तिप् । यङ्लुग्निवृत्त्यर्थं च ॥

दीर्घः । तायते तन्यते । अतायत अतन्यत । तायतां तन्यतां । तायेत तन्येत ॥ मन्यते । अमन्यत । मन्यतां । मन्येत ॥ रिः क्रियते । अक्रियत । क्रियतां क्रियेत ॥ रुध्यते । अरुध्यत । रुध्यतां । रुध्येत ॥ भुज्यते । अभुज्यत । भुज्यतां । भुज्येत ॥ युज्यते । अयुज्यत । युज्यतां । युज्येत ॥

११७७ **णेरिंक्तानिडामाल्वन्तेत्न्वाय्ये** ।४।२।१०१। णेरिडाद्योः क्तयोर्य्यञ्ञि प्रत्यये च परे लुग्भवति नेडामाल्वन्तेत्न्वाय्येषु ॥ चोर्यते । अचोर्यत । चोर्यतां । चोर्येत ॥ छाद्यते । अच्छाद्यत । छाद्यतां । छाद्येत ॥ लक्ष्यते । अलक्ष्यत । लक्ष्यतां । लक्ष्येत ॥ योज्यते । अयोज्यत । योज्यतां । योज्येत ॥ युज्यते । अयुज्यत । युज्यतां । युज्येत ॥ अर्च्यते । आर्च्यत । अर्च्यताम् । अर्च्येत । वार्यते व्रियते । अवार्यत । अव्रियत । वार्यतां व्रियतां । वार्येत व्रियेत ॥ एवमन्येऽपि धातवो नेयाः ॥

अविवक्षितकर्तृकाणां सकर्मकधातूनां कर्मण एव कर्तृत्वे ॥

---

१ धातोरवयवस्य णेरिडाद्योः क्तयोः इडागमाल्वन्तेत्न्वाय्यवर्जिते च ल्यञ्ञिप्रत्यये लुग्भवति । इक्तग्रहणमिडर्थं । ककारादिडि कृते लोपः न प्राक् । शाकितः । शाकितवान् । अन्यथा हि इड् न स्यात् । ककारादिह न भवति कारयितव्यं हारयितव्यम् ॥ अत एव क्तप्रत्ययस्य क्तवदवयवस्य चार्थवतोऽनर्थकस्य च द्वयोर्ग्रहणम् ॥ इ इडागमेन युक्तः क्तः क्तवतुप्रत्ययः इक्तः । इट् च आम् च आलुश्च अन्तश्च इत्नुश्च आय्यश्च पुनस्तयोक्तः न इडामाल्वन्तेत्न्वाय्यं । इक्तश्च अनिडामाल्वन्तेत्न्वाय्यं च तस्मिन् । नेडामाल्वन्तेत्न्वाय्ये इति किं? इट् कारयिषीष्ट कारयित्वा हारयित्वा । आम् कारयांचकार । आलुः स्पृहयालुः गृहयालुः । अन्तप्रत्यय औणादिः गदयन्तः मण्डयन्तः ॥ हृषिहषिस्तनिस्तुगदिमदिभ्यो णेरित्नुरित्यौणादिकः । स्तनयित्नुः गदयित्नुः ॥ आय्य स्पृहयाय्यः । महिश्रुदक्षिस्पृहिभ्य आय्य इत्यौणादिकः आय्यः ॥ णिलोपे निमित्ताभावे नैमित्तिकस्याप्यभाव इति प्राप्ते अजादेशः परो निमित्तं पूर्वविधिं प्रति स्थानिवद्भवतीति न्यायेन न भवति ॥ णिचो लुक् अक्प्रत्ययनिमित्तकः ॥

**११७८ कर्मण्यस्नुवादीनां कर्म्मवाल्लि** ।४।३।३५। कर्मणि कर्तरि धातोर्लः कर्मवत्कार्यं भवति न स्नवत्यादीनामिति यगादि भवति ॥ अनुभूयते कम्बलः स्वयमेव । पच्यते ओदनः स्वयमेव । भिद्यते कुसूलः स्वयमेव । अस्नुवादीनामिति किं? स्नवति जलं स्वयमेव इत्यादि नेयम् ॥

॥ इति भावकर्मश्लेलपरिच्छेदः ॥

## ॥ अथ शेषलकाराः कर्तरि नीयन्ते ॥

भू इत्यतः लिङ्लेडाशिषीति लिङ् । ङकावितौ । तिबादयः प्राग्वत् । एर्ङिङतो लुगिति लुक् । क्यासट् अटका इतः । तिप्सिपोस्संयोगस्येति सुलुक् । झेर्जुस् । शेषं प्राग्वत् ॥ भूयात् भूयास्तां भूयासुः । भूयाः भूयास्तं भूयास्त । भूयासं भूयास्व भूयास्म ॥ एवं नन्द्यात् नन्द्यास्तां नन्द्यासुः इत्यादि । एधस्तङि टिय् ॥

**११७९ सट् त्थीयां लिङः** ।१।४।११२। लिङस्तथयोष्टीयश्च सट् भवति ॥ अटावितौ । टिदादिः । वलि यलुक् ॥

**११८० वलादेरिडलवषुणादेः** ।४।२।१३४। धातोर्वलादेर्स्यश्च इड् भवति न लवषुणादेः ॥ ट इत् । षिः ष्टुत्वं । झस्य रन् । इलोऽत् । शेषं प्राग्वत् । एधिषीष्ट एधिषीयास्ताम् एधिषीरन् । एधिषीष्ठाः एधिषीयास्थाम् एधिषीध्वम् । एधिषीय एधिषीवहि एधिषीमहि ॥ पच्यात् पच्यास्तां पच्यासुः इत्यादि ॥ तङि ॥

---

१ तश्च थश्च टीय् च त्थीयः तेषां त्थीयां । लिङादेशस्य तकारथकारयोष्टीयश्च सडागमो भवति । लिङिति किं? पचेत । त्थीयामिति किं? कृषीरन् कृषीध्वम् । त्थीयः साहचर्यात् परस्मैपदयोस्तयोः सट् न भवति ॥

२ वलादेरिति किं? लव्यं लवनीयं । आदिग्रहणं किं? लावकः पावकः । अत्र वषुणादेरिति किं? त्र हलस्य हित्रं सूकरस्य पोत्रं पत्रं । वष् नश्वरः । उणादि तु तन्तुः जन्तुः । थ कोष्टं कुष्टं । तृ शास्ता शंस्ता । स्नक् कृत्स्नं तीक्ष्णं । स्यश्चेति किं? आस्ते शेते ॥

११८१ **मुरिसिविपवाचः** ।४।२।१७७। म्वादिपूर्वाच्चान्तादेकाचो धातोर्वलादेरिट् न भवति ॥ शेषं सुगमं । पक्षीष्ट पक्षीयास्तां पक्षीरन् इत्यादि ॥ अघात् अघास्ताम् अघासुः इत्यादि ॥

११८२ **शंकप्रच्छिविन्दिव्यहन्वसिघस्यचोऽश्विश्रिशीङ्डीङ्रुषट्कोदवृदृतः** ।४।२।१७६। शकादिभ्यः अजन्तेभ्यश्च एकाज्भ्यो वलादेरिड् न भवति श्विश्रिशीङ्डीङः रुषट्कमूदन्तं वृङ्वृञौ ऋदन्तमदन्तं च वर्जयित्वा ॥ इतीड्प्रतिषेधो न भवति । इञो लिलुङां धो ढः । इत्याधिकृत्य ॥

११८३ **वेड्ञेः** ।१।२।८२। इञन्तादिटो ञिटश्च परेषां लिङ्लिङ्लुङां धस्य ढो वा भवति ॥ शेषं प्राग्वत् । शयिषीष्ट शयिषीयास्तां शयिषीरन् । शयिषीष्ठाः शयिषीयास्थां शयिषीढ्वं शयिषीध्वं । शयिषीय शयिषीवहि शयिषीमहि ॥ उच्यात् उच्यास्ताम् उच्यासुः इत्यादि ॥ तङ्यकित्त्वान्नेक् । मुरिसीतीडभावः । वक्षीष्ट वक्षीयास्तां वक्षीरन् इत्या-

---

१ मुच्लृञ् मोक्षणे । रिचृञ् विरेचने । षिचृञ् क्षरणे । विचृञ् पृथग्भावे । डुपचिष पाके । वच् परिभाषणे । ब्रुवो वचेः । चश्चकारान्तात् ॥

२ एकाच इति वर्तते । शक्लृ शक्तौ । शक मर्षणे । प्रच्छ ज्ञीप्सायाम् । विद्लृञ् लाभे । विदि विचारणे । विद विदि सत्तायाम् । हन हिंसागत्योः । वस निवासे । घसुङ् करणे घसादेशश्च । इत्येतेभ्योऽजन्तेभ्यश्चैकाज्भ्यो धातुभ्यः विहितस्य प्रत्ययस्येडागमो न भवति । टुवोश्वि गतिवृद्ध्योः । श्रीञ् सेवायाम् । शीङ् स्वप्ने । डीङ् विहायसां गतौ इत्येतान् रुषट्कं ( रु, टुक्षु शब्दे । क्ष्णु तेजने । स्नु प्रस्रवणे । णु स्तुतौ । यु मिश्रणे । इति रुषट्कं ) उकारान्तं वृङ् सभक्तौ वृञ् वरणे इत्येतौ ऋकारान्तमकारान्तं च वर्जयित्वा ॥ शक् प्रच्छि विन्द इत्यत्र विद्लृञ लाभे इति तुदादौ लिपादिसम्बन्धिनः विदि विचारणे इति रुधादिसम्बन्धिनश्च ग्रहणाधिक्यादित्यत्र इड् न भवति । नम्विकरणोपादानं ज्ञानार्थव्युदासार्थं वेदिता शास्त्रस्य । वसतेर्ग्रहणं न वस्तेः अदित्वात् वसिता वस्त्राणाम् । विन्देरप्युदासं केचिदाहुः वेदिता धनस्य विद्लृञ् लाभे इति धातुस्तुदाद्यन्तर्गतः । लिपादौ विदि विचारणे इति रुधादिकस्य ग्रहणम् ॥ ' ञो वधस्तङि लुङि ' इति हन हिंसागत्योरिति धातोर्वधादेशे सति अदन्तो भवति । पश्चादनेकाचोऽपि धातोः प्रतिषेधो भवत्येव ॥

दि ॥ यशलेङिति दीर्घः । हूयात् हूयास्तां हूयासुः इत्यादि ॥ शकप्रच्छीति नेट् हासीष्ट हासीयास्तां हासीरन् इत्यादि ॥

११८४ **घुमास्थागापाहाक्सः** ।४।२।८६। घ्वादीनां क्ङिति लिङ्येद् भवति ॥ धेयात् धेयास्तां धेयासुः इत्यादि ॥ तङ्यकित्त्वान्नैत् धासीष्ट । दीव्यात् ॥

११८५ **रधाद्यौदिद्रूवः** ।४।२।१३९। रधादेरौदितो धूञश्च वलादेरिड्वा भवति ॥ सविषीष्ट । इडभावे ॥

११८६ **इञो लिलुङां धो ढः** ।१।२।८१। इञन्ताद्धातोर्लिङ्लिङ्लुङां धस्य ढो भवति ॥ सोपीष्ट सोषीढ्वम् इत्यादि ॥ नह्यात् नह्यास्तां नह्यासुरित्यादि ॥

११८७ **वनमिदुर्ददिलिदाद् हः** ।४।२।१८७। वादिपूर्वात् हान्तादेकाचो धातोर्वलादेरिड् न भवति ॥ हस्य षः । नत्सीष्ट नत्सीयास्तां नत्सीरन् ॥ सूयात् सूयास्तां सूयासुरित्यादि । औदित्त्वाद्वेद् अशिषीष्ट । इडभावे व्रश्चेति शस्य षः ॥

---

१ घ्वादीनां क्ङिति लिङि प्रत्यये नित्यमेकारादेशो भवति ॥ अत्र ओहाङ् गतौ इत्यस्य ङकारोपादानान्न भवति ओहाक् त्यागे इत्यस्यैव । पा इत्येधादिकस्य ग्रहणं न पा रक्षणे इत्येतस्य ॥

२ रध हिंसासंराध्योः । णश अदर्शने । तृप प्रीणने । दृप हर्षविमोचनयोः । द्रुह जिघांसायाम् । मुह वैचित्ये । ष्णुह उद्गिरणे । ष्णिह प्रीतौ । इति रधादिः ॥

३ लिङ् च लिट् च द्वौ ली लुङेकः इति बहुत्वाद्बहुवचनम् । तच्च बहुवचनमुत्तरार्थम् लिलुङित्यपि सिद्धति । लिक्षीध्वं दुक्षीध्वं नत्सीध्वमित्यादौ लिह् आस्वादने दुहि प्रपूरणे णहि बन्धने इत्यादिषु लिह् सीध्वं नह् सीध्वं इति स्थाने हकारस्य यञ्त्वात् अयं ढविधिः कस्मान्न स्यादिति चेत् तत्रायं ढविधिः प्राप्नोति ‘ हः ।२२१। ’ इत्यादिना ढत्वघत्वदत्वानि च । तत्र परे असन्नित्यधिकारादयं ढविधिरसन्भवतीति ढत्वानिदितेषु कृतेषु हकारस्याभावादयं ढविधिर्नस्यात् ॥

४ वहि प्रापणे । णहि बन्धने । मिह सेचने । दुहि प्रपूरणे । रुह बीजजन्मनि । दिहि उपवेशने । लिहि आस्वादने । दह् भस्मीकरणे ॥

**११८८ षढः कस्सि** ।१।२।६६। षढयोस्सि को भवति ॥ अक्षीष्ट अक्षीयास्ताम् अक्षीरन् इत्यादि । चीयात् । ताङि शक्प्रच्छीति नेट् चेषीष्ट ॥ क्रीयात् ॥

**११८९ हृल्भ्यां चोस्सट्तङ्सेः** ।४।२।१३८। हल्द्वयात्परऋदन्तात् ॠदन्तात् वृङ्वृञ्भ्यां च परस्य सटस्तङ्परस्य च सेरिड्वा भवति॥ वरिषीष्ट । इडभावे—

**११९० उँः** ।४।१।१६३। ऋवर्णान्तस्य धातोस्तङि सकारादौ सिलौ किद्वद् भवति ॥ वृषीष्ट । गृह्यात् ॥

**११९१ ग्रॅह एकाचोऽलिटीटः** ।४।२।१३६। एकाचो ग्रहेरिट ईड भवति न लिटि ॥ ग्रहीषीष्ट । तुद्यात् ॥

**११९२ अँक्षुनुतुस्कन्भिच्छिखिशपसहाद्दः** ।४।२।१८०। अदादिपूर्वाद्दान्तादेकाचो धातोर्वलादेरिड् न भवति ॥

**११९३ सिलौ ताङि** ।४।१।१६२। हलन्तस्य धातोरिकस्तङ्परे सादौ सौ लिङि च परे किद्वद् भवति ॥ कित्त्वान्नैङ् । तुत्सीष्ट । मृषीष्ट । मुच्यात् । कित्त्वान्नैङ् मुक्षीष्ट । तन्यात् । मनिषीष्ट । क्रियात् । कृषीष्ट । रुध्यात् ॥

---

१ ढ इति किं? अस्ति भवन्ति । सीति किं? द्वेष्टि पिनष्टि ॥

२ उरिति ऋकारार्थम् तङ्परः सिः तङ्सिः । सट् च तङ्सिश्च तस्य ॥

३ हल्द्वयात्परऋदन्तात् हल्द्वयरहितऋदन्ताच्च तङ्परे सकारादौ सिप्रत्यये लिटि लेङि च परे किद्वत्कार्यं भवति । अकृत अपहृत । कृषीष्ट हृषीष्ट आस्तीर्ष्ट न्यवृष्ट ।

४ ग्रह इति किं? भविता । एकाच इति किं? जरिता । जरिगृहीतुं जरिगृहीतव्यम् । उत्तरार्थमेकाज्ग्रहणम् । अलिटीति किं? जगृहीम । नित्यत्वेऽपि द्विर्वचनस्यैकाच इति विहितविशेषणमित्यलिड्ग्रहणम् ॥ इत इति किं? ग्रहणं ग्राहकः । अग्राहिषातामिति ञिञ् नेट् ॥

५ अद् भक्षणे । क्षुदम् सम्पेषे । णुद क्षेपे ।तुदि व्यथने । स्कन्द गतिशोषणयोः । भिदम् विदारणे । छिदम् द्वैधीकरणे । खिदि दैन्ये । शद्लृ शातने । पदि गतौ । षद्लृ विशरणगत्यवसानेषु । हदी पुरीषोत्सर्गे ॥

**११९४ बन्धासाधयुधबुधकुधशुधरुधक्षुधव्याधः** ।४।२।१८१। बनादिपूर्वाद्धान्तात् एकाचो धातोर्वलादेरिड् न भवति ॥ शेषं प्राग्वत्। रुत्सीष्ट ॥

**११९५ ग्रस्मस्त्यजयविनिजभुजभाज्जः** ।४।२।१७८। ग्रसादिपूर्वाज्जान्तादेकाचो धातोर्वलादेरिड् न भवति ॥ भुक्षीष्ट। युज्यात्। युक्षीष्ट ॥ णिलुक् चोर्यात। छद्योऽनेकाच्त्वात् इड्निषेधो नास्ति। छादयिषीष्ट। लक्ष्यात् लक्षयिषीष्ट। योज्यात। युज्यात्। अर्च्यात् अर्चिषीष्ट। वार्यात्। व्रियात्। वरिषीष्ट। वृषीष्ट ॥ एवमन्येऽपि धातवो लिङन्ता नेयाः ॥

“ अत्यन्तापह्नवे लिट् ।४।३।२११। इत्यधिकृत्य ॥ ”

**११९६ परोक्षे** ।४।३।२१२। परोक्षे स्वयमसाक्षात्कृते भूतानद्यतनेऽर्थे धातोर्लिड् भवति ॥ इटावितौ। तिबादयः ॥

**११९७ अतडणशतुसुस्थाथुसण्णश्वमाः** ।१।४।१०१। लिटस्तिबादीनां नवानां यथासङ्ख्यं णशादयो नव भवन्ति ॥ णशावितौ शित्त्वात्सर्वस्य ॥

---

१ बन्ध बन्धने। राध संसिद्धौ। युधि संप्रहारे। बुधि मनि ज्ञाने। बुधि बोधने इत्यस्य च। क्रुधि कोपे। शुध शौचे। रुधृन आवरणे। क्षुध बुभुक्षायाम्। व्यध ताडने ॥

२ युजृञ् योगे। यजि देवपूजासंगतकरणदानेषु। विजृञ् पृथग्भावे धातुरस्ति। ओविजैड् भयचलनयोरिति तौदादिकस्तस्य न निषेधोऽयं ओविजै भये इति रौधादिकस्य च किन्तु धात्वन्तरस्य। तयोरोदित्करणात् ॥ णिजृञ् शौचशोषणयोः। त्यज हानौ। भुज पालनाभ्यवहारयोः। रुजो भङ्गे। भजी सेवायाम् ॥

३ वक्तुरदर्शनविषयः परोक्षः। अक्षाणामिन्द्रियाणां परं परोक्षं सम्प्रतीन्द्रियाणामविषयः अगोचर इत्यर्थः ॥ परोक्षं यत्र प्रयोक्त्रा साक्षादधिगतं मतम् ॥ अभूवँस्तापसाः केचित्पाण्डुपत्रफलाशिनः ॥ पारिव्राज्यं तदा दत्तं मरीचिश्च तृषार्दितः ॥ १ ॥ भूतानद्यतनपरोक्षेऽपि भूतमात्रस्य भूतानद्यतनमात्रस्य च विवक्षायां लुङ्लङौ च भवतः ॥

४ तिप् तस् झि। सिप् थस् थ। मिप् वस् मस् इत्येतेषां लिट आदेशानां अतङ्क्षं नवानां णश् अतुस् उस्। थ अथुस् अश्। णश् व म इत्येते नवादेशा भवन्ति ॥ णकारो णित् कार्यार्थः ॥

**११९८ किदङ्लिटीन्धेश्चासंयोगात्** ।४।१।१४८। असंयोगा-दिन्धेश्च धातोरपिति लिटि परे कितीव कार्यं भवति ॥

**११९९ किस्युक्श्र्यूर्णुञः** ।४।२।१८९। एकाचः उगन्तात् श्रिञः ऊर्णुञश्च कितीड् न भवति ॥

**१२०० सृभृवृस्तुद्रुश्रुस्रोश्च लिटि** ।४।२।१९३। स्रादिभ्यः असकारात् कृञश्चैव विहितस्य लिट इड् न भवति नान्यस्मादिति नियमात् लिटीड् भवत्येव ॥ विध्यन्तरात् प्रागेव द्विर्भावः । आणूजशिति पूर्वस्य बत्वोत्वे ॥

**१२०१ भूव्यथोऽदित्** ।४।१।१०७। भुवो लिटि द्विर्भावे पूर्वस्योत अद्भवति व्यथोऽत इत् ॥ पित्येङ्वौ । णित्यात् अपित्युव् ॥

**१२०२ लुङ्लिटि भुवः** ।४।१।२१८। भुव उपान्त्यस्याचः लुङि लिटि च ऊद्भवति ॥ बभूव बभूवतुः बभूवुः । बभूविथ बभूवथुः बभूव। बभूव बभूविव बभूविम ॥ एवं ननन्द ननन्दतुः ननन्दुः इत्यादि ॥

**१२०३ दयायास्कास्गुर्विजाद्यनेकाचोऽनृच्छूर्णोरां कृभ्वस्लिट् चानु** ।१।४।८३। दयादेर्गुर्विजादेरनेकाचश्च परस्य लिट आं भवति न ऋच्छूर्णोतिभ्यां तस्य चादन्तरं लिडन्ताः कृभ्वस्तयः प्रयुज्यन्त एव ॥

**१२०४ आमः कृञः** ।१।४।४७। आमः प्राक्प्रकृतेरिवामः परात् कृञो लस्तङ् भवति ॥

**१२०५ लिटस्तझस्यैशिरे** ।१।४।९८। लिटस्तस्य एश् भवति झस्य इरे ॥ कित्त्वात् नार् । धस्य ढः । स्रादित्वान्नेट् । द्विर्भावे पूर्वस्य

१ सृ गतौ ससृव ससृम । डुभृञ् धारणपोषणयोः बभृव बभृम ॥ वृ इति सामान्येन वृङ् वृञोर्ग्रहणम् ववृवहे ववृमहे । ववृव ववृम ॥ ष्टुञ् स्तुतौ तुष्टुव । तुष्टुम ॥ द्रु गतौ दुद्रुव दुद्रुम। श्रु श्रवणे शुश्रुव शुश्रुम । स्रु गतौ सुस्रुव सुस्रुम । चकारः 'कृञोऽसः' इत्यतो वर्तमानस्य असकारात्कृञ इत्यस्यैतेषां च समुच्चयार्थः । डुकृञ् करणे इत्यतः चकृव चकृम । सगागमात्परात्कृञ् इट् भवति तस्मादपरात्र भवतीत्यर्थः

ऋतोऽत् चुत्वम् । आमि विदात्किदिति[1] पृथगारम्भात् न स्थानिवद्भावः । न च द्विः । आमस्तस्वदित्यव्ययत्वम् । एधाञ्चक्रे एधाञ्चक्राते एधाञ्चक्रिरे । एधाञ्चकृषे एधाञ्चक्राथे एधाञ्चकृढ्वे । एधाञ्चक्रे एधाञ्चकृवहे एधाञ्चकृमहे ॥ एधाम्बभूव एधांबभूवतुः एधाम्बभूवुः इत्यादि ॥ अस भुवि । अदित् लिटि अस् अस् इति द्विः ॥

**१२०६ हलोऽनादेः** ।४।१।८२। द्विर्भावे पूर्वस्यानादेर्हलो लुग्भवति ॥

**१२०७ लिट्यादादेरतः** ।४।१।१०५। लिटि द्विर्भावे पूर्वस्यादेरतः आद् भवति ॥ शेषं प्राग्वत् । क्रादिनियमादिट् । एधामास एधामासतुः एधामासुः । एधामासिथ एधामासथुः एधामास । एधामास एधामासिव एधामासिम ॥

**१२०८ त्रप्फलिभजत्रझट्कज्ह्वादिददिशासिकृतस्या-**[2]

---

१ 'किद्वांल्लिटीन्धेश्चासँयोगात्' इति आम्यपि स्थानिवद्भावेन किद्वद्भावे सिद्धे 'विदात्कित्' इति आमः पुनः किद्वचनादामो न स्थानिवद्भावः । तथाच लिङ्निमित्तो द्विर्भावो न स्यात् ॥

२ झट् च कुश्च अश्च हश्च वश्च झट्कज्ह्वः । स आदिर्यस्यासौ झट्कज्ह्वादिः । झट्कज्ह्वादिश्च ददिश्च शासिश्च कृतश्च झट्कज्ह्वादिददिशासिकृताः । न विद्यन्ते झट्कज्ह्वादिददिशसिकृताः येषा ते अझट्कज्ह्वादिददिशसिकृताश्च त्रप्फलिभजत्रझट्कज्ह्वादिददिशसिकृतं तस्य । अतः अकारस्य द्वयोर्मध्ये वर्तमानस्य ॥ त्रपोषि लज्जायाम् त्रेपे । त्रप इत्यतः तः तस्य एश् । र अप इति स्थिते । अत्र अकारस्य द्वयोरसहाययोर्हलोर्मध्ये स्थितस्यैव एकारादेशो भवति इत्युक्तत्वात् अत्रायमकारस्त्रिहल्मध्ये इत्यप्राप्ते तदर्थं ग्रहणम् ॥ फलीति फलनिष्पत्तौ त्रिफला विशरणे इत्युभयोर्ग्रहणम् फेलुः । फलिभजग्रहणं अझटकज्ह्वादीति झटादेर्नैवन्ये प्राप्ते तदर्थम ॥ भज भिञ्ज सेवायां भेजतुः । तॄ प्लवनतरणयोः तेरतुः तेरुः ॥ झटकवर्गअचहवादिददिशसिकृतवर्जितानामुदाहरणं । यम उपरमे येमतुः येमुः । रेणतुः रेणुः । मनूङ माने मेनाते मेनिरे ॥ झटकजहवादिदशसिकृतवर्जितानामिति किं? झटादि झट जझटतुः जझटुः । भण शब्दे बभणतुः बभणुः कादि कणमीलने चकणतुः । अजादि इयजिथ उवपिथ ॥ हादि हसि हसने जहसतुः जहसुः ॥ वादि वण शब्दे ववणतुः ववणुः । ददि कृत शॄ हिंसायां विशशरतुः विशशरुः । लूङ् च्छेदने ललुविथ । पूङ् पुणविथ आदेशादुत्यन्नो योऽकारस्तद्वान् धातुः कृत इत्यु-

**तोऽन्तर्हलोः** ।४।१।६३। त्रप् फलि भज तॄ इत्येतेषां झट्कवर्गाञ्ह्वादिदिशसिक्तवर्जितानां च धातूनां द्वयोर्हलोर्मध्ये वर्तमानस्यात एद्भवति इडादावपिति च लिटि परे न च द्विः ॥

१२०९ **नित्यानिट्तासोऽत्वदन्मृज्दृशस्थे वाॠव्यात्तेः** ।४।२।१९०। नित्यमनिट् ताम् यस्य तस्मादकारवतः अजन्तात् मृजिदृशिभ्यां च थे परे इड्वा न भवति न वृ ऋ व्या अत्ति इत्येतेभ्यः ॥

१२१० **मिपोऽश्** ।१।४।१००। लिटो मिपोऽश् वा भवति ॥ शेषं प्राग्वत् । पपाच पेचतुः पेचुः । पपक्थ पेचिथ पेचथुः पेच । पपाच पपच पेचिव पेचिम ॥ पेचे पेचाते पेचिरे । पेचिषे पेचाथे पेचिध्वे । पेचे पेचिवहे पेचिमहे ॥

१२११ **लिटि वा** ।४।२।१२०। अदो लिटि घस्लृ वा भवति ॥ लृदित् द्विः लुगादि ।

१२१२ **गम्हन्जन्खन्घसोऽनङ्यचि लुक् क्ङि** ।४।१।२२०। गमादीनामुपान्त्यस्याचः क्ङित्यजादौ लुग् भवति नाङि ॥ षत्वचर्त्वे । जघास जक्षतुः जक्षुः । जघसिथ जक्षथुः जक्ष । जघास जघस जक्षिव जक्षिम ॥ पक्षे "लिट्यादादेरत" इत्यात् । आद आदतुः आदुः । आदिथ आदथुः आद । आद आदिव आदिम ॥ प्रत्ययेऽसुधीण इति यञ् । वेङ्ञेरिति धस्य वा ढः । शिश्ये शिश्याते शिश्यिरे । शिश्यिषे शिश्याथे शिश्यिध्वे शिश्यिढ्वे । शिश्ये शिश्यिवहे शिश्यिमहे ॥ ब्रुवो वचि द्विः ॥

१२१३ **इग्यजः साचोऽर्याज्यम्** ।४।१।१०८। आ ज्यो इत्यतो

---

च्यते ॥ द्वयोर्हलोरिति किं? आटतुः । हलोरिति द्वन्द्वनिर्देशादिह न भवति ततक्षतुः । अत इति किं? दिदेवतुः ॥

१ गम्लृ गतौ । हन हिंसागत्योः : जनैङ् प्रादुर्भावे । खनूञ् अवधारणे । घसादेशः । अचीति किं? गम्यते । इहाचीत्युत्तरत्रानुवृत्त्यर्थः । क्ङीति किं? गमनं हनन । अनङीति किं? अगमत् । अघसत् । गोहोऽचीत्यतः अचीत्यनुवर्तते अस्मिन्पुनर्ग्रहणं उत्तरत्रानुवृत्त्यर्थम् ॥

वक्ष्यमाणस्य धातोर्लिटि द्विर्भावे पूर्वस्य साचो यञ इग्भवति न रेफयकारपरस्य ॥ अपिति श्र्यादीतीक् दीर्घः । उवाच ऊचतुः ऊचुः । उवचिथ उवक्थ ऊचथुः ऊच । उवाच उवच ऊचिव ऊचिम ॥ ऊचे ऊचाते ऊचिरे इत्यादि ॥ पित्यङ्वौ णित्यात् कित्युव् थे वेट् वस्मसोरिट् । जुहाव जुहुवतुः जुहुवुः । जुहविथ जुहोथ जुहुवथुः जुहुव । जुहाव जुहव जुहुविव जुहुविम ॥

**१२१४ भीह्रीभृहोः श्लुवत्** ।१।४।८५। भ्यादिभ्यः परस्य लिट आम् वा भवति स च श्लुवत् ॥ तस्य चानन्तरं लिडन्ताः कृभ्वस्तयः प्रयुज्यन्त एव ॥ अतो द्वित्वादि । विदात् किदिति नियमादाम्येङ्वौ ॥

**१२१५ न** ।१।४।४८। आमः परात् कृञो लस्तङ् न भवति ॥ शेषं प्राग्वत् । जुहवांचकार जुहवांचक्रतुः जुहवांचक्रुः । जुहवांचकर्थ जुहवांचक्रथुः जुहवांचक्र । जुहवांचकार जुहवांचकर जुहवांचकृव जुहवांचकृम ॥

**१२१६ इटि चातो लुक्** ।४।२।८४। आदन्तस्य धातोरिट्यजादौ च क्ङिति स्यश्लि प्रत्यये लुग् भवति ॥ जहे जहाते जहिरे इत्यादि ॥

**१२१७ णमेरौशातः** ।१।४।९९। आतो लिटो णाश्मिपोरौश् भवति ॥ श इत् ऐच् । दधौ दधतुः दधुः । दधिथ दधाथ दधथुः दध । दधौ दधिव दधिम ॥ दधे दधाते दधिरे इत्यादि ॥ द्वित्वादौ कृते एङ् । दिदेव दिदिवतुः दिदिवुः । दिदेविथ दिदिवथुः दिदिव । दिदेव दिदिविव दिदिविम ॥ सुषुवे सुषुवाते सुषुविरे । सुषुविषे सुषुवाथे सुषुविद्वे सुषुविध्वे । सुषुवे सुषुविवहे सुषुविमहे ॥ त्रप्फलीत्यत एत् । ननाह नेहतुः नेहुः । नेहिथ ननद्ध नेहथुः नेह । ननाह ननह नेहिव नेहिम ॥ नेहे नेहाते नेहिरे इत्यादि॥ सुषाव सुषुवतुः सुषुवुः। सुषविथ सुषोथ इत्यादि॥

**१२१८ नक् चाश्नृदाद्यनेकहलः** ।४।१।१०६। अशौङः ऋदादेरनेकहलश्च धातोर्लिटि द्विर्भावे पूर्वस्यात आद्भवति नक् चास्य ॥ अकाविती । आनशे आनशाते आनशिरे । आनशिषे आनशाथे इत्यादि ॥

**१२१९ चेर्वा** ।४।१।७३। चिनोतेर्लिट्सनोर्द्विर्भावे पूर्वात्परस्य कुर्वा

भवति ॥ चिकाय चिक्यतुः चिक्युः । चिकयिथ चिकेथ इत्यादि ॥ अकुत्वे। चिचाय चिच्यतुः चिच्युः इत्यादि । चिक्ये चिक्याते चिक्यिरे । इत्यादि॥ चिच्ये चिच्याते चिच्यिरे इत्यादि ॥ अपितीय् शेषं प्राग्वत् । चिकाथ चिकियतुः चिकियुः । चिकयिथ चिकेथ इत्यादि । यञ् । वव्रे वव्राते वव्रिरे । ववृषे वव्राथे ववृढ्वे । बव्रे ववृवहे ववृमहे ॥ वशीति यञ इक् । जग्राह जगृहतुः जगृहुः । जग्रहिथ इत्यादि ॥ जगृहे जगृहाते जगृहिरे इत्यादि ॥ तुतोद तुतुदतुः तुतुदुः । तुतोदिथ इत्यादि ॥

**१२२० ऋतः** ।४।२।१९१। ऋत एकाचस्थस्येड् न भवति ॥ ममार मम्रतुः मम्रुः । ममर्थ इत्यादि ॥ मुमोच मुमुचतुः मुमुचुः । मुमोचिथ इत्यादि ॥ मुमुचे मुमुचाते मुमुचिरे इत्यादि ॥ ततान तेनतुः नेनुः । तेनिथ इत्यादि ॥ मेने मेनाते मेनिरे इत्यादि ॥

**१२२१ कृञोऽसः** ।१।२।१९२। असट्कात् कृञस्थस्येड् न भवति ॥ चकार चक्रतुः चक्रुः । चकर्थेत्यादि ॥ चक्रे चक्राते चक्रिरे इत्यादि ॥ तस्यैव सम्पूर्वस्य 'सम्पर्युपात् कृञः सड्भूषसमवाये' इति सटि ॥

**१२२२ स्कृच्छृतः** ।४।२।१२। स्कृऋच्छोः ऋदन्तस्य चेको लिट्यर्भवति ॥

**१२२३ लुक् खयि** ।४।१।८१। द्विर्भावे पूर्वस्य खयि परे पूर्वस्य हलो लुग् भवति ॥ सञ्चस्कार सञ्चस्करतुः सञ्चस्करुः । संचस्करिथेत्यादि ॥ रुरोध रुरुधतुः रुरुधुः ॥ रुरोधिथेत्यादि ॥ बुभुजे बुभुजाते बुभुजिरे इत्यादि ॥ युयोज युयुजतुः युयुजुः युयोजिथेत्यादि ॥ युयुजे युयुजाते युयुजिरे इत्यादि ॥ चोरयांचकार चोरयाञ्चक्रतुः चोरयाञ्चक्रुः इत्यादि ॥ छादयांचक्रे छादयांचक्राते छादयांचक्रिरे इत्यादि ॥ लक्षयाञ्चकार लक्षयांचक्रतुः लक्षयांचक्रुरित्यादि ॥ लक्षयाञ्चक्रे लक्षयाञ्चक्राते लक्षयाञ्चक्रिरे इत्यादि ॥ योजयाञ्चकार योजयांचक्रतुः योजयांचक्रुः इत्यादि ॥ युयोज युयुजतुः युयुजुः इत्यादि ॥ अर्चयाञ्चकार अर्चयाञ्चक्रतुः अर्चयाञ्चक्रुः इत्यादि ॥ नक् । आनर्चे

आनर्चाते आनर्चिरे इत्यादि ॥ वारयाञ्चकार वारयाञ्चक्रतुः वारयाञ्चक्रुः इत्यादि ॥ ववार वव्रतुः वव्रुः ॥ अवृव्याचेरिति निषेधात्थस्येट् । ववरिथ इत्यादि ॥ वव्रे वव्राते वव्रिरे इत्यादि ॥ इति कर्तरि लिट्प्रकरणम् ॥

१२२४ **लुङ्** ।४।३।२०५। भूतेऽर्थे धातोर्लुङ् भवति ॥ उङावितौ॥

१२२५ **सिर्लुङि** ।४।३।२। धातोर्लुङि सिर्भवति ॥ इदित् लस्तिबादि॥

१२२६ **घुपाभूस्थैतेः श्लुक्** ।४।१।७३। घ्वादिभ्यः सेरतङाने श्लुग् भवति । पिति ॥

१२२७ **भूस्वोऽद्धेः** ।४।२।२०। भूस्वोरिकः लिवर्जितलादेशे एङ् न भवति न द्व्युक्तेः ॥ अभ्व इति निषेधात् न झेर्जुम् । अजादावुवि लुङ्लिटि भुव इत्युत ऊत् अडादि । अभूत् अभूताम् अभूवन् । अभूः अभूतम् अभूत । अभूवम् अभूव अभूम ॥ ऐच् । सेरिडादि ॥

१२२८ **धि वा** ।४।२।७८। धातोर्धकारादौ प्रत्यये सस्य लुग्वा भवति ॥ पक्षे जश् शेषं प्राग्वत् । ऐधिष्ट ऐधिषाताम् ऐधिषत । ऐधिष्ठाः ऐधिषाथाम् ऐधिड्ढ्वम् ऐधिध्वम् । ऐधिषि ऐधिष्वहि ऐधिष्महि ॥

१२२९ **हलाम्** ।४।२।६७। हलन्तस्य धातोरकः अतङानपरे सौ आरैचो भवन्ति ॥

१२३० **स्यस्तेस्सोऽलः** ।४।२।२७। सोरस्तेश्च सात्परस्य अकृङितो हलः अलेर्मात्रस्य अलेर्लेः ईड् भवति ॥ट इत् ॥

१२३१ **जलह्रस्वाल्लुक् सस्तौ** ।४।२।७६। जलन्तात् ह्रस्वान्ताच्च धातोः परस्य सेस्तवर्गादौ लुग् भवति ॥ झेर्ज्जुम् । शेषं प्राग्वत् । अपाक्षीत् अपाक्ताम् अपाक्षुः । अपाक्षीः अपाक्तम् अपाक्त । अपाक्षम् अपाक्ष्व

---

१ घुभ्यः पा भू स्था इत्येतेभ्यः एतिभ्यां च परस्येति । पा पाने इत्यस्य ग्रहणं न पा रक्षणे इत्यस्य तस्यैवादित्वाल्लाक्षणिकत्वाच्च न भवति । एतीति तिप्निर्देशः इण् गतौ इक् स्मरणे इत्यनयोर्भवति ॥

२ बहुवचनं जात्यर्थं तेन अनेकहल्व्यवधानेऽपि भवति । यथा सृजेः असाक्षीत् ॥

३ अल्मात्रस्येल्लस्य वर्णमात्रस्येत्यर्थः ॥

अपाक्ष्म ॥ अपक्त अपक्षाताम् अपक्षत । अपक्थाः अपक्षाथाम् अपग्ध्वम् । अपक्षि । अपक्ष्वहि अपक्ष्महि ॥

**१२३२ न क्षण्शासिश्विजाग्रेदिन्मह्यश्च** ।४।२।७०। क्षणादेरेदितो महयान्तस्य हलन्तस्य च धातोरकः इडादौ सावचो न भवन्ति ॥

**१२३३ ईटीटः** ।४।२।७७। इटः परस्य सेरीटि लुग् भवति ॥ दीर्घः । अनन्दीत् अनन्दिष्टाम् अनन्दिषुः इत्यादि ॥

**१२३४ घस्लजघञ्लुङ्सनि** ।४।२।११९। अदो घस्लृ भवत्यजघञ्लुङ्सनसु परतः ॥ लृदित् ॥

**१२३५ सर्त्तिशास्तिलिद्द्युत्पुष्यादेः** ।४।३।११। सर्त्तिशास्तिभ्यां लृदितः द्युतादेः पुष्यादेश्च कर्तरि लुङ्यतङि अङ् भवति ॥ सेरपवादः । ङ इत् । अनङीति नाचो लुक् । अघसत् अघसताम् अघसन् इत्यादि ॥ अशयिष्ट अशयिषाताम् अशयिषत इत्यादि ॥

**१२३६ वक्त्यसूख्यातेः** ।४।३।१२। वक्त्यादेः कर्तरि लुङि अङ् भवति ॥

---

१ क्षणू हिंसायां । क्षण निर्मीलने । शसु हिंसायां । टुओश्वि गतिवृद्ध्योः । जागृ निद्राक्षये ॥ क्षणू अक्षणीत् । शसू व्यशसीत् । श्वि अश्वयीत् । जागृ अजागरीत् । एदित् कखे हसने अकखीत् । म अक्रमीत् । अस्यमीत् । अग्रहीत् अजहीत् । य अहयीत् । अव्ययीत् । हलां अदेवीत् । सानुबन्धकग्रहणात्क्षणादीनां यङ्लुगन्तानामपि प्रतिषेधः । अचक्षणीत् । एदितस्तु यङ्लुच्यप्रतिषेधः । अजाहसीत् अजाहासीत् । अत एव क्षणादयो नैदितः क्रियन्ते ।

२ अजित्यच्प्रत्ययः न तु अच् इति प्रत्याहारान्तर्गतो वर्णः ।

३ सृ गतौ । शासु अनुशिष्टौ । लृ इत् यस्यासौ लित् । द्युत् च पुष्यश्च द्युत्पुष्यौ तौ आदी यस्यासौ द्युत्पुष्यादिः । पुनर्द्वन्द्वः तस्मात् ॥

४ वक्तीति वच् भाषणे ब्रूञादेशश्च । असु क्षेपणे । ख्यातीति ख्या प्रकथने चक्षादेशश्च । असु ग्रहणं तदर्थम् । अतङि पुष्यादित्वात्सिद्धम् । तिङ्निर्देशो यङ्लुनिवृत्त्यर्थः । अवावचीत् । अचाख्यासीत् । अनुबन्धनिर्देशो अदाघनदाघोरनदादेरित्यस्यानित्यत्वात् ॥

**१२३७ श्वयत्यस्वचपतोऽङ्ग्यथगुम्पम्** ।४।२।७। श्वयतेरङि अङ्भवति असस्थक् वच उम् पतः पम् ॥ अकमा इतः । अवोचत् अवोचताम् अवोचन् इत्यादि ॥ अवोचत अवोचेताम् अवोचन्त इत्यादि ॥

**१२३८ सावारैच:** ।४।२।६६। धातोरकः अतङानपरे सौ परतः आरैचो भवन्ति ॥ शेषं प्राग्वत् । अहौषीत् अहौष्टाम् अहौषुरित्यादि ॥ अहास्त अहासाताम् अहासत इत्यादि ॥ घुपेति सेः श्लुक् । अधात् अधाताम् अधुः । अधाः अधातम् अधात । अधाम् अधाव अधाम ॥

**१२३९ घुस्थोरि च** ।४।१।१६८। घुस्थोरात इद् भवति तङि परे सकारादौ सौ परे किद्वच ॥ जल्हृस्वादिति सेर्लुक् । अधित अधिषाताम् अधिषत। अधिथाः अधिषाथाम् अधिध्वम् । अधिषि अधिष्वहि अधिष्महि ॥ अदेवीत् अदेविष्टाम् अदेविषुः इत्यादि ॥ रधादीति वेट् । असविष्ट असविषाताम् असविषत इत्यादि ॥ असोष्ट । अनात्सीत् अनाद्धाम् अनात्सुरित्यादि ॥ अनद्ध अनत्साताम् अनत्सत इत्यादि ॥

**१२४० घूञ्सुस्तुभ्य इट्** ।४।२।७१। धूञादेरिड् भवति सेरतङाने परे ॥ असावीत् असाविष्टाम् असाविषुरित्यादि ॥ आशिष्ट आशिषाताम् आशिषत इत्यादि ॥ इडभावे व्रश्चेति शस्य षः षढः कस्सि षत्वं ष्टुत्वं च। आष्ट आक्षाताम् आक्षत । आष्ठाः आक्षाथाम् आड्ढ्वम् । आक्षि आक्ष्वहि आक्ष्महि ॥ अचैषीत् अचैष्टाम् अचैषुरित्यादि ॥ अचेष्ट ॥ अक्रैषीत् अक्रैष्टां । हल्म्यामित्यादिनेड्विकल्पः ॥

**१२४१ ऋद्वृङ्वॄलतङ्से:** ।४।२।१३७। ऋदन्ताद्वृङ्वृञ्भ्यां च परस्येट ईड्वा भवति न लिङि लिटि अतङ्परे च सौ परतः ॥ अवरीष्ट अवरीषाताम् अवरीषत इत्यादि ॥ अवरिष्ट अवरिषाताम् अवरिषत इत्यादि ॥ अवृत । ग्रह इति इट ईट् । न क्षणित्यारैजभावः । अग्रहीत अग्रहीष्टाम् अग्रहीषुरित्यादि ॥ अग्रहीष्ट अग्रहीषाताम् अग्रहीषत इत्यादि ॥ अतौत्सीत् अतौत्ताम् अतौत्सुरित्यादि ॥ अमृत अमृषाताम् अमृषत इत्या-

दि ॥ ऌदित्त्वादतङ्यङ् । अमुचत् अमुचताम् अमुचन् इत्यादि ॥ अमुक्त अमुक्षाताम् अमुक्षत इत्यादि ॥

**१२४२ वोर्णुञ्हलादेर्लघोरिटि** ।४।२।६९। ऊर्णुञः हलादेर्हलन्तस्य च धातोर्लघोरतः अतङाने इडादौ सौ परे आरैचो वा भवन्ति ॥ अतानीत् अतानिष्टाम् अतानिषुः इत्यादि ॥ अतनीत् अतनिष्टाम् अतनिषुरित्यादि ॥

**१२४३ तन्भ्यस्थास्ते** ।४।२।७५। तनादिभ्यः सेः लुग्वा भवति थास्तयोः परतः ॥ लुचि स्थानिवद्भावाभावात् नेट् । ङित्वात् हन्मन्यमिति नलुक् च । अतत अतनिष्ट अतनिषाताम् अतनिषत । अतथाः अतनिष्ठाः इत्यादि ॥ एवम् अमत अमनिष्ट अमनिषाताम् अमनिषत । अमथाः अमनिष्ठाः इत्यादि ॥ अकार्षीत् अकार्ष्टाम् अकार्षुरित्यादि ॥ अकृत अकृषाताम् अकृषत इत्यादि ॥

**१२४४ ऋदितोऽतङि** ।४।३।१०। ऋदितो धातोः कर्तर्यतङि लुङि मध्ये अङ्वा भवति ॥ पक्षे सिः ऐच् । अरुधत् अरुधताम् अरुधन् इत्यादि ॥ अरौत्सीत् अरुद्ध । अयुजत् अयौक्षीत् अयुक्त ॥

**१२४५ कंश्रिद्रुस्रुणेर्ङः कर्तरि** ।४।३।७। कमादेर्ण्यन्ताच्च कर्तरि लुङि ङो भवति ॥ ङ इत् ॥

**१२४६ ङेऽशास्वग्लाश्यृदितः** ।४।१।२११। धातोरुपान्त्यस्याचो ङपरे णौ परे ह्रस्वो भवति न शासेरग्लाशिनः ऋदितश्च ॥ द्विः ॥

**१२४७ आद्येकाच्** ।४।१।४४। अनेकाचो धातोर्लिटि ङे च तदादिरेकाच् द्विर्भवति ॥

**१२४८ लघोर्दीर्घोऽनजादेः** ।४।१।१०१। अनजादेर्धातोर्द्विर्भावे

---

१ अगिति प्रत्याहारस्तस्य नाशो निवृत्तिर्यस्य स अग्लाशी । शास् च अग्लाशी च ऋदिच्च शास्वग्लाश्यृदित् । न विद्यते शास्वग्लाश्यृदित् यस्य तस्य ।

पूर्वस्य लघोर्लघौ धात्वक्षरे परे ङपरेऽनग्लुचि णौ च परतो दीर्घो भवति ॥ णिलुक् अचूचुरत् ॥

**१२४९. सन्वल्लघौ ङेऽनग्लुचि** ।४।१।१००। द्विर्भावे पूर्वस्य लघौ परे सनीव कार्यं भवति ङपरेऽनग्लुचि णौ परतः ॥

**१२५० सन्यतः** ।४।१।९६। द्विर्भावे पूर्वस्यात इद्भवति सनि परे ॥ अन्तरङ्गत्वात्प्रागेव छस्य द्वित्वं ॥

**१२५१ स्वरश्चर** ।४।१।७९। द्विर्भावे पूर्वस्य स्वरश्चर्भवति ॥ शेषं प्राग्वत् । अचिच्छदत । अललक्षत् अललक्षत । परस्य गुरुत्वान्न सन्वद्भावः अयूयुजत् अयौक्षीत् ॥

**१२५२ ततः** ।४।१।४८। अजादेरनेकाचो द्विर्भावप्राप्तौ आदेरचः परः एकाच् द्विर्भवति ॥

**१२५३ न बन्द्रा बलि** ।४।१।४९। आदेरचः परे बनदरा बलि न द्विर्भवन्ति ॥ आर्चिचत् आर्चिष्ट । अवीवरत् । अवारीत् । अवृत । अवरीष्ट । अवरिष्ट । एवमन्येऽपि धातवो नेतव्याः ॥

**१२५४ परिदेवनानद्यतने लुट्** ।४।३।२८३। परिदेवने अनद्यतने च भविष्यत्यर्थे धातोर्लुट् भवति ॥ उटावितौ ॥

**१२५५ तास्यौ लुल्रोः** ।४।३।१। धातोर्लुटि तास् भवति लङ्लृटोः स्यः ॥ इट् लस्तिवादि ॥

**१२५६ झेः** ।१।४।९७। लुटस्तिपो डा भवति तसौ रौ झे रस् ॥ ड इत् अन्त्याजादिलुक् ॥

**१२५७ तासस्त्योः स्नि** ।४।२।७९। तास्प्रत्ययस्य अस्तेश्च सस्य सरयोर्लुग् भवति ॥ एङ्वौ । भविता भवितारौ भवितारः । भवितासि भवितास्थः भवितास्थ । भवितास्मि भवितास्वः भवितास्मः । तङि ॥

१२५८ **लोराङ्मार्ङ्डारौरस्** ।१।४।९६। लुटस्तातांझानां यथा-सङ्ख्यं डारौरसो भवन्ति ॥ ड इत् एत्वादि ॥

१२५९ **एति हः** ।४।२।८०। तासस्त्योः सस्य एति हो भवति ॥ शेषं प्राग्वत् । एधिता एधितारौ एधितारः । एधितासे एधितासाथे एधि-ताद्ध्वे एधिताध्वे । एधिताहे एधितास्वहे एधितास्महे ॥ पक्ता । अत्ता । शयिता । वक्ता । होता । हाता । धाता । देविता । सविता । सोता । नद्धा । अशिता । अष्टा । चेता । क्रेता । वरिता वरीता । ग्रहीता । तोत्ता । मर्त्ता । मोक्ता । तनिता । मनिता । कर्त्ता । रोद्धा । भोक्ता । योक्ता । चोर-यिता । छदायिता । लक्षयिता । योजयिता । योक्ता । अर्चयिता । अर्चिता । वारयिता । वरीता । वरिता । एवमन्येऽपि धातवो नेतव्याः ॥

१२६० **लेङ्निमित्तेऽवृत्तौ भूते च लृङ्** ।४।४।१०८। सति लेङ्निमित्ते क्रियातिपत्तिमति भूते भविष्यति चार्थे धातोर्लङ् भवति ॥ ऋङावितौ मध्ये स्यः इडादिः प्राग्वल्लीस्तिबादयः लुगादि च । अभविष्यत् अभविष्याताम् अभविष्यन् । अभविष्यः अभविष्यतम् अभविष्यत । अभविष्यम् अभविष्याव अभविष्याम ॥ ऐधिष्यत ऐधिष्येताम् ऐधिष्यन्त इत्यादि । अपक्ष्यत् अपक्ष्यत । आत्स्यत् अशयिष्यत । अवक्ष्यत् अवक्ष्यत अहोष्यत् अहोष्यत । अधास्यत् अधास्यत । अदेविष्यत् असविष्यत

---

१ आङत्राभिविधौ मर्यादायामसन्देहार्थः । प्रागित्युच्येत ततश्च त्रयाणामपि ग्रहणं स्यात् ॥ नानुबन्धकृतमनेकाल्त्वं । कोऽर्थः? अनुबन्धेन कृतमनेकाल्त्वं न किन्तु अनुब-न्धं मुक्त्वा यः प्रयोगी एवानेकाल् तस्यानेकाल्त्वमित्यर्थः इति डाऽऽदेशो न सर्वस्य ॥

२ लेङो निमित्तं कारणं सामग्री लेङ्निमित्तम् । नास्य वृत्तिर्निष्पत्तिरस्तीति अवृत्तिर-तिपत्तिमान् लेङ्निमित्ते अवृत्तौ भूते वर्त्स्यति चार्थे वर्तमानाद्धातोर्लृङ् प्रत्ययो भवति ॥ लेङ्निमित्तं यत्पदं 'यद्यदियदाजातौ लेङ् ।१६७०।' इत्यादि 'वाढेऽप्युत लेङ् ।१६७२।' इत्यन्तसूत्रेषु निर्दिष्टं तस्मिन्नुपपदे लेङ् भवतीत्युच्यते ॥ यदीह गुरूनुपासिष्येत तर्हि शास्त्रान्तमगमिष्यत् । अत्र हेतुभूतं गुरूपासनादि फलभूतं शास्त्रान्तगमनादि भविष्यद्वृ-त्तिकमुपलभ्यैवं प्रयुज्यते ॥

असोष्यत । अनत्स्यत् अनत्स्यत । असोष्यत् । अशिष्यत आक्ष्यत । अचेष्यत् अचेष्यत । अक्रेष्यत् । अवरिष्यत अवरीष्यत । अग्रहिष्यत् अग्रहीष्यत । अतोत्स्यत् ॥

१२६१ ऋद्धनोः स्ये ।४।२।१६६। ऋदन्तात् हन्तेश्च स्यप्रत्यये इड् भवति ॥ अमरिष्यत् । अमोक्ष्यत् अमोक्ष्यत । अतनिष्यत् अतनिष्यत । अमनिष्यत । अकरिष्यत् अकरिष्यत । अरोत्स्यत् । अभोक्ष्यत । अयोक्ष्यत् अयोक्ष्यत । अचोरयिष्यत् । अछादयिष्यत । अलक्षयिष्यत् अलक्षयिष्यत । अयोजयिष्यत् । अयोक्ष्यत् । आर्चयिष्यत् आर्चिष्यत । अवारयिष्यत् अवरिष्यत् अवरीष्यत् । अवरिष्यत अवरीष्यत । एवमन्येऽपि धातवो नेतव्याः ॥ गम्यादि वत्स्र्यतीत्याधिकृत्य ॥

१२६२ लृट् ।४।३।२८२। भविष्यत्यर्थे धातोर्लृट् प्रत्ययो भवति ऋटावितौ । मध्ये स्यः । इडादि सर्वं पूर्ववत् । भविष्यति भविष्यतः भविष्यन्तीत्यादि ॥ एधिष्यते एधिष्येते एधिष्यन्ते इत्यादि । पक्ष्यति पक्ष्यते । अत्स्यति । शयिष्यते । वक्ष्यति वक्ष्यते । होष्यति हास्यते । धास्यति धास्यते । देविष्यति । सविष्यते । सोष्यते । नत्स्यति नत्स्यते । सोष्यति । अशिष्यते । अक्ष्यते । चेष्यति । चेष्यते । क्रेष्यति । वरिष्यते वरीष्यते । ग्रहीष्यति ग्रहीष्यते । तोत्स्यति । मरिष्यति । मोक्ष्यति मोक्ष्यते । तनिष्यति । मनिष्यते । करिष्यति करिष्यते । रोत्स्यति । भोक्ष्यते । योक्ष्यति योक्ष्यते । चोरयिष्यति । छादयिष्यते । लक्षयिष्यति लक्षयिष्यते । योजयिष्यति योक्ष्यति । अर्चयिष्यति अर्चिष्यते । वारयिष्यति । वरिष्यति वरीष्यति । एवमन्येऽपि धातवो नेतव्याः ॥ इति कर्त्तरि लिङादिप्रकरणम् ॥

भावकर्मणोः लिङ् प्राग्वत्तङादि ।

१२६३ हन्दशिग्रहज्भ्यः सितास्स्यसटां ञिड्वा ।४।३। १८। हनादेरजन्ताच्च परेषां सितास्स्यसटां कर्मभावयोर्ञिड्वा भवति ॥ अटा-

वितौ पक्षे इट्। शेषं प्राग्वत् । भाविषीष्ट भविषीष्ट देवदत्तेन देवदत्तजिनदत्ताभ्यां देवदत्तजिनदत्तयज्ञदत्तैर्वा । कर्मणि अनुभाविषीष्ट अनुभाविषीयास्ताम् अनुभाविषीरन् । अनुभविषीष्ट अनुभविषीयास्ताम् अनुभविषीरन् । इत्यादि । एधिषीष्ट । पक्षीष्ट । अत्सीष्ट । शायिषीष्ट । शयिषीष्ट । वक्षीष्ट । ह्राविषीष्ट । होषीष्ट ॥

**१२६४ आतो यम्** ।४।१।२३७। आदन्तस्य धातोर्ञ्णिति कृति ञौ च यम् भवति ॥ अमावितौ । ह्रायिषीष्ट । ह्रासीष्ट । धायिषीष्ट । धासीष्ट । देविषीष्ट । साविषीष्ट । सविषीष्ट । सोषीष्ट । नत्सीष्ट । साविषीष्ट अशिषीष्ट । अक्षीष्ट । चायिषीष्ट चेषीष्ट । क्रायिषीष्ट क्रेषीष्ट । वारिषीष्ट वरिषीष्ट वृषीष्ट । ग्राहिषीष्ट ग्रहीषीष्ट । तुत्सीष्ट । मारिषीष्ठ । म्रषीष्ट । मुक्षीष्ट । तनिषीष्ट । मनिषीष्ट । कारिषीष्ट कृषीष्ट । रुत्सीष्ट । भुक्षीष्ट । युक्षीष्ट । चोरिषीष्ट चोरयिषीष्ट । छादिषीष्ट छादयिषीष्ट । लक्षिषीष्ट लक्षयिषीष्ट । योजिषीष्ट योजयिषीष्ट । युक्षीष्ट । अर्चिषीष्ट अर्चयिषीष्ट । वारिषीष्ट वारयिषीष्ट वृषीष्ट । एवमन्येऽपि धातवो नेयाः ॥

लिट् । भावे बभूवे तेन ताभ्यां तैर्वा । कर्मणि अनुबभूवे अनुबभूवाते अनुबभूविरे इत्यादि । एधाञ्चक्रे । पेचे । आदे । जक्षे । शिश्ये । ऊचे । जुहवाञ्चक्रे । जुहुवे । जहे । दधे । दिदिवे । सुषुवे । नेहे । आनशे । चिक्ये । चिच्ये । चिक्रिये । वव्रे । जगृहे । तुतुदे । मम्रे । मुमुचे । तेने । मेने । चक्रे । रुरुधे । बुभुजे । युयुजे । चोरयांचक्रे । छादयांचक्रे । लक्षयांचक्रे । योजयांचक्रे युयुजे । अर्चयाञ्चक्रे आनर्चे । वारयाञ्चक्रे वव्रे । एवमन्येऽपि धातवो नेयाः ॥ लुङि ॥

**१२६५ कर्मभावे** ।४।३।१७। कर्मभावयोर्धातोर्ञिर्भवति लुङि ते परे ॥ ञ इत् ॥

**१२६६ ञेः** ।४।२।३८। ञेः परस्य लिबार्जितलादेशस्य लुग् भवति ॥ एङ्वातः । अभावि तेन त्वया मया । कर्मणि अन्वभावि । ञिटि अन्वभा-

विषाताम् अन्वभाविषत । इटि अन्वभविषाताम् । ऐधि । अपाचि अपक्षाताम् । अघासि ॥

**१२६७ तासि स्यश्चि** ।४।२।८१। धातोस्सस्य तो भवति शिलादेशवर्जिते लिङि लिटि च सादौ प्रत्यये परे ॥ इति सस्य तः । अघस्साताम् । अशायि । अवाचि अवक्षाताम् । अहावि अहाविषाताम् अहोषाताम् । अहायि अहायिषाताम् अहासाताम् । अधायि अधायिषाताम् अधिषाताम् । अदेवि । असावि असाविषाताम् असविषाताम् असोषाताम् । अनाहि अनत्साताम् । आशि आशिषाताम् आक्षाताम् । अचायि अचायिषाताम् अचेषाताम् । अक्रायि अक्रायिषाताम् अक्रेषाताम् । अवारि अवारिषाताम् अवरिषाताम् अवरीषाताम् अवृषाताम् । अग्राहि अग्राहिषाताम् अग्रहीषाताम् । अतोदि अतुत्साताम् । अमारि । अमोचि अमुक्षाताम् । अतानि अतनिषाताम् । अमानि अमनिषाताम् । अकारि अकारिषाताम् अकृषाताम् । अरोधि अरुत्साताम् । अभोजि अभुक्षाताम् । अयोजि अयुक्षाताम् । अचोरि अचोरिषाताम् अचोरयिषाताम् । अच्छादि अच्छादिषाताम् अच्छादयिषाताम् । अलक्षि अलक्षिषाताम् अलक्षयिषाताम् । अयोजि अयोजिषाताम् अयोजयिषाताम् अयुक्षाताम् । आर्चि आर्चिषाताम् आर्चयिषाताम् । अवारि अवारिषाताम् अवारयिषाताम् अवरीषाताम् अवृषाताम् । एवमन्येऽपि योज्याः ॥

लुटि ॥ भावे । भाविता भविता तेन । कर्मणि अनुभाविता अनुभविता । एधिता । पक्ता । नन्दिता । अत्ता । शायिता । शयिता । वक्ता । हाविता होता । हायिता हाता । धायिता धाता । देविता । साविता सविता सोता । नद्धा । आशिता अष्टा । चायिता चेता । क्रायिता क्रेता । वारिता वरिता वरीता । ग्राहिता ग्रहीता । तोत्ता । मारिता मर्त्ता । मोक्ता । तनिता । मनिता । कारिता कर्ता । रोद्धा । भोक्ता । योक्ता । चोरिता चोरयिता । च्छादिता च्छादयिता । लक्षिता लक्षयिता । योजिता योजयिता

योक्ता । अर्चिता अर्चयिता । वारिता वारयिता वरिता वरीता । एवमन्येऽपि साध्याः ॥

लृङि । स्ये । ञिटि । भावे अभाविष्यत तेन । इटि । अभविष्यत तेन । कर्मणि अन्वभाविष्यत अन्वभविष्यत । ऐधिष्यत । अपक्ष्यत । आत्स्यत अशायिष्यत अशयिष्यत । अवक्ष्यत । अहाविष्यत अहोष्यत । अहायिष्यत अहास्यत । अधायिष्यत अधास्यत । अदेविष्यत । असाविष्यत असविष्यत असोष्यत । अनत्स्यत । असाविष्यत असोष्यत । आशिष्यत आक्ष्यत । अचायिष्यत अचेष्यत । अक्रायिष्यत अक्रेष्यत । अवारिष्यत अवरिष्यत अवरीष्यत । अग्राहिष्यत अग्रहीष्यत । अतोत्स्यत । अमारिष्यत अमरिष्यत । अमोक्ष्यत । अतनिष्यत । अमनिष्यत । अकारिष्यत अकरिष्यत । अरोत्स्यत । अभोक्ष्यत । अयोक्ष्यत । अचोरिष्यत अचोरयिष्यत । अच्छादिष्यत अच्छादयिष्यत । अलक्षिष्यत अलक्षयिष्यत । अयोजिष्यत अयोजयिष्यत अयोक्ष्यत । आर्चिष्यत आर्चयिष्यत । अवारिष्यत अवारयिष्यत अवरिष्यत अवरीष्यत । एवमन्येऽपि नेयाः ॥

लृटि । अडागमं ङित्कार्यं च वर्जयित्वा शेषं लृङ्वत् । भावे । भाविष्यते भविष्यते तेन । कर्मणि अनुभाविष्यते अनुभविष्यते । एधिष्यते । पक्ष्यते । नन्दिष्यते । अत्स्यते । शायिष्यते शयिष्यते । वक्ष्यते । हाविष्यते होष्यते । हायिष्यते हास्यते । दायिष्यते दास्यते । देविष्यते । साविष्यते सविष्यते सोष्यते । नत्स्यते । साविष्यते सोष्यते । अशिष्यते अक्ष्यते । चायिष्यते चेष्यते । क्रायिष्यते क्रेष्यते । वारिष्यते वरिष्यते वरीष्यते । ग्राहिष्यते ग्रहीष्यते । तोत्स्यते । मारिष्यते मरिष्यते । मोक्ष्यते । तनिष्यते । मनिष्यते । कारिष्यते करिष्यते । रोत्स्यते । भोक्ष्यते । योक्ष्यते । चोरिष्यते चोरयिष्यते । च्छादिष्यते च्छादयिष्यते । लक्षिष्यते लक्षयिष्यते । योजिष्यते योजयिष्यते योक्ष्यते । अर्चिष्यते अर्चयिष्यते । वारिष्यते वारयिष्यते वरीष्यते वरिष्यते ॥ एवमन्येऽपि धातवो नेतव्याः ॥

एवं कर्मकर्त्तर्यपि लिङादिपञ्चके नेयं ॥ लुङि तु ॥

१२६८ न्यजुदुहः ।४।३।४०। अजन्ताद्दुहश्च धातोः कर्मकर्त्तरि ञिर्वा न भवति ॥ पक्षे सिञ्जिट् च वा । शेषं प्राग्वत् । अन्वभावि अन्वभाविष्ट अन्वभविष्ट कम्बलस्स्वयमेव । हलन्तान्नित्य एव ञिः । अपाचि भक्तं स्वयमेव । एवं सर्वत्र योज्यः ॥

१२६९ रुधः ।४।३।४१। रुधः कर्मकर्तरि ञिर्न भवति ॥ सिलुगादि । अरुद्ध गौः स्वयमेव ॥

इति कर्मभावकर्मकर्तृषु लिङादिप्रकरणम् ॥

अथोत्तरप्रकृतेर्लकाराः प्रदर्श्यन्ते । भृशं भवति पुनःपुनर्वा भवतीति विगृह्य ॥

**१२७० अट्याद्येकाज्हलादिभ्योऽरुचिशुभिभ्यां भृशाभीक्ष्णे यङ्** ।४।१।१०। एकाज्हलादेरट्यादेश्च धातोर्भृशाभीक्ष्णयोर्यङ् प्रत्ययो भवति न रुचिशुभिभ्याम् ॥ ङ इत् ॥

**१२७१ सन्यङश्च** ।४।१।४५। सनन्तस्य यङन्तस्य च आद्यैकाच् द्विर्भवति ॥ भूय् इत्यस्य द्विः । यलुक् । आण्जशिति ऊत उत् । भस्य बः ॥

**१२७२ एङमिदाहाकोः** ।४।१।८६। यङन्तस्य द्विर्भावे पूर्वस्याचः आदेङ् चासन्नो भवति न मिदादन्तहाकोः ॥ ततः पूर्ववल्लडादयः । ङित्वात्तङ् । शप्येद इति लुक् । बोभूयते । अबोभूयत । बोभूयतां । बोभूयेत । भावादौ यकि ॥

---

१ पौनःपुन्यं भृशार्थो वा दूराभ्यासमुखानि च ॥
आशुसुष्ठुबहुत्वं च यङोऽर्थाः परिकीर्तिताः ॥ १ ॥

इति न्यायविनिश्चयालङ्कारे प्रोक्तम् ॥ अट गतौ । ऋ गतौ । अशौङ् व्याप्तौ । ऊर्णुञ् आच्छादने । सूच पैशून्ये । सूत्र अवमोचने । मूत्र प्रस्रवणे इति अटादयः ॥ अपरे भृशं अश्नातीत्यशाश्यत इत्याहुः ॥ अन्ये जागर्तेरपीच्छन्ति जाजागीयन्ते । सर्वस्मादप्रत्ययादेकेषां, अवाव्यते ॥

२ आदन्तग्रहणं ओहाक् त्यागे इति विशेषणम् । म् इत् यस्य तस्य आदन्तहाकश्चेति नियमद्वयं तत्र यम्यते । आदन्तहाकः जहाति । आदन्तग्रहणं किं? जिहीते ॥

**१२७३ अतः** ।४।२।१००। अदन्तस्य धातोर्ल्यश्लि प्रत्यये लुग्भवति ॥ इत्यतो लुक् बोभूय्यते तेन अनुबोभूय्यते अबोभूय्यत अन्वबोभूय्यत बोभूय्यताम् अनुबोभूय्यतां बोभूय्येत अनुबोभूय्येत। लिङि कर्त्तरि । बोभूयिषीष्ट। भावे बोभूयिषीष्ट । कर्मणि अनुबोभूयिषीष्ट। लिट्याम् बोभूयांचक्रे बोभूयाम्बभूव बोभूयामास । भावे बोभूयाञ्चक्रे बोभूयाम्बभूवे । कर्मणि अनुबोभूयांचक्रे । लुङि अबोभूयिष्ट । भावे अबोभूयि तेन । कर्मणि अन्वबोभूयि । लुटि बोभूयिता। भावे बोभूयिता देवदत्तेन। कर्मणि अनुबोभूयिता। लृङि अबोभूयिष्यत। भावे अबोभूयिष्यत। कर्मणि अन्वबोभूयिष्यत ॥ लृटि बोभूयिष्यते। भावे बोभूयिष्यते। कर्मणि अनुबोभूयिष्यते ॥ एवं पापच्यते । यकि अत इति लुचि ॥

**१२७४ हलो यः** ।४।२।९८। हलन्ताद्धातोर्यस्य ल्यश्लि प्रत्यये लुग् भवति ॥ पापच्यते अपापच्यत पापच्यतां पापच्येत । पापचिषीष्ट । पापचांचक्रे। अपापचिष्ट । कर्मणि । अपापचि । पापचिता । अपापचिष्यत । पापचिष्यते । नानन्द्यते । य्यय् शाशय्यते । वावच्यते ॥ दीर्घः ॥

**१२७५ यङोऽकवतेः** ।४।१।८५। यङन्तस्य द्विर्भावे पूर्वस्य कुहयोश्चुर्भवति न कवतेः ॥ जोहूयते ॥

**१२७६ गृलुप्सदहजवज्जभचर्दशगत्यर्थाभ्यां गर्ह्यकुटिलयोः** ।४।१।११। ग्रादिभ्यो गर्ह्येऽर्थे यङ् भवति गत्यर्थेभ्यः कुटिले ॥ कुटिलं जिहीते जाहायते। ई हल्यप्ये इतीत्वे एङ् देधीयते। देदीव्यते। सोषूयते। नानद्यते। सोषूयते। अट्यादित्वात् यङ् ॥

**१२७७ ततः** ।४।१।४८। सन्यङन्तस्य लिड्ङे पूर्वस्य चानेकाचो

---

१ हलन्ताद्धातोः परस्य यकारस्य ल्यश्लिप्रत्यये विषये नित्यं श्लुक् भवति ॥ हल् इति किं? लोलुपिता। कण्डूयिता। सोसूत्रिता। मोमूत्रिता ॥ मगदक इति नेर्लुचि कृतायां अयादेशे च हलन्तता। धातोरिति किं? ईर्ष्यिता । मव्येता। पुत्रकाम्यिता ॥ ल्यश्लीति किं? बेभिद्यते ॥

धातोरजादेरादेरचः परः एकाच् द्विर्भवति ॥ इति श्य इत्यस्य द्विर्भावः । यलुगादि अशाश्यते । चेचीयते । चेक्रीयते । यङ्लेङिति री वेव्रीयते । वशीति यङ इक् ॥

१२७८ **रीमृत्वाताम्** ।४।१।९३। ऋकारवतो धातोर्यङन्तस्यं द्विर्भावे पूर्वस्य रीम् भवति ॥ म इत् । जरीगृह्यते । तोतुद्यते । मेम्रीयते । मोमुच्यते ॥

१२७९ **अतोऽनुनासिकस्य मम्** ।४।१।८८। अतः परो योऽनुनासिकस्तदन्तस्य यङन्तस्य द्विर्भावे पूर्वस्य मम् भवति ॥ अमावितौ । तन्तन्यते । मंमन्यते । चेक्रीयते । रोरुध्यते । बोभुज्यते । योगुज्यते। अव्यादित्वाद्याङि णिलुगादि । सोसूच्यते । एवं सोसूत्र्यते । मोमूत्र्यते । वृञो णिजभावपक्षे यङ् वेव्रीयते । प्राग्वत् सर्वे नेतव्यं ॥

१२८० **श्लुर्वा[2]बहुलम्** ।४।१।१२। यङः श्लुर्बहुलं भवति ॥ स्थानिवद्भावेन द्विर्भवति । लडादि । चर्करीतञ्चेत्यदादित्वात् शपः श्लुक् । ङिञ्मीदित इति वचनात् ॥

तिपा शपाऽनुबन्धेन निर्दिष्टं यद्गणेन च ।
यच्चैकाज्ग्रहणं किंचित् पञ्चैतानि न युङ्श्लुचि ॥

इति वचनाच्च ङानुबन्धाश्रितस्तङ् न भवति । तिबादयः । पिति ॥

---

१ कृन्हृन्भ्यां यङि नित्यत्वादन्तरङ्गत्वाच्च यङ्लेङ् कृतीति रीत्वे पश्चाद्विरिति पूर्वस्य रीम्विधौ ऋत्वत्वं नास्ति अतो न रीम् ॥ प्रच्छभ्रस्जोर्यत्र ऋकारे कृते ऋत्वत्वं लाक्षणिकं लक्षणसूत्रादुत्पन्नस्यैव भवति । ऋत्वतामिति किं? चेक्रीयते यङ्लेङीति रीत्वे द्विर्वचनम् ॥

२ श्लुर्वेत्युक्त्या सिध्दे बहुलग्रहणमिष्टप्रयोगानुसरणार्थम् ॥ श्लुचीगेनदिति ।नियमात् परस्य श्लुचि सत्यां यत्र इक् एतदः एनत् इति द्वयमेव भवतीति कार्यद्वये श्लुचः स्थानिवद्भावो नान्यत्रेत्यभिधानात् पूर्वस्य श्लुचि स्थानिवद्भावः ॥ प्रक्रियायां चर्करीतं चेति चर्करीतमिति यङ्श्लुगन्तस्याचार्यसंज्ञा ॥ ङिञ्मीदित इत्यत्र ङ् च इश्च म् च ईश्च इति विग्रहः ॥

**१२८१ यङ्तुरुस्तोर्बहुलम्** ।४।२।२१। यङन्तात्तुरुस्तुभ्यश्च परस्याक्ङितो हलः अलेर्ले ईट् बहुलं भवति ॥ एङ्वौ । पक्षे एङ् । य्वुक्तिजक्षेति झोऽत् । उव् । बोभोति बोभवीति बोभूतः बोभुवति । बोभोषि । बोभवीषि बोभूथः बोभूथ । बोभोमि बोभवीमि बोभूवः बोभूमः ॥ लङ् । अबोभोत् अबोभवीत् अबोभूतां । झेर्जुसि एङ्वौ अबोभवुः । अबोभोः अबोभवीः अबोभूतम् अबोभूत । अबोभवम् अबोभूव अबोभूम ॥ लेटि हितातोरपित्त्वादेङीटौ न भवतः । बोभोतु बोभवीतु बोभूताद्वा बोभूतां बोभुवतु । बोभूहि बोभूताद्वा बोभूतं बोभूत । बोभवानि बोभवाव बोभवाम ॥ लेङि बोभूयात् बोभूयातां बोभूयुरित्यादि । भावकर्मणोः बोभूयते अनुबोभूयते इत्यादि । लेङि बोभूयात् बोभूयास्तां बोभूयासुः । लिटि नेत्यामः पराक्तृनो लस्तङ् न भवति बोभवाञ्चकार । लुङि सेरिटि स्यस्तेस्सोऽल ईट् ईटीट इति सेर्लुक् । सावारैचः आत् झेर्जुस् । अबोभावीत् अबोभाविष्टाम् अबोभाविषुः । लुटि बोभाविता । लङि अबोभविष्यत् । लृटि बोभविष्यति । कर्मभावे ञिडादि च । बोभाविषीष्ट अनुबोभाविषीष्ट अनुबोभविषीष्ट इत्यादि । पापचीति पापक्ति । जोहवीति जोहोति ॥

**१२८२ य्वुक्तेर्नाचि ल्यलौ** ।४।१।१९। द्विरुक्तस्य हलन्तस्य धातोरिकः अजादौ लिवर्जितलादेशे परे एङ्गौ न भवतः ॥ ईडभावे एङि वलि वलुक् । देदिवीति देदेति । सोषवीति सोषोति सोषुतः । नानहीति नानद्धि । चेक्रयीति चेक्रेति ॥

**१२८३ रंमूरिम् च श्लुचि** ।४।१।९३। यङः श्लुचि ऋत्वतो धातोर्द्विर्भावे पूर्वस्य रम्रिम्रीमो भवन्ति ॥ अमावितौ । वर्वरीति । वरिवरीति । वरीवरीति वर्वर्ति । वरिवर्ति वरीवर्ति । जर्गृहीति जरिगृहीति

१ रीम् ऋत्वतामित्यधिकृत्य । चकारो रीमबाधनार्थः । ऋत्वतामिति किं? मोमोर्ति तृतावर्ति । तृतरणप्लवनयोः । रमोऽकार उच्चारणार्थः ॥ जर्गृहीतीत्यत्र यङः श्लुच्यपि श्लुचीगेनादिति वचनात् वरिव्यचीत्यादिना यम इक् भवति ॥

जरीगृहीति । अनीटि । ह इति ढः । अध इति तस्य धः । ष्टुत्वं । ढे ढलुक् जर्गाढि जरिगाढि जरीगाढि । तोतोत्ति तोतुदीति । मर्मर्ति मरिमर्ति मरीमर्ति मर्मरीति मरिमरीति मरीमरीति । तन्तनीति तन्तन्ति । तिबादिग्रहणानिर्दिष्टेषु यङ्लुचि न भवन्तीति वचनात् हन्मन्यमिति नलुग् न भवति

**१२८४ क्विजलि क्ङित्यनुनासिके** ।१।४।१३६। क्वौ जलि च ङ्किति प्रत्यये परे योऽनुनासिकस्ततः पूर्वस्य धातोरचो दीर्घो भवति ॥ तन्तान्तः तन्तनाति । मम्मनीति मम्मन्ति । चर्कर्ति चरिकर्ति चरीकर्ति चर्करीति चरिकरीति चरीकरीति । रोरोद्धि रोरुधीति । बोभोक्ति बोभुजीति । योयोक्ति योयुजीति । एवमन्येऽपि धातवो नेतव्याः ॥

॥ इति यङ्प्रकरणम् ॥

भवति कश्चित्तमन्यः प्रयुङ्क्ते । इति विगृह्य ॥

**१२८५ प्रयुज्याप्याण्णिङ्वा** ।४।१।१५। प्रयुज्याप्यार्थाद्धातोः प्रयुज्यर्थे णिङ्वा भवति ॥ णञावितौ । एङ्वातः भावीत्यतो लडादयः । भावयति भावयतः भावयन्ति इत्यादि ॥

---

१ प्रयुजेः प्रपूर्वस्य युजिधातोः आप्यं कर्म प्रयुज्याप्यं तस्मात् । प्रयोगः प्रवृत्तिकरणं प्रेरणं । तत् प्रेषणाध्येषणनिमित्तभावाख्यानाभिनयज्ञानप्राप्तिभेदैरनेकधा भवति । देवदत्तस्य कटस्य करणं प्रयुङ्क्ते देवदत्तं कटं कारयति । देवदत्तस्यासनं प्रयुङ्क्ते देवदत्तमासयति । देवदत्तेनोदनस्य पाकं प्रयुङ्क्ते देवदत्तेनोदनं पाचयति । अत्र प्रेषणेनाध्येषणेन वा प्रयोगः ॥ कारीषोऽग्निरध्यापयति अत्र निमित्तभावेन ॥ राजागमनं प्रयुङ्क्ते राजानमागमयति । मृगान्रमयति अत्र आख्यानेन । अन्योऽन्येयन हि बुद्धिस्थागमनादि प्रयुक्तं प्रतीयते ॥ कंसस्य वधं प्रयुङ्क्ते कंसं घातयति । बलिं बन्धयति शौभनिकः अत्राभिनयेन ॥ पुष्येण प्रयोजयति । मघाभिर्योजयति गणकः अत्र विज्ञानेन ॥ उज्जयिन्याः प्रदोषे प्रस्थितः माहिष्मत्यां सूर्योद्गमनं प्रयुङ्क्ते माहिष्मत्यां सूर्यमुद्गमयति अत्र प्राप्त्या ॥ प्रयुजेरिति किं? पाकं विहन्ति ॥ आप्यादिति किं? पाकेन प्रयुङ्क्ते । प्रपूर्वयुजेरर्थे प्रयुजिशब्दाभिधाने चाभेदोपचारेणार्थो विज्ञायते ॥ वेति वाक्यार्थं वचनम् ॥

**१२८६ धेट्पाद्दमायमायस्परिमुहरुचिनृतिवदस्यचल्यद्यर्थेङ्मुद्रुप्रुवुधयुधनशजनः फलेशे पदाद्गते तु वा** ।१।४।६५। धेडादिभ्यो वस्यन्तेभ्यः चल्यद्यर्थादिवर्जितेभ्यश्च धातुभ्यो णिञो लः फलेशे कर्तरि तङो भवन्ति पदान्तरात्फलेशत्वे ज्ञाते तु वा ॥ भावयते । कर्मादौ यकि णिलुक् भाव्यते । एधयति एधयते । पाचयति । आदयति । शाययति । वाचयति । हावयति ॥

**१२८७ ह्रीव्लीरीक्नूयीक्ष्माय्यर्त्यातां पक्** ।४।१।२०१। ह्रियादेरादन्तस्य च णौ पक् भवति ॥ अकावितौ किदन्तः । ह्रापयति दापयति । देवयति । सावयति । नाहयति । आशयति ॥

**१२८८ चिस्फुरोर्वा** ।४।१।१९३। चिस्फुरोरेचः णौ आद्वा भवति ॥ पक् । चापयति । चाययति ॥

**१२८९ क्रीङ्जेः** ।४।१।१८९। क्रीङ्जीनां णौ आद्भवति ॥ पक् । क्रापयति । वारयति । आहयति । नोदयति । मारयति । मोचयति । तानयति । मानयति । कारयति । रोधयति । भोजयति । योजयति । णिञि णेर्लुक् । चोरयति । छादयति । लक्षयति । योजयति । अर्चयति । वारयति । एवमन्येऽपि नेयाः ॥

॥ इति णिञ्प्रकरणम् ॥

---

१ आङा युक्तो यम उपरमे । यसू प्रयत्ने । परि युक्तौ ॥ अचल्यद्यर्थवर्जितेभ्यः चलनार्थभक्षणार्थधातुवर्जितेभ्यः । तथा इङ् अध्ययने इत्यादिवर्जितेभ्यः ॥ फलेशे तत्क्रियायाः फलस्वामिनि कर्तरि तङो भवन्ति। पदान्तरात्तु प्रतीते फलेशत्वे वा भवन्ति ॥ स च फलेशो यत्फलं क्रियायाः पाकादेरदनादि प्रधानं यदर्थः स क्रियारम्भः तस्येशो यस्य तत्फलं यस्तत्फलभोक्तृत्वेनाध्यवसीयते ॥

२ न्ही लज्जायां । व्ली वरणे । रीङ् विशेषणे । री रोषणे च । कूयैङ् कलिशब्दे । क्ष्मायैङ् विधूनने ऋ गतौ । आतामिति आकारानुबन्धानां धातूनां ग्रहणार्थं बहुवचनं ॥ सानुबन्धपरिभाषा इह नाश्रीयते इति री इति रीरीङोरुभयोर्ग्रहणम् । तथा ऋ गतिप्रापणयोः ऋ गतावित्युभयोर्ग्रहणमविकरणनिर्देशात् । तिप् निर्देशो यङ्लुब्निवृत्त्यर्थः । लक्षणप्रतिपदोक्तपरिभाषा इह नाश्रीयते ॥

भवितुं कामयते इति विगृह्य ॥

१२९० **कम्येककर्तृकात्सन्नतत्सनः** ।४।१।१६। कमिनैककर्तृकाद्धातोरिच्छायां सन् भवति न तत्सन्नन्तात् ॥ न इत् ॥

१२९१ **न किदाद्युग्ग्रहगुहः** ।४।२।१६५। किदादिभ्यः उगन्तात् ग्रहगुहाभ्यां च सनि इड् न भवति ॥

१२९२ **सकिः** ।४।१।१६०। इगन्तस्य सादौ सनि किद्वद् भवति ॥ सन्यङश्चेति द्विः शेषं प्राग्वत् । बुभूषति बुभूषतः बुभूषन्ति इत्यादि । भावादौ यकि अत इति लुक् । बुभूष्यते । तेन अनुबुभूष्यते ॥ तत इति द्विः ॥

१२९३ **प्राग्वत्** ।१।४।४६। सनः प्राक् प्रकृतेरिव सनन्तात्तस्तङ् भवति ॥ एदिधिषते । सन्यत इति इत् । पिपक्षति पिपक्षते । निनन्दिषति । घस्लादेशे । तस्सिल्यश्चीति सस्य तः । जिघत्सति । शिशयिषते । विवक्षति विवक्षते ॥

१२९४ **सनि** ।४।१।१३७। अजन्तस्य धातोः सनि दीर्घो भवति ॥ जुहूषति । जिहासते ॥

१२९५ **घुमीमारभलभशक्पत्पदामिस्** ।४।१।६०। घुसंज्ञस्य मीमादेश्चाचः सादौ सनि इस् भवति न च द्विः ॥ धित्सति धित्सते ॥

१२९६ **श्रंसज्ञृधदन्भतन्सन्पातिज्ञपिश्रियूर्णुभरस्वृव्रि-**

---

१ मीति डुमिञ् प्रक्षेपणे । मीञ् हिंसायामिति द्वयोर्ग्रहणं ॥ मा मेङ् प्रतिदाने । माङ् माने । मा माने । तत्र माङो ग्रहणं न मातेरदादित्वात् । अन्ये त्रयाणामप्यविशेषमाहुः ॥ अच इति किं? सर्वस्य मा भूत् । सादाविति किं? पिपतिषते ॥

२ सन्निति सनतेः सनोतेश्च ग्रहणम् ॥ ज्ञपीति कृतन्ह्रस्वस्योपादानात् ज्ञापेः जिज्ञापयिषतीत्येत्र भवति ॥ भर इति शप्निर्देशो धारणपोषणार्थवृत्तेर्बिभर्तेर्मा भूदित्येवमर्थः । अन्ये तु भरतेर्बिभर्तेश्च नास्त्यर्थभेदः भरेत्यरादेशनिपातनमेतदित्याहुः ॥ वृ इति वृङ् वृञोर्ग्रहणं । इव् इति इवन्तग्रहणं न इवु व्याप्ताविति धातोः । स हि अदादित्वात् इन्वु इति निर्दिश्यते ॥

**वृतः सनि** ।४।२।१६३। असृजादीरवन्तादृदन्ताच्च सनि इड्वा भवति ॥ दिदेविषति । अनिट्पक्षे ॥

१२९७ **हलि** ।४।१।१६१। सनि परे यो हल् तस्मिन् पूर्वस्येकः किद्वद् भवतीति नेट् ॥

१२९८ **शूच्छ्वोऽनुनासिके च** ।४।१।१४१। धातोश्छस्य अनुनासिकादौ क्विपि जलि च परे शो भवति वस्य ऊच् ॥ च इत् । यत्र् पुनर्द्विर्भावादि । दुद्यूषति । न किदादीति इडभावः ॥

१२९९ **न स्विदिस्वदिसह्यणिस्तोः**[1] ।४।१।७५। ण्यन्तस्तौतिवर्जितानां धातूनां स्विद्यादीनां च सनः षे द्विर्भावे पूर्वात्परस्य सस्य षिर्न भवति ॥ सुसूषते । निनत्सति निनत्सते । सुसूषति ॥

१३०० **क्रा**[2]**गृपूङ्स्म्यञ्जशः** ।४।२।१६४। कॄ इत्यादेः पञ्चकात् ऋ इत्यादिभ्यश्च परस्य सनः इड् नित्यं भवति ॥ अशिशिषते । चिकीर्षति चिकीषते । चिचीषति चिचीषते । चिकीपति । अस्जधेत्यादिना वेट् । तस्य ऋद्वृवुर्वेति पुनर्वेट् । विवरिषते विवरीषते । इडभावे सनीति दीर्घः ॥

१३०१ **पुवादुर्** ।४।१।१७०। पवर्गाद्वकाराच्च परस्योपान्त्यस्य च ॠत उर्भवति ॥ दीर्घः । वुवूर्षते न किदितीडभावः ॥

१३०२ **रु**[3]**दविन्मुषिग्रहिस्वप्प्रच्छां सनि च** ।४।१।१५९। रुदादीनां सनि क्त्वाप्रत्यये च किद्वद् भवति ॥ वशिव्यचीति यत्र इक् हस्य ढः । बशो भष् । ढस्य षढः कस्सीति कः द्विर्भावादि । जिघृक्षति

---

१ ञिष्विदाङ् मोचने । स्वदि आस्वादने । षहि मर्षणे । णान्तष्टुञ् स्तुतौ इति वर्जितानां धातूनां ॥ ष्विदादिग्रहणं ण्यन्तार्थम् ॥

२ क्रादिस्तु तुदाद्यन्तर्गणः । कॄ विक्षेपणे । गॄ निगरणे । दृञ् आदरे । दृङ् स्थाने । प्रच्छ ज्ञीप्सायां । इति क्रादिः ॥ अशिति अशौङ् व्याप्तौ इत्यस्यैव । अश्नातेरिडस्त्येव ॥

३ रुदिर् अश्रुविमोचने । विन्दि सत्तायां । विद ज्ञाने । मुष् स्तेये । ञिष्वप् शये ॥ रुद्विन्मुषीणां किविकल्पे ग्रहेः प्रतिषेधे प्राप्ते वचनम् । स्वपिप्रच्छयोः सनर्थे एव । क्त्वा तु किदेव ॥

जिघृक्षते । तुतुत्सति । सनीति दीर्घे पुवादुरु दीर्घश्च । मुमूर्षति । मुमुक्षते । भ्रस्जृधेति वेट् तितनिषति । अनिट्पक्षे ॥

**१३०३ तनो वा** ।४।१।१३९। तनोतेरचः सनि दीर्घो वा भवति ॥ तितांसति तितंसति । मिमानिषते । दीर्घः ॥

**१३०४ अन्त्योपान्त्यस्त्तोमिर्** ।४।१।१६९। धातोरन्त्यस्योपान्त्यस्य च ऋत इर्भवति ॥ दीर्घादि । चिकीर्षति चिकीर्षते । रुरुत्सति । बुभुक्षते । युयुक्षति युयुक्षते । चुचोरयिषति । चिच्छादयिषते । लिलक्षयिषति लिलक्षयिषते । युयोजयिषति युयुक्षति । अर्चिचयिषति अर्चिचिषते । विवारयिषति विवरिषति विवरीषति विवरिषते विवरीषते । वुवूर्षति वुवूर्षते । एतत्सर्वं सर्वत्र लकारेषु यथायोगमुन्नेयम् ॥

अथ यङाद्यन्ताद्धातोर्णिञ् दर्श्यते ॥ बोभूयते कश्चित्तमन्यः प्रयुङ्क्ते इति विगृह्य प्राग्वण्णिञ् । अलुक् । शेषं प्राग्वत् । बोभूययति बोभूययते । एवं सर्वधातूनां सर्वलकारेषु रूपं नेयं ॥

यङ्लुगन्ताण्णिञि । एङादि । बोभावयति बोभावयते एवं सर्वं नेयं ॥ भावयति कश्चित्तमन्यः प्रयुङ्क्ते इति णिजन्ताण्णिञि पूर्वस्य णेर्लुक् शेषं प्राग्वत् । भावयति भावयते इत्यादि सर्वं नेयं । बुभूषति कश्चित्तमन्यः प्रयुङ्क्ते इति सनन्ताण्णिञि । अलुक् । बुभूषयति बुभूषयते । एवं सर्वं नेयं ॥

बोभूयितुमिच्छतीति यङन्तात्सनिङादि ।

**१३०५ द्विरेकेषाम्** ।४।१।१५०। द्विरुक्तो धातुर्द्विर्वा भवति ॥ बुबोभूयिषते बोभूयिषते । इत्यादि सर्वं नेयं ॥

---

१ अन्त्यश्च उपान्त्यश्च अन्त्योपान्त्यं । अन्त्योपान्त्ये वर्तमाना ऋतः अन्त्योपान्त्यर्त्तः तेषां । अन्त्यस्य ऋत उदाहरणं किरति गिरति । उपान्त्यस्य ऋतः कीर्तयति कीर्तयतः कीर्तयन्ति ॥ बहुवचनं लाक्षणिकार्थं । इदमेव ज्ञापकं लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य ग्रहणमित्यस्य ॥ अन्त्योपान्त्य इति किं? ऋकारीयति । धातोरिति किं? पितॄणां ॥ अर्चिचयिषतीत्यत्र 'ततः' इत्यनेनादेरचः पर एकाच् द्विर्भवति ॥

यङ्लुगन्तात्सनि । बुबोभविषति बोभविषति इत्यादि ।

भावयितुमिच्छतीति णिजन्तात् सनि णिज्कार्यात् प्रागेव द्विः ॥

**१३०६ ओः पुयण्ज्ये** ।४।१।९७। सनि द्विर्भावे पूर्वस्योवर्णस्य अवर्णपरे पवर्गे यणि जे च परे इद्भवति ॥ बिभावयिषति । अतत्सन इति वचनात् सनन्तात् सन्नास्ति । यङन्तणिजन्तात्सनि । बुबोभूययिषति । - ते । बोभूययिषति - ते । यङ्लुङ्णिजन्तात्सनि बुबोभावयिषति - ते । बोभावयिषति - ते । णिज्णिजन्तात् सन्नेष्यते णिजन्तादविशेषात् । सनन्तणिजन्तात् सन्नेष्यते आचार्याणां विसंवादात् । इति पञ्चभ्यः सन्नुदाहृतः ॥

पुनरेतदन्तादेव णिजुदाह्रियते ॥ यङन्तसनन्ताण्णिजि । बुबोभूयिषयति - ते । बोभूयिषयति - ते । यङ्लुगन्तसनन्ताण्णिजि । बुबोभविषयति - ते । बोभविषयति - ते । णिजन्तसनन्ताण्णिजि । बिभावयिषयति - ते । यङ्णिजन्तसनन्ताण्णिजि । बुबोभूययिषयति - ते । बोभूययिषयति - ते । यङ्लुगन्तणिजन्तसनन्ताण्णिजि । बुबोभावयिषयति - ते । बोभावयिषयति - ते । एवमन्येष्वपि नेयं ॥

परमप्रकृतिर्यङ् यङ्लुक् णिज् सन् णिज् ततोऽसनत्संश्च ।
तस्माण्णिजिति प्रकृतिः विज्ञेयैकान्नविंशतिधा[1] ॥

कण्डूञ् गात्रविकर्षणे । ञ इत् ॥

**१३०७ धातोः कण्ड्वादेर्यक्** ।४।१।६। कण्ड्वादिभ्यो धातुभ्यः स्वार्थे यग् भवति ॥ क इत् प्राग्वलडादि । कण्डूयति कण्डूयते । भावादौ

1 परमप्रकृतिः १ । यङ् २ । यङ्लुक् ३ । णिज् ४ । सन् ५ । यङ्णिज् ६ । यङ्लुक्णिज् ७ । णिज्णिज् ८ । सन्णिज् ९ । यङ्सन् १० । यङ्लुक्सन् ११ । णिज्सन् १२ । यङ्णिज्सन् १३ । यङ्लुक्णिज्सन् १४ । यङ्सन्णिज् १५ । यङ्लुकसन्णिज् १६ । णिज्सन्णिज् १७ । यङ्णिज्सन्णिज् १८ । यङ्लुक्णिज्सन्णिज् १९ । एभिः प्रकारैरेकान्नविंशतिधा । यङादिचतुर्भ्यः सनवर्जितेभ्यः यङादित्रिभ्यः सन् भवति । पञ्चभ्यः सन्नन्तात् णिच् ॥ एकान्नविंशतिधा इत्यत्र " एकादन्नाद्नौ ।२।२।६२। " इत्यनेन अन्न अद्न इत्येतावादेशौ भवतः ॥

कण्डूय्यते। एवं सर्वलकारेषु नेयं। णिजि कण्डूययति कण्डूययते। सनि॥

**१३०८ यकस्तृतीयः** ।४।१।५१। यगन्तस्य धातोस्तृतीय एकाच् द्विर्वा भवति॥ कण्डूयियिषति कण्डूयियिषते। चिकण्डूयिषति चिकण्डूयिषते। एवं सर्वत्र योज्यं॥ मन्तु रोषे वैमनस्ये च यकि मन्तूयति॥ वल्गु माधुर्ये च वल्गूयति। असु मानस उपतापे असूयति। महिङ् वृद्धौ पूजायां च ङ इत् महीयते इत्यादि॥

सुबन्तप्रकृतेर्लकाराः प्रदर्श्यन्ते। पुत्र अम् इति स्थिते पुत्रं कामयते आत्मन इति विगृह्य॥

**१३०९ सुपः कर्तुः काम्यः** ।४।१।१७। कम्याप्यार्थात् सुबन्तात्कर्तुरात्मन एव सम्बन्धिनः कम्यर्थे काम्यः प्रत्ययो वा भवति॥ अमः श्लुक् धातुसंज्ञायां लडादि। पुत्रकाम्यति। एवं राजकाम्यति मालाकाम्यति इदङ्काम्यति स्वःकाम्यति॥

**१३१० क्यच्चामाव्ययात्** ।४।१।१८। सुबन्तात् कम्याप्यार्थात् कर्तुरात्मन एव सम्बन्धिनः कम्यर्थे क्यच् प्रत्ययश्च भवति न मान्तादव्ययान्ताच्च॥ कचावितौ॥

**१३११ च्वौ चास्यानव्ययस्येः** ।२।३।४०। अवर्णस्य क्यचि च्वौ च परे ईद् भवति नाव्ययस्य॥ पुत्रमिच्छत्यात्मनः पुत्रीयति एवं मालीयति॥

---

१ आत्मार्थो वृत्तावन्तर्भूत इति आत्मन्शब्दो न प्रयुज्यते। सुप इति किं? आत्मनो गमनमिच्छति। अत्रात्मोपाधिके धातोः काम्यः स्यात्॥ महान्तं पुत्रमिच्छतीत्यत्र समुदायसमुदायिनोरभेदनयः समुदायोऽपि कर्मेति काम्ये सति परस्परानुसामर्थ्यसमासो नेत्युत्तरपदलक्षणमात्वं न स्यात्। महापुत्रकाममिति समासोऽत्प्रत्ययः स्यात् (?)॥ कर्तुरिति किं? दुःखमिच्छति अत्र परस्येच्छति। आत्मनः पुत्रं भोजयितुमिच्छतीत्यत्र सापेक्षस्यासामर्थ्यान्न भवति॥

२ चकारः काम्यार्थः अन्यथा मान्ताव्यययोः सावकाशो बोध्येत। प्रकृतश्च वाऽधिकारो वाक्यार्थः। यव्यसौ सुप् मकारान्तादव्ययाच्च न भवति॥ अमाव्ययादिति किं? इदमिच्छति किमिच्छति स्वमिच्छति॥

**१३१२ नङ् क्ये** ।१।१।६३। नान्तं क्ये परे पदं भवति ॥ पदत्वान्नलुक् । राजानमिच्छत्यात्मनः राजीयति एवं शर्म्मीयति । यङ्लेङिति दीर्घः । शिखीयति कवीयति इक्षूयति । यङ्लेङिति री । पित्रीयति कर्त्रीयति ॥

**१३१३ ओदौतोऽवाव्यि** ।२।३।२६। ओतः यप्रत्यये अव् भवति औत आव् ॥ गव्यति नाव्यति ॥

**१३१४ क्यच्यसक्सग्लालसायाम्** ।२।३।२७। क्याचि परे पूर्वस्यासक् सक् च भवतः लालसायां लाम्पट्ये ॥ अक्कावितौ[1] । क्षीरस्यति । असक्सात इति प्रतिषेधान्न षिः । दध्यस्यति दधिस्यति ॥

**१३१५ वृषाश्वयोर्मैथुने** ।२।३।२८। वृषाश्वशब्दयोःक्यचि मैथुनलालसायामसक् सक् च भवतः ॥ वृषस्यति गौः । अश्वस्यति वडवा[2] । वाच्यति । स्रज्यति । युष्मद्यति । त्वद्यति । अस्मद्यति । मद्यति । गीर्यति । दीव्यति ।

**१३१६ क्षुत्तृड्गर्धेऽशनायोदन्यधनायम्** ।२।३।२९। अशनायादयो यथासङ्ख्यं क्षुदादिष्वर्थेषु क्यजन्ता निपात्यन्ते ॥ अशनायति उदन्यति धनायति ॥

पुत्रीयितुमिच्छतीति सनि ॥

**१३१७ सुपः** ।४।१।४६। सुब्धातोः सन्यङन्तस्य लिटि के च परे पूर्वस्य एकाच्कोऽवयवो द्विर्वा यथासम्भवं भवति ॥ पुपुत्रीयिषति पुतित्रीयिषति पुत्रीयियिषति पुत्रीयिषिषति ॥

---

१ भक्षणे गृद्धी लालसा । गृद्धीति अभिलाषातिरेकः । क्यचीति किं? काकायते लालसा । लालसायामिति किं? दधीयति मधूयति क्षीरीयति लवणीयति । जिघत्सायां गम्यमानायां असकि सकि च परे एदे इति अकारलुचि सत्यां समानं रूपमित्यर्थः । पुनः किमर्थं प्रत्यययोर्द्वयोः प्रयोजनं दधिस्यति दध्यस्यतीत्यादौ ॥

२ वृष अश्व इत्येतयोर्मैथुने वर्तमानयोः क्यचि असक्सगौ भवतः । मैथुने वर्तमानयोरिति वृषाश्वशब्दौ मैथुने वर्तेते मनुष्यादावपि हि प्रयुज्येते । वृषस्या अश्वस्या इत्येतौ मैथुनेच्छापर्यायौ । मैथुन इति किं वृषीयति अश्वीयति युष्मद्यति युष्मानिच्छतीत्यर्थः ॥

**१३१८ नाभ्यच्** ।४।१।४७। सुब्धातोरादिरच् न द्विर्भवति ॥ अश्वीयितुमिच्छतीति सनि । अशिश्वीयिषति अश्वीयियिषति अश्वियिषिषति ॥

प्रासादे इवाचरतीति विगृह्य ॥

**१३१९ गौणादाधाराच्चाचरि** ।४।१।१९। आचरेराप्यादाधाराच्च गौणात् सुबन्तादाचर्यर्त्थे क्यच् भवति न माव्ययात् ॥ शेषं प्राग्वत् । प्रासादीयति कुड्ये । पुत्रमिवाचरतीति पुत्रीयति च्छात्रम् । अश्व इवाचरतीति विगृह्य ॥

**१३२० कर्त्तुः क्विप्** ।४।१।२०। आचरेः कर्त्तुः गौणात्सुपः आचर्यर्त्थे क्विप् भवति ॥ स सर्व इव् । अश्वति खरः । एवं काकति गर्द्दभति । क्विजलीति दीर्घः इदमिवाचरति इदामति कीमति । श्येन इवाचरतीति विगृह्य ॥

**१३२१ प्क्यङ्** ।४।१।२२। आचरेः कर्त्तुर्गौणात्सुपः आचर्यर्त्थे प्क्यङ् भवति ॥ पकङा इतः । यङ्लेङिति दीर्घः लस्तङगादि । श्येनायते । कुमारीवाचरति कुमारायते । पित्त्वादतद्धितेऽपि पुम्भावः त्वद्यते मद्यते ॥

**१३२२ सो वा लुक् च** ।४।१।२४। सकारान्तस्य प्क्यङि लुग्वा भवति ॥ पयायते पयस्यते ॥

**१३२३ अप्सरसः** ।४।२।२५। अप्सरसः प्क्यङि नित्यं लुग् भवति ॥ अप्सरायते कन्या ॥

**१३२४ भृशादेश्च्वौ स्तः** ।४।१।२६। भृशादेः कर्त्तुः च्व्यर्त्थे प्क्यङ् भवति सतयोश्च लुक् ॥ अभृशो भृशो भवति भृशायते । शीघ्रायते उन्मनायते वेहायते ॥

---

१ गुणाद्विषयान्तरमागतो यथा गौर्वाहीक इति । तस्मात्सुबन्तादमाव्ययादाचरेराप्या_ दाधाराच्च चर्यर्थे क्यच् प्रत्ययो भवति । गौणादिति किं? छात्रादेर्न भवति । आधाराच्चेति किं? परशुना दात्रेणेवाचरति । आधारोऽपि कर्मतया शक्यते विवक्षितुं तत्रानुप्रयोगे कुड्यामिति न संगच्छते इत्याधारग्रहणम् । मुख्यार्थबाधे सति निमित्तप्रयोजने च भेदाभेदाभ्यामधिरोपितो गौणः वस्त्रीयति कम्बलम् ॥

१३२५ **निद्रादिडाज्भ्यो धर्मिणि क्यप्** ।४।१।२७। निद्रादिभ्यो डाजन्तेभ्यश्च धर्म्मिणि च्व्यर्थे क्यष् भवति ॥ कषावितौ । अत एव कृभ्वस्तिभिरयोगेऽपि डाज्विधिः ॥

१३२६ **क्यषो वा** ।१।४।१७। क्यषन्तात्तस्तङ् वा भवति ॥ अनिद्रो निद्रावान् भवति निद्रायति निद्रायते त्रैविद्यः । करुणायति करुणायते धर्म्मायति धर्मायते ॥

अपटत् पटद्भद् भवतीति विगृह्य । डाचि द्विः । डचावितौ ॥

१३२७ **डाच्यादौ** ।१।१।१३१। द्विर्भावे पूर्वस्य तस्य लुग् भवति डाचि परे ॥ अन्त्याजादिलुक् ततः क्यष् । पटपटायति पटपटायते । एवं गुमुगुमायति गुमुगुमायते इत्यादि । सूत्रं करोतीति विगृह्य ॥

१३२८ **णिज् बहुलं कृञादिषु** ।४।१।२८। सुबन्तात् कृञाद्यर्थेषु बहुलं णिच् भवति ॥ णचावितौ सुपः श्लुक् । तन्त्याजादेः इत्यतो लुक् । पूर्ववल्लडादि । सूत्रयति एवं मुण्डयति मिश्रयति व्रतयति । कृतं गृह्णाति कृतयति । पाशं विमोचयति विपाशयति । रूपं दर्शयति रूपयति । लोमान्यनुमार्ष्टि अनुलोमयति । पटुमाचष्टे पटयति । मालां ग्रथ्नाति मालयति । तृणान्युल्लुनाति उत्तृणयति । वस्त्रेण समाच्छादयति संवस्त्रयति । वीणया उपगायति उपवीणयति । श्लोकैरुपस्तौति उपश्लोकयति । सेनया अभियाति अभिषेणयति स्थासेनीति षिः । वर्म्मणा सन्नह्यति संवर्म्मयति । वास्या च्छिनत्ति वासयति । अश्वेनातिक्रामति अत्यश्वयति ॥

१३२९ **सत्यार्थवेदस्याः** ।४।१।३१। सत्यादेरतो णिचि आद्भवति ॥ पक् । सत्यं करोति सत्यापयति । अर्थमाचष्टे अर्थापयति । वेदमधीते वेदापयति ॥

१३३० **निरस्यङ्गेभ्यः कर्म्मणो णिङ्** ।४।१।३२। अङ्गवाचि-

---

१ डाजन्तात् क्यष्वचनात् कृभ्वस्तिभिरिव क्यषाऽपि योगे डाच् भवति ॥ निद्रा कृपा करुणा लोहित चर्मन् इति निद्रादिगणः प्रयोगगम्यः ॥ निद्राशब्दो वृत्तौ ग्रहणार्थः। षकारस्तदविघातार्थो विशेषणार्थो वा ॥

नः कर्म्मणो निरस्यत्यर्थे णिङ् भवति ॥ णङावितौ । हस्तं निरस्यति हस्तयते । एवं पादयते मूर्धयते ॥

१३३१ **पुच्छभाण्डादस्समाचौ** ।४।१।३३। पुच्छादस्यत्यर्थे णिङ् भवति भाण्डात् समाचिनोत्यर्थे ॥ पुच्छमुदस्यति उत्पुच्छयते। भाण्डं समाचिनोति सम्भाण्डयते ॥

१३३२ **बाष्पोष्मफेनादुद्वमि** ।४।१।३६। बाष्पादेरुद्वमत्यर्थे क्यङ् भवति ॥ कङावितौ नङ्क्ये इति पदत्वान्नलुक् । बाष्पमुद्वमति बाष्पायते । एवं ऊष्मायते फेनायते ॥

१३३३ **सुखादेर्भुजि** ।४।१।३७। सुखादेर्भुज्यर्थे क्यङ् भवति॥ सुखं भुङ्क्ते सुखायते । एवं दुःखायते क्लेशायते ॥

१३३४ **शब्दादेः कृग्नि वा** ।४।१।३८। शब्दादेः कृग्न्यर्थे क्यङ् वा भवति ॥ शब्दं करोति शब्दायते शब्दयति वा। कलहायते कलहयति वा ॥

१३३५ **रोमन्थादुच्चर्वणे** ।४।१।३९। रोमन्थादुच्चर्वणे क्यङ् भवति ॥ रोमन्थमुच्चर्वति रोमन्थायते ॥

१३३६ **नमोवरिवस्तपसः क्यच्** ।४।१।४०। नमसादिभ्यः

---

१ उच्चर्वणे वर्तमानात् रोमन्थशब्दात् कर्मणः करोत्यर्थे क्यङ् । रोमन्थः? उच्यते अभ्यवहृतस्य भक्षितस्य उद्गीर्य चर्वणं । हनुचलनरूपं रोमन्थन रोमन्थः । तं करोति ॥ उच्चर्वणे इति किं? रोमन्थं करोति कीटः गवादीनामुद्गीर्णमवगीर्णं वा द्रव्यं वर्तयतीत्यर्थः । रोमन्थशब्दोऽत्र द्रव्यवचनः क्रियावचनश्च । गवादीनामुद्गीर्णमवगीर्णं वा द्रव्य रोमन्थ उच्यते हनुचलनादिक्रिया च ॥

२ वरिवस्यति देवान्पूजयतीत्यर्थः । तपस्यति तपश्चरतीत्यर्थः । नमस्यति नमः करोतीत्यर्थः ॥ नमः करोति, वरिवः करोति, तपः करोति नम इत्यादिशब्दरूपमुच्चारयतीत्यत्रानभिधानान्न भवति पृथगवयवभावात् ॥ नमस्यति देवानिति नमःशब्दयोगनिबन्धना चतुर्थी न भवति अन्तरङ्गत्वात्, उपपदविभक्तेः कारकविभक्तिर्बलीयसीति नमो जिनेभ्योऽस्त्विति चतुर्थी सावकाशेति करोत्यर्थमित्यादिवत् वाक्येऽपि नमस्करोति देवानिति द्वितीया भवति ॥

कृञ्यर्थे क्यच् भवति ॥ नमस्करोति । नमस्यति । वरिवस्यति । तपस्यति ॥

**१३३७ चित्रङो विस्मये** ।४।१।४१। विस्मये वर्त्तमानात् चित्रङ्शब्दात् क्यच् भवति ॥ ङित्त्वात्तङ् । चित्रं करोति चित्रीयते । एवं सर्वत्र योज्यम् ॥

इति सुब्धातुप्रकरणम् ॥

**१३३८ सल्लड्वत्स्यल्लृटो वाऽनितौ** ।१।४।७८। सति लटो भविष्यति लृटश्च अतङ्वत् शतृ वा भवति तङ्वदानश् नेतौ॥ ऋशावितौ शेषं प्राग्वत् । ततः स्वादयः नमादि । भवन् भवन्तौ भवन्तः इत्यादि । भविष्यन् भविष्यन्तौ भविष्यन्तः इत्यादि ॥

**१३३९ मगाने** ।४।२।४४। अदन्तस्य मग् भवति आने परे ॥ अकावितौ । एधमानः एधमानौ एधमानाः । एधिष्यमाणः एधिष्यमाणौ एधिष्यमाणाः इत्यादि । एवं पचन् पचमानः । अदन् । शयानः । ब्रुवन् ब्रुवाणः । जुह्वत् । जिहानः । दधत् दधानः । दीव्यन् । सूयमानः । नह्यन् नह्यमानः । सुन्वन् । अश्नुवानः । चिन्वन् चिन्वानः । क्रीणन् । वृणानः । गृह्णन् गृह्णानः । तुदन् । म्रियमाणः । मुञ्चन् मुञ्चमानः । तन्वन् । मन्वानः । कुर्वन् कुर्वाणः रुन्धन् । भुञ्जानः । युञ्जन् युञ्जानः । चोरयन् । छादयमानः । लक्षयन् लक्षयमाणः । योजयम् योजन् । अर्चयन् अर्चमानः । वारयन् वरन् वरमाणः ॥ भावकर्मणोः । भूयमानम् । अनुभूयमानः । एध्यमानं । पच्यमान इत्यादि सर्वं योज्यं । बोभूयमानः । बोभुवत् । भावयन् । भावयमानः । बुभूषन् । एदिधिषमाणः । कण्डूयन् । कण्डूयमानः । इत्यादि सर्वत्र योज्यं ॥

**१३४० लिटः क्वसुकानौ** ।१।४।७९। लिटः स्थाने अतङ्वत् क्वसु-

---

१ अनिताविति किं? हन्तीति पलायते । हरिष्यतीति व्रजति । वर्षतीति धावति । करिष्यतीति व्रजति ॥ भवन्नित्यत्र न्यागि.ति दीर्घे परकार्ये कर्तव्ये पदस्येति तकारस्य लुचोऽसत्त्वं तथाच श्यनप्सुट्परनकाराभावान्न दीर्घः ॥

भवति तङ्वत कानः ॥ कोतावतौ शेषं प्राग्वत् । कसौ स्रादिनियमात् प्राप्तस्येटः ॥

१३४१ **कस्यैकाज्घसः** ।४।२।१६७। अदन्तादेकाचो घसश्च कस इट् भवति नान्यस्मात् ॥ इति नियमान्नेट् । ततः स्वादयः नमादि । बभूवान् बभूवांसौ बभूवांसः । शसादौ कस उसि उवादेशे लुङ्लिटि भुव इति उत ऊत बभूवुषः । बभूवुषा बभूवद्भ्याम् इत्यादि । एधांचक्राणः । त्रप्फली स्यत एति द्विरुक्तभावादिट् पेचिवान् इत्यादि । कस उसि सर्वत्र वलाद्यभावान्नेट् पेचुषः पेचुषा इत्यादि । पेचानः । जक्षिवान् । आदिवान् । शिश्यानः । ऊचिवान् । ऊचानः । जुहुवान् । जिहानः । दधिवान् । दधानः । दिदिवान् । सुषुवाणः । नेहिवान् । नेहानः । सुषुवान् । आनशानः । चिचिवान् । चिच्यानः । चिक्रीवान् । वव्राणः । जगृह्वान् । जगृहाणः । तुतुद्वान् । ममृवान् । मुमुच्वान् । मुमुचानः । तेनिवान् । मेनानः । चकृवान् । चक्राणः । रुरुध्वान् । बुभुजानः । युयुज्वान् । युयुजानः । चोरयांचकृवान्। च्छादयांचक्राणः । लक्षयांचकृवान् । लक्षयाञ्चक्राणः । योजयाञ्चकृवान् युयुज्वान् । अर्चयाञ्चकृवान् । आनर्चाः । वारयाञ्चकृवान् । ववृवान् । वव्राणः । बोभूयाञ्चक्राणः । बोभयांचकृवान् । भावयांचकृवान् भावयाञ्चक्राणः । बुभूषाञ्चकृवान् इत्यादि सर्वत्र नेयम् ॥

अथ केषांचिद्धातूनां प्रक्रियाविशेष ऊच्यते ॥

१३४२ **गुपोधूप्विच्छिपनपणेरायः** ।४।१।१। गुपादिभ्यो धातुभ्यः आयप्रत्ययो भवति स्वार्थे ॥ पुनर्लडादि ॥ गुपौ रक्षणे । औदित् गोपायति । धूप तप सन्तापे धूपायति । विच्छ गतौ विच्छायति । पनि स्तुतौ । पणि व्यवहारे च । इदित् । पनायति पणायति ॥

१३४३ **कमृतेर्णिङीयङ्** ।४।१।२। कमेः स्वार्थे णिङ् भवति ऋतेरीयङ् ॥ णङावितौ ङित्वात् । कमूङ् कान्तौ । ऋत घृणागतिस्पर्धेषु । कामयते ऋतीयते ।

**१३४४ नित्याश्शापि** ।४।१।३। एते प्रत्ययाः शपि नित्या भवन्ति अन्यत्र विकल्पिताः ॥ गोपाय्यात् गुप्यात् । गोपायाञ्चकार जगोप इत्यादि ॥

**१३४५ तपस्तपसि** ।४।३।२६। तपेः कर्तरि कर्मवत् कार्यं भवति तपसि कर्मणि ॥ कर्मत्वाद्यगादि । तप्यते तपांसि धीरः करोतीत्यर्थः ॥

**१३४६ कित्तिजगुर्भिषज्यादिक्षमानिन्द्ये सन्** ।४।१।४। कितेर्भिषज्याविनाशच्छेदनसन्देहेषु सन् भवति तिजेः क्षमायां गुपेर्निन्दायाम् ॥ नकिदिति नेट् शेषं प्राग्वत् । कित निवासे अदित् चिकित्सति । तिजि क्षमानिशामनयोः । इदित् । तितिक्षते । गुपि गोपने जुगुप्सते ॥

**१३४७ शान्दान्मान्बधान्निशानार्जवजिज्ञासावैरूप्य ईच्चैः** ।४।१।५। शानो निशाने सन् भवति दान आर्जवे मानो जिज्ञासायां बधो वैरूप्ये इत ईच्च ॥ शानी तेजने । ईदित् । शीशांसति शीशांसते । दानी अवखण्डने । ईदित् दीदांसति दीदांसते । मानि पूजायाम् इदित् मीमांसते । बधि बन्धने । इदित् बीभत्सते । कृपौङ् सामर्थ्ये । औङावितौ शप्यट् ॥

**१३४८ कृपोऽकृपीटादिषु** ।४।२।२६०। कृपो रस्य लो भवति न कृपीटादिस्थस्य ॥ कल्पते । धेट् पा पाने । पा इत्यतो लडादि ॥

**१३४९ पाघ्राध्मास्थाम्नादाण्दृष्टर्यर्त्तिश्रौतिधिन्वुकृण्वुशादसदः पिबजिघ्रधमतिष्ठमनयच्छपश्यर्छशृधिकृशीयसीदम्** ।४।२।५८। पादीनां शिति प्रत्यये यथासङ्ख्यं पिबादयो भवन्ति ॥ शेषं प्राग्वत् पिबति पिबतः पिबन्ति इत्यादि । घ्रा गन्धोपादाने जिघ्रति । ध्मा शब्दाग्निसंयोगयोः धमति । ष्ठा गतिनिवृत्तौ तिष्ठति । म्ना अभ्यासे मनति । दाण् दाने ण इत् यच्छति । दृशृ प्रेक्षणे ऋदित् पश्यति । ऋ गतौ ऋच्छति । श्रु श्रवणे स्वादित्वात् श्नुः शृणोति । धिवु प्रीणने धिनोति ।

---

१ भिषग्व्यापारो भिषज्या व्याधिप्रतीकारः । अत्र ज्वरं चिकित्सति ॥ आदिग्रहणात् क्षेत्रे चिकित्स्यानि तृणानि विनाशयितव्यानीत्यर्थः । क्षेत्रे चिकित्स्यः पारदारिकः निग्राह्य इत्यर्थः । विचिकित्सति संशयते इत्यर्थः ॥

क्लवु हिंसाकरणयोः कृणोति। शद्लृ शातने लृदित् शीयते। ङिदिच्छीये- त्यनेन तङ्। षद्लृ विशरणगत्यवसादनेषु। लृदित्। षत्सः। सीदति॥

**१३५० सर्त्तेर्धौ वेगे** ।४।२।५९। सर्त्तेर्धौ भवति वेगे गम्यमाने॥ सृ गतौ। धावति॥

**१३५१ यङ्गमिषोः शि च्छः** ।४।२।५७। यमादीनां शिति च्छो भवति॥ यम उपरमे यच्छति। गम्लृ सृप्लृ गतौ लृदित् गच्छति। इषू इच्छायाम् ऊदित् तुदादित्वात् शः इच्छति। चमू अदने ऊदित् आङ्पूर्वत्वे॥

**१३५२ ष्ठिवूक्लम्वाचमः** ।४।२।६४। एतेषामकः शिति दीर्घो भवति॥ आचामति। ष्ठिवू निसरने ऊदित् ष्ठीवति। अप्वक्कष्ट्याष्ठीव इति निषेधान्न सत्वं। क्लमू ग्लाने ऊदित् क्लामति। क्रमू पादविक्षेपे ऊदित्॥

**१३५३ क्रमोऽतङाने** ।४।२।६५। क्रमोऽकः शिति दीर्घो भवति न तङानयोः॥ क्रामति। अतङान इति किं॥

प्रत्यक्षबुद्धिः क्रमते न यत्र तल्लिङ्गगम्यं न तदर्थलिङ्गम्॥
वाचो न वा तद्विषयेण योगः का तद्गतिःकष्टमशृण्वतां ते॥ १॥

आक्रममाणश्चन्द्रः। धुर्वै हिंसायाम्। ऐदित् धातोर्व्रीति दीर्घः धूर्वति। अक्षौ व्याप्तौ च। औदित्॥

**१३५४ अक्षः श्नुः** ।४।३।२६। अक्षः श्ले श्नुर्भवति वा॥ श इत्। णत्वम्। अक्ष्णोति॥ तक्षू तनूकरणे॥

**१३५५ तक्षस्तनूकृतौ** ।४।३।२७। तनूकृतौ तक्षः श्ले श्नुर्भ- वति॥ तक्ष्णोति॥

**१३५६ स्तनभुस्तुनभूस्कनभूस्कुनभूस्कोः श्ना च** ।४।३।२९। एतेभ्यः श्ले श्ना च श्नुश्च भवतः॥ स्तन्भू स्तम्भे ऊदित् हलो न इति नलुक्। स्तभ्नाति स्तभ्नोति। स्तुभ्नाति स्तुभ्नोति। स्कभ्नाति स्कभ्नोति। स्कुभ्नाति स्कुभ्नोति। स्कुनाति स्कुनोति। दन्श दशने॥

**१३५७ दन्शसञ्जः शपि** ।४।१।२२४। अनयोः शपि नस्य लुग् भवति ॥ दशति । षन्ज सङ्गे । षस्सः नलुक् । सजति । रन्जी रागे । ईदित् ॥

**१३५८ रन्जः** ।४।१।२२५। रन्जः शपि नस्य लुग् भवति ॥ रजति रजते ॥ गुहौञ् संवरणे । औञावितौ । शप्येङ् ॥

**१३५९ गोहोऽचि** ।४।१।२१९। गुहः ओतः अजादौ प्रत्यये परे ऊद्भवति ॥ गूहति गूहते ॥

अथ अदादिः । विद ज्ञाने ॥ अदित् ॥

**१३६० विदो लटो वा** ।१।४।१०२। अदादेर्विदो लटस्तिवादीनां नवनां यथासङ्ख्यं णशादयो वा भवन्ति ॥ वेद विदतुः विदुः । वेत्थ विदथुः विद । वेद विद्व विद्म ॥ वेत्ति वित्तः विदन्ति इत्यादि । संपूर्वत्वे संवित्ते संविदाते ॥

**१३६१ वेत्तेर्वा** ।४।१।९२। वेत्तेस्तङो झेरट् भवति ॥ संविद्रते संविदते । लङि । सिविदेति झेर्जुस् । सिपि दश्चेति वा रिः । अवेत् अवित्ताम् अविदुः । अवेः अवेत् अवित्तम् अवित्त । अवेदम् अविद्व अविद्म ॥ लेटि ॥

**१३६२ लेटः कृलेद्** ।१।४।८७। विदो लेटः किद्वदाम् वा भवति लेडन्तश्च कृञनुप्रयुज्यते ॥ विदांकरोतु । वेत्तु ॥ हन हिंसागत्योः ॥ अदित् । ततो लडादि । अपिति ङित्त्वात् ॥

**१३६३ हन्मन्यंरङ्गम्वनातितनादेर्लुग् जलि** । ४।१।२६१। हनादीनां वनतेस्तनादीनां च जलादौ किति ङिति न प्रत्यये लुग् भवति ॥ झोऽन्ते । गंहन्जनित्यतो लुचि हो घः । हन्ति हतः घ्नन्ति । हंसि हथः हथ । हन्मि हन्वः हन्मः ॥ लङि । अहन् अहताम् अघ्नन् । अहन् अहतम् अहत । अहनम् अहन्व अहन्म ॥ लेटि ॥

**१३६४ शाध्येधिजहि** ।४।२।२३। एते हौ निपात्यन्ते ॥ हन्तेर्हौ जहि ।

हन्तु हताद्वा हतां घ्नन्तु। जहि हताद्वा हतं हत । हानानि हनाव हनाम ॥ लेङि ॥ हन्यात् हन्यातां हन्युरित्यादि । अस भुवि । अपिति नमस्त्योर्लुगित्यतो लुक् । सिपि । तासस्त्योस्सीति सलुक् । अस्ति स्तः सन्ति । असि स्थः स्थ । अस्मि स्वः स्मः ॥ लङि स्यस्तेस्सोऽल इतीट् । आरैच् । आसीत् आस्ताम् आसन् । आसीः आस्तम् आस्त । आसम् आस्व आस्म ॥ लेटि हावेधि । अस्तु स्ताद्वा स्तां सन्तु । एधि स्ताद्वा स्तं स्त । असानि असाव असाम ॥ लेङि । स्यात् स्यातां स्युः । इत्यादि ॥ मृजौ शुद्धौ । औदित् पित्यरि ॥

**१३६५ मृजुः** ।४।१।२३२। मृज ऋतोऽत आद्भवति ॥

**१३६६ आर्वाचि** ।४।१।२३३। मृज ऋतोऽजादौ प्रत्यये आर् वा भवति ॥ व्रश्चेति षत्वे ष्टुत्वं । मार्ष्टि मृष्टः मृजन्ति मार्जन्ति । मार्क्षि मृष्ठः मृष्ठ । मार्ज्मि मृज्वः मृज्मः ॥ लङि । लेति पदान्तस्य लुक् । जश्त्वादि ॥ अमार्ट् अमृष्टाम् अमृजन् अमार्जन् । अमार्ट् अमृष्टम् अमृष्ट । अमार्जम् अमृज्व अमृज्म ॥ लेटि । मार्ष्टु मृष्टाद्वा मृष्टां मृजन्तु मार्जन्तु । मृड्ढि मृष्टाद्वा मृष्टं मृष्ट । मार्ज्जानि मार्ज्जाव मार्ज्जाम ॥ लेङि । मृज्यात् मृज्यातां मृज्युः इत्यादि ॥ वच परिभाषणे । अकित्त्वान्न यत्र इक् । वक्ति वक्तः वचन्ति इत्यादि ॥ रुदृ अश्रुविमोचने । ऋदित् ॥

**१३६७ वल इट्** ।४।२।३०। रुदादेर्जक्षिपर्यन्तात् परस्य वलादेरलेर्ले इड् भवति ॥ रोदिति रुदितः रुदन्तीत्यादि । लङि ॥

**१३६८ ईट् चाजक्षरुद्भ्यः** ।४।२।२९। रुदादेर्जक्षिपर्यन्तात् परस्य अकृङितो हलादेरलेर्लेः अल्मात्रस्य अडीटौ भवतः ॥ अरोदत् अरोदीद्वा अरुदिताम् अरुदन् । अरोदः अरोदीः अरुदितम् अरुदित । अरोदम् अरुदिव अरुदिम ॥ लेट् । रोदितु रुदिताद्वा रुदितां रुदन्तु । रुदिहि

---

१ रोदितिः स्वपितिश्चैव श्वसितिः प्राणितिस्तथा ॥
जक्षितिश्चेति विज्ञेयो रुदादिः पञ्चको गणः ॥ १ ॥

रुदिताद्वा रुदितं रुदित । रोदानि रोदाव रोदाम ॥ लेङि । रुद्यात् रुद्यातां रुद्युः इत्यादि ॥ एवं ञिष्वप् शये । ञिदित् । षस्सः । स्वपिनि स्वपितः स्वपन्तीत्यादि ॥ अन श्वस प्राणने । अदित् । अनिति श्वसिति ॥ जक्ष भक्षहसनयोः । अदित् झोऽत् । जक्षिति जक्षितः जक्षतीत्यादि ॥ जागृ निद्राक्षये । झोऽत् । जागर्त्ति जागृतः जाग्रति । जागर्षि जागृथः जागृथ । जागर्मि जागृवः जागृमः ॥ लङि झेर्जुस् । अजक्षत् अजक्षीद्वा अजक्षिताम् अजक्षुः इत्यादि ॥ अजागः अजागृताम् अजागरुः इत्यादि ॥ लेटि । जागर्तु जागृताद्वा जागृतां जाग्रतु इत्यादि ॥ लेङि । जागृयात् जागृयातां जागृयुरित्यादि ॥ दरिद्रा दुर्गतौ ॥

**१३६९. इद्दरिद्रः** ।४।२।४९। दरिद्रातेरातः अपिति यि च हलादौ लिवर्जितलादेशे परे इद्भवति ॥ त इत् झोऽति श्वाऽञ्झेरातः इत्यातो लुक् । दरिद्राति दरिद्रितः दरिद्राति । दरिद्रासि दरिद्रिथः दरिद्रिथ । दरिद्रामि दरिद्रिवः दरिद्रिमः ॥ लङि । अदरिद्रात् अदरिद्रिताम् अदरिद्रुरित्यादि ॥ लेटि । दरिद्रातु दरिद्रिताद्वा दरिद्रितां दरिद्रतु । दरिद्रिहि दरिद्रिताद्वा दरिद्रितं दरिद्रित । दरिद्राणि दरिद्राव दरिद्राम ॥ लेङि । दारीद्रियात् दरिद्रियातां दरिद्रियुरित्यादि ॥ चकासृ दीप्तौ । ऋदित् झोऽत् । चकास्ति चकास्तः चकासति । इत्यादि ॥ लङि । अन्तलुचि । अतिपीति निषेधान्न सस्य रिः । जश्त्वचर्त्वे अचकात् अचकाद् अचकास्ताम् अचकासुरित्यादि ॥ लेटि । चकास्तु चकाद्धि चकाधि ॥ लेङि । चकास्यात् ॥ शासु अनुशिष्टौ । ऊदित् अपिति ॥

**१३७० शासः क्ङित्यङ्हलीत्** ।४।१।२४०। शास उपान्त्यस्य अङि हलि च किति ङिति च परे इद्भवति ॥ त इत् षत्त्वष्टुत्त्वे ॥ शास्ति शिष्टः शासति । शास्सि शिष्ठः शिष्ठ । शास्मि शिष्वः शिष्मः ॥ लङि । अशात् अशिष्टाम् अशासुः । अशाः अशात् अशाद् । सिपि दश्चेति वा रिः । अशिष्टम् अशिष्ट । अशासम् अशिष्व अशिष्म ॥ लेटि । शास्तु शिष्टाद्वा शिष्टां शासतु । सिपि शाधिभावः । शाधि शिष्टाद्वा शिष्टं शिष्ट । शासानि

शासाव शासाम ॥ लेङि । शिष्यात् शिष्यातां शिष्युः इत्यादि ॥ वश कान्तौ । षत्वष्टुत्वे । अपिति । वशिव्यचीत्यादिना यत्र इकु सिपि षत्वे कत्वादि । वष्टि उष्टः उशन्ति । वक्षि उष्ठः उष्ठ । वश्मि उश्वः उश्मः ॥ लङि ॥ अन्तलुचि षत्वादि । अपिति इकि ऐत्र् । अवट् औष्टाम् औशन् । अवट् औष्टम् औष्ट । अवशम् औश्व औश्म ॥ लेटि । हेर्धौ । षत्वं । टापि नेकु । वष्टु उष्टाद्वा उष्टाम् उशन्तु । उड्ढि उष्टाद्वा उष्टम् उष्ट । वशानि वशाव वशाम ॥ लेङि । उश्यात् उश्याताम् उश्युरित्यादि ॥ द्यु अभिगमने ॥

१३७१ हल्योरौत् ।४।२।२१। उवर्णस्य अक्ङिति हलि ल्यलौ औद्भवति ॥ द्यौति द्युतः द्युवन्ति इत्यादि ॥ लेङि । अलेङ्क्कतीति निषेधान्न दीर्घः । द्युयात् ॥ क्ष्णु तेजने । सम्पूर्वत्त्वे तङ् संक्ष्णुते संक्ष्णुवाते संक्ष्णुवते इत्यादि ॥ स्नु प्रस्रवणे । स्नौति ॥ णु स्तुतौ । णो नः । नौति ॥ इण् गतौ । पित्येङ् अचि ह्णिणोऽचीति यत्र् । एनि इतः यन्ति । एषि इथः इथ । एमि इवः इमः ॥ लङि ऐत्र् । अच्याय् । ऐत् ऐताम् आयन् । ऐः ऐतम् ऐत । आयम् ऐव ऐम ॥ लेटि । एतु इताद्वा इतां यन्तु । इहि इताद्वा इतम् इत । अयानि अयाव अयाम ॥ लेङि । इयात् इयाताम् इयुरित्यादि ॥ इकु स्मरणे । क इत् । एति इतः ॥

१३७२ वेकः ।४।२।२। इको धातोः अजादौ श्लले यत्र् वा भवति ॥ पक्षे इय् । यन्ति इयन्तीत्यादि ॥ या प्रापणे । याति यातः यान्तीत्यादि ॥ लङि ॥

१३७३ आद्विषो झेर्जुस्वा ।१।४।१०६। आदन्ताद्विषेश्च परस्य

---

१ 'अक्ङिलुग्घेतौ' 'द्व्युक्तेनांचि ल्यलौ' इत्यनुवर्तते । उवर्णान्तस्याद्विरुक्तस्य धातोरक्ङिलुग्घेतौ हलादौ लिवर्जितलादेशे परे इकः औकारादेशो भवति ॥ हलीति किं? ब्रवीति । यवानि यु मिश्रणे लेट् । ओरिति किं? एति अध्येति । अक्ङिलुग्घेताविति किं? युतः रुतः । अपि स्तुयाद्राजानम् । लीति किं? स्तोता । अलानिति किं? ज्यासिष्ट । अद्वेरिति किं? योयोते जुहोति । इहोकारान्तस्य धातोर्विधानादिह न भवति । सुनोति ॥

ङितो लः झेर्जुस्वा भवति ॥ ज इत् । श्नुगुसीत्यातो लुक् । अयात् अयाताम् अयुः अयान्वा इत्यादि ॥ लेटि । यातु ॥ लेङि । यायात् ॥ एवं वा गतिगन्धनयोः इत्यादयः आदन्ता नेयाः ॥ चक्षि व्यक्तायां वाचि । इदित् । तङ् । संयोगस्येति कलुक् सयि कलुचि षस्य कः सः षः ध्वादौ जश्त्वष्टुत्वे । चष्टे चक्षाते चक्षते । चक्षे चक्षाथे चड्ढ्वे । चक्षे चक्ष्वहे चक्ष्महे इत्यादि ॥ ईरि गतौ । ईर्ते । ईडि स्तुतौ ॥

**१३७४ ईशीड्भ्यां स्ध्वे** ।४।२।२१। ईशीड्भ्यां परस्यालेर्लेस्सादेः ध्वादेश्च इट् भवति ॥ ट इत् । ईट्टे ईडाते ईडते । ईडिषे ईडाथे ईडिध्वे । ईडे ईड्वहे ईड्महे ॥ ईशि ऐश्वर्ये । इदित् । ईष्टे ईशाते ईशते । ईशिषे ईशाथे इत्यादि ॥ आसि उपवेशने । आस्ते आसाते आसते इत्यादि ॥ शिजुङ् अव्यक्ते शब्दे । उङावितौ । नम् । कुत्वे नस्य ङः । अकुत्वे ञः । शिङ्क्ते शिञ्जाते शिञ्जते इत्यादि ॥ इङ् अध्ययने । अधीते अधीयाते अधीयते इत्यादि । द्विषी अप्रीतौ । ईदित् । द्वेष्टि द्विष्टे ॥ ऊर्णुञ् आच्छादने ॥

**१३७५ वोर्णोः** ।४।२।२२। ऊर्णुञः अक्ङिति हलि स्यलौ औद्वा भवति ॥ ऊर्णोति ऊर्णौति ॥ ष्टुञ् स्तुतौ । यङ्तुर्वीति वा ईट् । स्तवीति स्तौति स्तुते ॥

अथ ह्वादिः ॥ ञिभी भये । ञिदित् । ह्वादित्वात् शपः श्लुपि द्विर्भावादि। तसादौ ॥

**१३७६ भ्यो वा** ।४।२।५०। भियोऽपिति यि च हलादौ स्यलौ इद्वा भवति ॥ बिभेति । बिभितः बिभ्यतीत्यादि ॥ पॄ पालनपूरणयोः । इत्वं पिपर्त्ति पिपृतः पिप्रतीत्यादि । ऋ गतौ । इत्वे ॥

**१३७७ पूर्वस्यास्वेऽचीयुव्योः** ।४।१।७६। द्विर्भावे पूर्वस्य इवर्णोवर्णयोरस्वेऽचि परे यथासङ्ख्यं इयुवौ भवतः ॥ इयर्ति इयृतः इयूति ॥ लङि । इयादेशे ऐच् । ऐयः ऐयृताम् ऐयरुः ॥ ओहाक् त्यागे । क इत् ॥

**१३७८ हाकः** ।४।२।५१। हाकोऽपिति यि च हलादौ स्यलौ इद्वा भवति ॥ जहाति जहीतः जहितः जहति ॥

**१३७९ आ च हौ** ।४।२।५२। हाको हौ इदाच्च वा भवतः ॥ जहिहि जहीहि जहाहि ॥

**१३८० यि लुक्** ।४।२।५३। हाकः यादौ स्यलौ लुग् भवति ॥ जह्यात् ॥ माङ् माने । ङ इत् । इत्वं मिमीते मिमाते मिमते ॥ डुभृञ् धारणपोषणयोः ॥ डुञ इतः इत्वं । बिभर्ति बिभृतः बिभ्रति ॥ णिजृञ् शौचपोषणयोः ॥ ऋञावितौ ॥

**१३८१ निजामेत्** ।४।१।९४। निजादीनां द्विर्भावे पूर्वस्याच एद्भवति ॥ नेनेक्ति नेनिक्तः नेनिजति । जुसादौ ङ्युक्तेरित्येङरौ न भवतः अनेनिजुरित्यादि । विजृञ् पृथग्भावे । वेवेक्ति ॥ विषृञ् व्याप्तौ । वेवेष्टि॥

अथ दिवादिः ॥ त्रसै उद्वेजने । ऐदित् ॥

**१३८२ भ्राशम्लाशभ्रमिक्रमित्रसित्रुटिलषो वा** ।४।३।२३। एभ्यो धातुभ्यः श्लेले कर्त्तरि श्यो वा भवति ॥ पक्षे शप् । त्रस्यति त्रसति । त्रुट्यति त्रुटति । तुदादित्वात् शः । लष्यति लषति । क्राम्यति क्रामति । व्यध ताडने । इक् । विध्यति । शमू दमू उपशमे । ऊदित् ॥

**१३८३ शमां दीर्घोऽष्टानाम्** ।४।२।६३। शमादीनामष्टानां शिति दीर्घो भवति ॥ शाम्यति दाम्यति । तमू काङ्क्षायां ॥ ताम्यति । श्रमू तपसि । श्राम्यति । भ्रमू अनवस्थाने । भ्राम्यति भ्रमति । क्षमू सहने । क्षाम्यति । क्लमू ग्लाने । क्लाम्यति । मदै हर्षे । माद्यति ॥

---

१ 'हल्यघोरीः' 'आऽज्ञोरातः' इत्यनुवर्तते । इकाराकारौ वा भवत इत्यर्थः । हल्यघोरीरित्यस्यापवादः ॥

२ णिजृञ् विजृञ् विषृञ् इति त्रयो निजादयः । परतो दिवादयः । निजामिति त्रय एवोक्तास्ततः परेऽपि किं न विज्ञायन्त इति चेत् ततः परे दिवादयः । इह श्लुचि परतो यद्विर्वचनं तन्निमित्तकं तत्र पूर्वस्यैदेत्वं । न हि दिवादिभ्यो द्विर्वचननिमित्तश्लुगस्ति । जुसादौ ङ्युक्तेरित्येङरौ प्राप्तौ ङ्युक्तेर्णावि स्यलौ इति तौ न भवतः ॥

**१३८४ यसोऽनुपसर्गात्** ।४।१।२४। अनुपसर्गाद्यसः कर्तरि श्ले परे श्यो वा भवति ॥ यसू प्रयत्ने । यस्यति यसति वा ॥

**१३८५ एञ्मिदोऽकः** ।४।२।६१। मिदोऽकः शित्येञ्भवति ॥ ञि- मिदा स्नेहने । ञिदाच्चेतौ । मेद्यति । जॄष् झॄ वयोहानौ । ष इत् । इर् दीर्घः । जीर्यति । शो तनूकरणे ॥

**१३८६ ओतः श्ये** ।४।२।१६। ओतः श्ये लुग् भवति ॥ श्यति ॥ छो च्छेदने । छ्यति । षो अन्तकर्मणि । स्यति । दो अवखण्डने । द्यति । जनैङ् प्रादुर्भावे । ऐङावितौ ॥

**१३८७ ज्ञाजनो जाः** ।४।२।६०। ज्ञाजनोः शिति जा भवति ॥ जायते । रन्जी रागे । ईदित् ॥

**१३८८ हलो नोऽनर्चाञ्च्युदितोः** ।४।१।२२१। हलन्तस्य- धातोरुपान्त्यस्य नस्य किति ङिति च प्रत्यये लुग् भवति नार्चायामञ्चेः उदितश्च ॥ रज्यति रज्यते ॥

अथ स्वादिः ॥ आप्लृ व्याप्तौ ॥ लृदित् । संयोगपरत्वादुतो यञ् लुक् च न भवति । आप्नोति आप्नुतः आप्नुवन्ति इत्यादि । लेटि । मध्यमपुरु- षे आप्नुहि शेषं सुगमम् ॥

अथ क्र्यादिः ॥ पूञ् पवने । ञ इत् । क्र्यादित्वात् श्नायां ॥

**१३८९ प्वां ह्रस्वः** ।४।२।६२। प्वादीनां शिति ह्रस्वो भवति ॥ पुनाति पुनीते ॥ लूञ् छेदने । लुनाति लुनीते । धूञ् कम्पने । धुनाति धुनीते । स्तॄञ् छादने । स्तृणाति स्तृणीते ॥ कॄञ् हिंसायां । कृणाति कृणीते इत्यादि । ज्या वयोहानौ । वशीति यञ इक् । जिनाति । ज्ञा अवबोधने । जानाति जानीते । क्षुभ सञ्चलने । अन्तक्षुभ्नादीनाम् इति णत्वाभावः । क्षुभ्नाति ॥

अथ तुदादिः ॥ भ्रस्जी पाके । तुदादित्वात् शः । वशिव्यचीति यञ इक् श्चुत्वजश्त्वे । भृज्जति भृज्जते । लिपी उपदेहे । लिपादीति नम् ।

नः परस्वोऽनुनासिकः। लिम्पति लिम्पते। क्षि निवासगत्योः। इय्। क्षियति। कॄ विक्षेपे। इर् किरति। गॄ निगरणे। इर्॥

१३९० ग्रोऽचि ।४।२।२५७। ग्रो रस्याजादौ प्रत्यये लो वा भवति॥ गिरति। गिलति। दृङ् आदरे। ङित्। रीयौ। आद्रियते। प्रछ ज्ञीप्सायाम्। अदित्। वशीति यञ इक्। द्वित्वं पृच्छति॥ ओव्रश्चू छेदने। ओदौताविती। वशिव्यचीतीक् श्चुत्वं वृश्चति। इषू इच्छायाम्। ऊदित्। यक्षमिति षस्य छः। द्वित्वम् इच्छति। णू स्तवने। णो नः। उव्। नुवति। ष्वन्जि सङ्गे। इदित्। तङ्। हलो न इति न्लुक् षस्सः। स्वजते।

अथ रुधादिः॥ तृह हिंसु हिंसायाम्। अदित्। रुधादित्वान्नम्॥

१३९१ तृणेह् ।४।२।२४। तृहः अक्ङिति हलादौ ल्यलौ तृणेहिति निपात्यते॥ हो ढः अध इति तो धः ष्टुत्वं ढे ढलुक्। तृणेढि तृण्ढः तृंहन्ति इत्यादि॥

अथ चुरादिः। लड उपसेवायाम्॥ अदित्। णिजादिः॥

१३९२ डश्चर्फिडादीनाम् ।४।२।२५६। ऋफिडादीनां डस्य रस्य च लो भवति॥ लालयति। भू कृपो अवकल्पने। भावयति। कृपेररि। ऋफिडादित्वाल्लः। कल्पयति। कथ वाक्यप्रबन्धे। अदित् चुरादित्वाण्णिच्॥

१३९३ कथादिपातिस्फायोऽग्लग्वम् ।४।१।१९७। कथादेर्णौ अग् भवति पातेर्लक् स्फायो वम्॥ कित्। अत इति लुक्। ञ्णित्यात्वे प्राप्ते॥

१३९४ परेऽचः प्राचोऽकिदीर्घयद्यासदस्कुग्विधौ ।१।१।५१।

१ सश्च कश्च स्कौ स्कोर्लुक् स्क्लुक्। असतः असदधिकारात् आ पर्यन्तं आसत्। आसच्चासौ अस्क्लुक्च आसदस्क्लुक्। किश्च दीर्घश्च यश्च द्वौ च आसदस्क्लुक् च तथा। तेषां विधिः पुनर्नम्। किविधिं दीर्घस्य विधिं यकारविधिं द्वयोर्द्वित्वस्य विधिं आ एतस्मादारभ्य 'दोमोत्यादसो माद्ध्वावित्यसत्' इत्यारभ्य 'नोर्म्यादिभ्यः' एतत्पर्यन्तं यो विधिर्विधीयते सः॥

अजादेशः परनिमित्तकः ततः पूर्वविधौ कर्तव्ये स्थानीव भवति न क्विदीर्घयद्वित्वविधौ संयोगस्यादिस्कोर्लुग्वर्जितासदधिकारपर्यन्तविधौ च ॥ इति स्थानिवद्भावत्वादनुपान्त्यत्वेन अत आन्न भवति । कथयति । एवं कथादिगणः ॥ मृगि अन्वेषणे । इदित् कथादित्वादाकि अत इति लुक् लुग्वेतौ णौ नाद् । मृगयते अथ युजादिः । ली द्रवीकरणे । णिचि ॥

१३९५ लीलो नग्लक् स्नेहद्रवे ।४।१।१९५। लीलयोर्णिचि नग्लकौ भवतः स्नेहद्रवे ॥ अकावितौ । विलीनयति ॥ धूञ् कम्पने । ञ इत् । णिच् ॥

१३९६ प्रीञ्धूञोर्नक् ।४।१।१९८। प्रीञ्धूञोर्णौ नग् भवति ॥ अकावितौ । धूनयति प्रीणयति ॥[1]

कर्मभावयोर्यक् । अलुगादि । गोपाय्यते गुप्यते इत्यादि । बुध्यते पीयते घ्रायते ध्मायते स्थीयते म्नायते दीयते । दैब् शोधने । ब इत् ॥

१३९७ एचोऽश्याः ।४।१।१८०। धातोरेच अश्याद् भवति ॥ दायते । दश्यते ॥

१३९८ यङ्यक्क्याद्दशे ।४।२।१४। हलद्वयात्परस्य ऋतोऽर्तेश्च यङ्यक्क्याद्दशेषु अर्भवति ॥ अर्यते ॥ खनूञ् अवदरणे । ऊञावितौ ॥

१३९९ ये वा ।४।१।२६९। जनसन्खनां क्ङिति ये आद्वा भवति ॥ खायते खन्यते ॥[2] अथ अदादिः । हन्यते । अस्तेर्भूः । भूयते । उच्यते । सुप्यते ॥

१४०० जागुः किति ।४।२।१०। जागर्तेः ऋतः किति अर्भवति ॥ जागर्यते ॥

---

१ प्रीञिति अकारोच्चारणं यङ्लुनिवृत्त्यर्थम् । धूञिति धुवति निवृत्त्यर्थं च ॥ प्रीयते इत्यत्र 'ईहल्यप्ये' इति इक् ॥

२ ये इति यप्रत्ययनिर्देशो न वर्णनिर्देशः तेन सन्यादित्वात्वं न भवति । केचिदत्रापि भवत्येवे त्याहुः । सायात् खायात् ॥

**१४०१ असंसनुण्णचने** ।४।२।९७। दरिद्रातेर्ल्यङ्क्ङि प्रत्यये लुग् भवति न सादौ सनि उणे ण्वौ अनटि च ॥ दरिद्यते । शिप्यते । उश्यते । नूयते । ईयते । यायते । मीयते ॥

**१४०२ चक्षः रुशाञ् वाचि** ।४।२।९२। वाचि वर्तमानस्य चक्षः ल्यङ्क्ङि प्रत्यये रुशाञ् भवति ॥

**१४०३ शो यः** ।४।२।९४। रुशाञादेशस्य शस्य यो वा भवति॥ व्याख्यायते । चर्त्वे व्याक्शायते । शिञ्ज्यते ॥ अथ ह्वादिः । हीयते । मीयते । भ्रियते ॥

अथ दिवादिः । विद्यते । जीर्यते । सीयते । दीयते । दीर्घः जायते । जन्यते । नलुक् । रज्यते । स्तृञ् आच्छदने । स्तीर्यते ॥

अथ क्र्यादिः । पूर्यते । जीयते । ज्ञायते । बध्यते ॥ अथ तुदादिः । भृज्यते विलिप्यते । क्षि निवासगत्योः । क्षीयते । किर्यते । गीर्यते । आद्रियते । पृच्छ्यते । वृश्च्यते । इष्यते । गूर्यते । व्याप्रियते । स्वज्यते ॥ अथ तनादिः । सायते । सन्यते । अथ रुधादिः । रुध्यते । भिद्यते ॥ छिद्यते ॥ अथ चुरादिः । कथ्यते मृग्यते ॥ अथ युजादिः ॥ धून्यते प्रीण्यते ॥ इति भावकर्मप्रकरणं समाप्तं ॥

लिङि गोपाय्यात् गोपाय्यास्ताम् इत्यादि । गुप्यात् गुप्यास्तामित्यादि । कामयिषीष्ट कमिषीष्ट । ऋतियिषीष्ट ऋत्यात् । चिकित्स्यात् । तितिक्षिषीष्ट । जुगुप्सिसीष्ट । शीशांसिसीष्ट शीशांस्यात् । मुदि हर्षे । इत्यसादित्वादाकित्त्वेन एङ् । मोदिषीष्ट । हदि पुरीषोत्सर्गे । अक्षुन्विति नेट् हत्सीष्ट । त्रपौषि लज्जायाम् । औदित्त्वाद्वेट् । त्रपिषीष्ट त्रप्सीष्ट । क्षमौषि सहने । क्षमिषीष्ट क्षंसीष्ट ॥ ऊहि तर्के ॥

---

१ सनः सादिविशेषणं किं? दिदरिद्रिषति । इदमेव ज्ञापकं दरिद्रः सनो विकल्पेनेडिति ।

२ वाचीति किं? चक्षुः विचक्षणः अत्र बोद्धव्ये । संचक्ष्याः अत्र वर्जने ॥ नृचक्षाः राक्षसः अत्र हिंसायाम् ॥ रुशाञिति ञकारो नित्यात्मनेपदनिवृत्त्यर्थः ॥

**१४०४ उपसर्गादुदूहः** ।४।२।५। उपसर्गादूहेरिकः क्ङिति यादौ प्रत्यये उद्भवति ॥ अभ्युह्यात् अभ्यूहिषीष्ट । गाहौङ् विलोडने । औदित्त्वाद्वेट् । गाहिषीष्ट । इडभावे ढत्वादि घाक्षीष्ट । स्मिङ् ईषद्धसने । अजन्तत्वान्नेट् । स्मेषीष्ट । श्यैङ् गतौ । एचोऽश्या इत्यात् श्यासीष्ट ॥ धृङ् अविध्वंसने । उरिति किद्वत्त्वान्नार् । धृषीष्ट । पूङ् पवने । अश्विश्रीतीङ्निषेधाभावादिट् । पविषीष्ट । डीङ् विहायसां गतौ डयिषीष्ट । स्रन्सूङ् भ्रन्सूङ् अवस्रंसने । लिङ्यङित्त्वान्न न्लुक् । स्रंसिषीष्ट भ्रंसिषीष्ट ॥ स्यन्दौङ् स्रवणे । स्यन्दिषीष्ट स्यंत्सीष्ट । कृपौङ् सामर्थ्ये । कल्पिषीष्ट । क्लृप्सीष्ट ॥ स्मृ आध्याने । यङ्यक्येङ्र् स्मर्यात् ॥ दॄ भये । इर् । दीर्यात् ॥ श्रा पाके ॥

**१४०५ हल्भ्यां लिङ्येद्वा** ।४।२।८५। धातोर्हल्द्वयादातः क्ङिति लिङि एद्वा भवति ॥ श्रायात् श्रेयात् । रमि क्रीडायां ॥

**१४०६ रयनगान्मः** ।४।२।१८४। रादिपूर्वान्मान्तादेकाचो धातोर्वलादेरिड् न भवति ॥ रंसीष्ट । बुधी बोधने । बुध्यात् । बन्नासेति नेट् । भुत्सीष्ट ॥ धृ स्थैर्ये च रिः ध्रियात् ॥ जि ज्रि अभिभवे । दीर्घः । जीयात् ॥ धेट् पा पाने । आत्वे । घुत्वादेत् । धेयात् पेयात् ॥ हल्द्वयात् परत्वाद्वैत् । घ्रायात् घ्रेयात् । ध्मायात् ध्मेयात् । घुमेति नित्यमेत् षत्वनिवृत्तौ घुत्वनिवृत्तिः स्थेयात् म्नायात् म्नेयात् देयात् । दैव् शोधने । आत्वम् अघुत्वान्नैत् । दायात् ॥ ग्लायात् ग्लेयात् । म्लायात् म्लेयात् ॥ द्रै स्वप्ने । द्रायात् द्रेयात् । कै गै रै शब्दे । गेयात् ॥ ऋ प्रापणे च । यङ्यक्याश्च इत्यर् । अर्यात् ऋम्यात् ॥

**१४०७ क्रमः** ।४।२।१७४। क्रमस्तङानयोर्वलादेरिड् न भवति ॥ क्रंसीष्ट । गम्यात् ॥

**१४०८ गमः** ।४।२।७०। गमस्सादेर्वलादेरिड् वा भवति ॥

---

१ उपसर्गादिति किं? ऊह्यते । ऊह इति किं? समीह्य क्ङितीति किं? समूह्यः अभ्यूह्यार्थः । इक इति किं? आं उह्यते ओह्यते समोह्यते । समौह्यते ॥

**१४०९ गमेरसुप्तङ्गाने** ।४।२।१७३। गम्स्तुभ्यां परस्य वलादेरसुब्धातुसम्बन्धिनोस्तङ्गानयोरिड् न भवति ॥ सम्पूर्वत्वे । सङ्गंसीष्ट ॥

**१४१० गमो वा** ।४।१।१६४। गमस्ताङि सादौ सिलौ किद्वद्वा भवति ॥ हन्मन्येति मलुक्, सङ्गसीष्ट। दश्यात्। दश्यात्। टु ओ श्वि गतिवृद्ध्योः श्व्यादीतीक् । शूयात् ॥ वस निवासे उष्यात् । वद व्यक्तायां वाचि उद्यात् । यजी देवपूजासङ्गतकरणदानेषु । इज्यात् अस्मास्त्विति नेट् । यक्षीष्ट ॥ टुवपी बीजसन्ताने । उप्यात् ॥

**१४११ आंवलिलुक्षिलुसस्वतिशतात् पः** ।१।२।१८२। आवादिपूर्वात् पान्तादेकाचो धातोर्वलादेरिड् न भवति ॥ वप्सीष्ट । वही प्रापणे उह्यात् । वनेति नेट् ढत्वादि वक्षीष्ट ॥ वेञ् तन्तुसन्ताने ऊयात् वासीष्ट । व्येञ् संवरणे वीयात् व्यासीष्ट । ह्वेञ् स्पर्धशब्दयोः हूयात् ह्वासीष्ट । भजी सेवायाम् भज्यात् भक्षीष्ट । रज्यात् ॥

**१४१२ रभसंस्वान् न्जः** ।४।२।१७९। रादिपूर्वान्जान्तादेकाचो धातोर्वलादेरिड् भवति ॥ रङ्क्षीष्ट । शपी आक्रोशे शप्यात् शप्सीष्ट । गुहौञ् संवरणे गुह्यात् गूहिषीष्ट घुसीष्ट । श्रिञ् सेवायां श्रीयात् श्रयिषीष्ट । नीयात् नेषीष्ट ॥

अथ अदादिः ॥ विद्यात् ॥

**१४१३ लिङि च** ।४।२।१२३। हनो लुङि लिङि च वधो भवति ॥ वध्यात् ॥ अश्विश्रीतीट् । आवधिषीष्ट । अस्तेर्भूः । भूयात् । मृज्यात् ।

---

१ असुब्धातोः सम्बन्धिनि तङाने सति । असुबतङान इति किं? सञ्जिगमिषिता । अधिजिगमिषिता । प्रस्नवितुं प्रस्नवितव्यम् । असुब्ग्रहणं किं? जिगमिषिञ्रियते प्रस्नविञ्रियते ॥ असुब्ग्रहणात्तङानपरपरत्वेऽपि तङानभावमात्रे प्रतिषेधः । सङ्गंसीष्ट ॥

२ आप्लृ व्याप्तौ । टुवपी बीजसन्ताने । लिपि उपदेहे । लुप्लृञ् च्छेदने । क्षिप प्ररणे । च्छुप स्पर्शने । सृप्लृ गतौ । मिष्वप् शये । तिपृ रक्षणे । शपि आक्रोशे । तपि दाहे ॥

३ रञ्जी रागे । भञ्जो अवमर्दने । षञ्ज सङ्गे । ष्वञ्ज परिष्वङ्गे ।

उच्यात् । रुद्यात् । सुप्यात् । अन्यात् श्वस्यात् । जक्ष्यात् । जागुः कितीत्यर् जागर्यात् । अस्सन्नुण्व्न इत्यातो लुक् दरिद्यात् । चकास्यात् । शिष्यात् । उश्यात् । रूयात् । अश्विश्रीतीट् संक्षणविषीष्ट । स्नूयात् । ईयात् । सम्पूर्वत्वे ॥

**१४१४ ल्यतेरित्** ।४।२।६। उपसर्गादिणः क्ङिति यादौ लादेशे इद् भवति ॥ दीर्घापवादः समियात् । पा रक्षणे पायात् । मा माने मेयात् । ख्यासीष्ट । चक्षिषीष्ट । ईशिषीष्ट । षूङौ प्राणिगर्भविमोचने सोषीष्ट । सविषीष्टि । अध्येषीष्ट । द्विष्यात् ॥

**१४१५ शिशुद्धित्विकृपिवितुदोः षः** ।४।२।१८६। श्यादिपूर्वात् षान्तादेकाचो धातोर्वलादेरिड् न भवति ॥ द्विक्षीष्ट । दुही प्रपूरणे दुह्यात् धुक्षीष्ट । लिह्यात् लिक्षीष्ट । ऊर्णुञ् आच्छादने । अनेकाच्त्वादिट् ॥

**१४१६ वोर्णोः** ।४।१।१४६। ऊर्णोतेरिडादौ ङिद्वद् वा भवति ॥ उव् ऊर्णुविषीष्ट । ऊर्णविषीष्ट । अथ ह्वादिः ॥ अर्यात् । हेयात् । निज्यात् । अस्मस्मिति नेट् । निक्षीष्ट । विष्यात् । शिशुद्वीति नेट् विक्षीष्ट ॥ अथ दिवादिः ॥ व्यध ताडने वशि व्यचीति यञ इक् । विध्यात् । सेयात् । देयात् । जनिषीष्ट ॥ पदि गतौ । अक्षुन्विति नेट् । पत्सीष्ट ॥ विदि सत्तायां । शक्प्रच्छीति नेट् । वित्सीष्ट ॥ खिदि दैन्ये । खित्सीष्ट ॥ युधि सम्प्रहारे । बन्नासेति नेट् युत्सीष्ट ॥ बुधि मनि ज्ञाने । भुत्सीष्ट ॥

**१४१७ स्विद्यन्सिधिक्लिषिपुषः श्यात्** ।४।२।१८८। स्विदादिभ्यः श्यविकरणेभ्यो वलादेरिड् न भवति ॥ मंसीष्ट ॥ डीङ् गतौ । डयिषीष्ट ॥ अथ स्वादिः ॥ स्तृञ् आच्छादने । यङ्च्यक्यात्शे इत्यर् । स्तर्यात् । हल्भ्यां चोरिति वेट् स्तरिषीष्ट स्तृषीष्ट ॥ क्रियात् कृषीष्ट ॥ वृञ्

---

१ शिष विशेषणे । शुष शोषणे । द्विषि अप्रीतौ । त्विषि दीप्तौ । कृश विलेखने । पिष्लृ सञ्चूर्णने । विषृञ् व्याप्तौ । तुष प्रीतौ । दुष वैकृत्ये ॥ लिह्या लिहि आस्वादने ॥

वरणे। व्रियात् वृषीष्ट वरिषीष्ट॥ धूञ् कम्पने। धूयात्। रधादीति वेट् धविषीष्ट धोषीष्ट॥ अथ क्र्यादिः॥ पूङ् पवने। पूयात् अश्विश्रीतीट् पविषीष्ट॥ स्तृञ् च्छादने। स्तीर्यात्। हल्भ्यां चोरिति वेट् स्तरिषीष्ट। इडभावे उरिति किद्वत्त्वादिर् स्तीर्षीष्ट॥ वृञ् वरणे। व्रियात् वरिषीष्ट वृषीष्ट॥ ज्या वयोहानौ। इक्। जीयात्। ज्ञायात् ज्ञेयात्॥ अथ तुदादिः॥ दिशी अतिसर्जने। दिश्यात्॥

**१४१८ दन्दलिविस्पृमृदिरुक्रुरेः शः** ।४।२।१८५। दनादिपूर्वात् शान्तात् एकाचो धातोर्वलादेरिड् न भवति॥ दिक्षीष्ट वशिव्यचीतीक्। भृज्ज्यात् भ्रस्मास्तिति नेट्। भ्रक्षीष्ट॥ प्रच्छ ज्ञीप्सायाम्। इक् पृच्छ्यात् शक्प्रच्छीति नेट् पृक्षीष्ट॥ विश प्रवेशने। विश्यात्। निपूर्वत्वे दन्दलीतीड् न भवति। निविक्षीष्ट। वृश्च्यात्। व्यच व्याजीकरणे। इक्। विच्यात्। कुङ् कूङ् शब्दे॥

**१४१९ गाङ्कुटादिभ्योऽञ्णिन्ङित्** ।४।१।१४४। गाङादेशस्य कुटादीनां च अञ्णिति प्रत्यये ङिद्वद् भवति॥ कुषीष्ट इत्युव् कुविषीष्ट॥ गुरैङ् उद्यमने। गुरिषीष्ट॥ ओविजैङ् भयचलनयोः। विजिषीष्ट॥ रभि राभस्ये॥

**१४२० यरेलाद् भः** ।४।२।१८३। यादिपूर्वाद् भान्तादेकाचो धातोर्वलादेरिड् न भवति॥ रप्सीष्ट॥ डुलभिष् प्राप्तौ। लप्सीष्ट॥ अथ तनादिः॥ क्षणिषीष्ट॥ अथ रुधादिः। विदि विचारणे। शक्प्रच्छीति नेट्। वित्सीष्ट॥ अथ चुरादिः। स्फोट्यात् युषीष्ट॥ अथ युजादिः। मृषी तितिक्षायां। मृष्यात् मर्षिषीष्ट॥ तपी दाहे। तप्यात् तप्सीष्ट॥ धूञ् कम्पने।

---

१ गाङिति ङकारः किं? कै गै रै शब्दे गाता। अनभिज्ञानाद्याख्यानादेशङकारस्यानन्यार्थत्वादच इत्यधिकाराद्वा न गाङ् गताविलस्य ग्रहणं (तस्यापि ग्रहणमित्येके) किन्तु 'लुङ्लङ्णौ सन्ङ वा' इति सूत्रेण इङ् अध्ययने इत्यस्य धातोः गाङादेशस्य॥

२ यभ जभ मैथुने। रभि राभस्ये। डुलभिष् प्राप्तौ॥

धून्यात् णिजभावपक्षे धूयात् । इत्यादीति वेट् धविषीष्ट धोषीष्ट ॥ प्रीञ् तर्पणे । प्रीण्यात् प्रीयात् प्रेषीष्ट ॥

लिटि । स्पर्धि सङ्घर्षे । द्विः ॥

१४२१ लुक् स्वयि ।४।१।८१। द्विर्भावे पूर्वस्य स्वयि परे पूर्वहलो लुग् भवति ॥ शेषं प्राग्वत् ॥ पस्पर्धे ॥ बाधृङ् लोटने । बबाधे ॥ अशटीति नैत् ददवे । जहदे ॥ ष्वदि ष्वर्दि स्वादि आस्वादने । नैत् । सस्वदे ॥ अकुङ् लक्षणे । उदित इति नम् नङ् आनङ्के ॥ ऋजि गतिस्थानार्जनोर्जनेषु । आनृजे ॥ त्रपौषि लज्जायां । त्रप्फलीत्येत् त्रेपे । पनायाञ्चकार पेने । पणायाञ्चकार पेणे । कामयाञ्चक्रे चकमे ॥ अयि गतौ । अयाञ्चक्रे ॥ दयि दानगतिहिंसादानरक्षणेषु दयाञ्चक्रे । ऊर्यांचक्रे । ईक्षि दर्शने । ईक्षांचक्रे ॥ कासृङ् शब्दकुत्सायां कासांचक्रे ॥ देङ् रक्षणे ॥

१४२२ देर्लिटीगिः ।४।१।६९। देङोऽचो लिटि इगिर्भवति न च द्विः ॥ दिग्ये दिग्याते दिग्यिरे ॥ सन्सूङ् प्रमादे । असंयोगादित्यकित्त्वान्न नलुक् सस्रंसे ॥ द्युति दीप्तौ ॥

१४२३ द्युतेरिः ।४।१।७८। द्युतेर्द्विर्भावे पूर्वस्योतः इद् भवति ॥ दिद्युते ॥ व्यथिष् भयचलनयोः । भूत्र्यथेति इत् विव्यथे ॥ नट अवस्पन्दने । ननाट । त्रप्फलीत्येत् । नेटतुः नेटुः इत्यादि ॥

१४२४ हल्भ्यामृदर्तेः ।४।२।१३। हल्द्वयादृदन्तस्य अर्तेश्च लिट्यकर्भवति ॥ सस्मार सस्मरतुः सस्मरुः । सस्मरिथ सस्मर्थ इत्यादि ॥ श्रा पाके । शश्रौ शश्रतुः शश्रुः । नित्यानिट्तास इति वेट् शश्राथ शश्रिथेत्यादि ॥ फण गतौ ॥

१४२५ फणादिजृत्रसभ्रम्वमां वा ।४।१।६४। फणादेर्जादेश्चाच एद्वा भवति इत्यादावपिति च लिटि परे न च द्विः ॥ पफाण फेणतुः पफणतुः फेणुः पफणुरित्यादि । स्वन शब्दे । सस्वान स्वेनतुः सस्वनतुः ॥

---

१ ऋतो हल्भ्यामिति विशेषणात् अर्तिग्रहणं तकारस्तद्दनिर्देशश्चोत्तरार्थः ॥

राजृ॒ दीप्तौ रराज रेजतुः रराजतुः । रेजे रराजे रेजाते रराजाते । भ्राजि दीप्तौ । भ्रेजे बभ्राजे इति फणादिः ॥ टुवमु उद्गिरणे । फणादीति वेत् । ववाम वेमतुः ववमतुः ॥

**१४२६ जेर्लिट्सनि** ।४।१।७२। जेर्लिट्सनोः द्विर्भावे पूर्वात्परस्य जस्य कुर्भवति ॥ जिगाय जिग्यतुः जिग्युः । विजिग्ये ॥ धेट आत्यौश् । दधौ दधतुः दधुः । पपौ । हल्भ्यामित्यट् आर आरतुः आरुः ॥ तॄ प्लवनतरणयोः ॥ त्रप्फलीत्येत् । ततार तेरतुः ॥ ऋतीयांचक्रे । आनर्त आनृततुः आनृतुः ॥ चिकित्सांचकार चिकेत ॥ असंयोगादित्यकित्वान्न नलुक् । ससञ्ज ससञ्जतुः ससञ्जुः । अत्वत्त्वाद्वेट् । ससङ्क्थ ससञ्जिथ ॥ गोपायांचकार जुगोप । धूपायाञ्चकार दुधूप ॥ जगाम । अपिति गंहन्नित्यतो लुक् । जग्मतुः जग्मुः । नित्यानिडिति वेट् जगमिथ जगन्थ जग्मथुः जग्म । जगाम जगम जग्मिव जग्मिम ॥ सञ्जग्मे सञ्जग्माते सञ्जग्मिरे ॥ बभ्राम फणादीति वेत् भ्रेमतुः बभ्रमतुः भ्रेमुः । ईर्ष्यांचकार । दल त्रिफला विशरणे । ददाल देलतुः ॥ त्रप्फलीत्येत् पफाल पेलतुः । शसु हिंसायाम् । अन्नटिति नैत् शशास शशसतुः ॥ उषु दाहे । उवू उवोष ऊषतुः

**१४२७ जाग्रुषसमिन्धोवा** ।१।४।८४। जाग्रादिभ्यो लिट आम् वा भवति कृभ्वास्लिट् चानुप्रयुज्यते ॥ ओषाञ्चकार ओषाम्बभूव ओषामास ॥ ददर्श ददृशतुः ददृशुः । थे नित्यानिडिति वेट् ॥

**१४२८ सृजदृशोऽम् जल्यकि** ।४।२।१९४। सृजदृशोरकिति जल्यम् भवति ॥ म इत् यण् । दद्रष्ठ । ददर्शिथ ददृशथुः ददृश । ददर्श ददृशिव ददृशिम ॥ संददृशे ॥ अर्ह पूजायाम् । आनर्ह ॥ टु ओश्वि गतिवृद्ध्योः ॥

---

१ आह निद्राक्षवे उषु दाहे । सम्पूर्व मिइन्धि दीप्तौ । सम् ग्रहणं किं इन्धाञ्चक्रे । केचिदिन्धिरुपसर्गेणामङ्गलभूत इत्याहुः । तेषां सम्ग्रहणमुपसर्गोपलक्षणार्थं द्रष्टव्यम् ॥

**१४२९ लिंड्याङि** ।४।१।१२४। श्वेर्लिटि यङि च साचो यञ इग्वा भवति ॥ शुशाव शुशुवतुः शुशुवुः । सेट्तास्त्वादिट् शुशविथ । इगभावे ॥

**१४३० न** ।४।१।१२५। श्वेर्लिड्यङोः परतो द्विर्भावे पूर्वस्य साचो यञ इग् न भवति ॥ शिश्वाय शिश्वियतुः शिश्वियुः । शिश्वयिथ ॥ इग्यञ इतीक् । उवास । इकि दीर्घः ऊषतुः ऊषुः । शक्प्रच्छीत्यनिट्त्वात् वेट् । उवसिथ उवस्थ ॥ उवाद ऊदतुः ऊदुः । उवदिथ ॥ इयाज ईजतुः ईजुः इयजिथ । इयष्ठ । ईजे ॥ उवाप ऊपतुः ऊपुः । उवपिथ उवप्थ । ऊपे ऊपाते ॥ उवाह ऊहतुः ऊहुः । उवविथ । इडभावे । ढत्वधत्वादि ॥

**१४३१ सहिवहोऽस्यौः** ।१।१।८१। सहिवहोर्ढ्लुचि पूर्वस्यात ओद् भवति ॥ उवोढ । ऊहे ऊहाते ॥

**१४३२ वेर्वय्** ।४।२।१२१। वेञो लिटि वय् वा भवति ॥

**१४३३ न वः** ।४।१।१०९। वेञादेशस्य वयो यञः लिटि परे इगादेशो न भवति ॥

**१४३४ वा** ।४।१।११०। वेञादेशस्य वयो यञ इग्वा न भवति ॥ पक्षे येन सहेक् उव् । उवाय ऊयतुः ऊयुः । ऊवतुः ऊवुः । उवयिथ ॥

**१४३५ प्ये च** ।४।१।१११। वेञः प्ये लिटि च इग् न भवति ॥ आत् । ववौ ववतुः । ऊये ऊयाते । ऊवे ऊवाते । ववे ववाते ॥

**१४३६ व्योऽलिटि** ।४।१।१८१। व्येञ एचः अशि आद्भवति न लिटि ॥ विव्याय । इव्यादीतीक् । विव्यतुः विव्युः । अवृव्यात्तेरितीट् । विव्ययिथ । विव्ये विव्याते । ह्वेञ् स्पर्धायाम् ॥

**१४३७ ह्वयक्तौ ह्वः** ।४।१।१२१। द्विरुक्तनिमित्ते प्रत्यये ह्वेञः साचो यञ इग् भवति ॥ जुहाव जुहुवतुः जुहुवुः । जुहविथ जुहोथ ।

---

१ 'इग्यमः साचोऽर्योज्यम्' इत्यस्यापवादः । विकल्पः पिति सावकाश इति अपिति परत्वात्किद्भावे न नित्यमेवेक् स्यात् पूर्वस्येति प्रतिषेधात् शास्वसीति षिः स्यादिति पूर्वस्मिन्नेव यञ इग्भवति पश्चात् द्विः ॥

जुहुवे जुहुवाते ॥ भजी सेवायां । बभाज । त्रफ्फलीत्येत् भेजतुः । भेजे । संयोगान्तत्वादकित्त्वेन न लुक् । ररञ्ज ररञ्जे । चखान । गंहन्नित्यतो लुक्। चख्नतुः चख्नुः । चखनिथ । चख्ने । दीदांसांचकार दीदांसांचक्रे । शीशांसांचकार शीशांसांचक्रे । गुहौञ् संवरणे । औदित् । जुगूह जुगुहतुः जुगुहुः । जुगुहे । शिश्राय शिश्रियतुः । शिश्रिये शिश्रियाते । प्रत्ययेऽसुधीण इति यञ् । निनाय निन्यतुः निन्ये ॥ अथ अदादिः ॥ विवेद ॥

**१४३८ विदात् कित्** ।१।४।८६। वेत्तेर्लिटः किद्वदाम् वा भवति कृभ्वस्लिट् चानुप्रयुज्यते ॥ विदात् किद्वचनादामि स्थानित्वेन लिट्कार्यं द्विर्वचनादि न भवति । विदाञ्चकार ॥

**१४३९ हिंन्नोऽङ्के कुः पूर्वात्** ।४।१।७१। हिन्नोर्द्विर्भावे पूर्वस्मात् परस्य कुर्भवति न ङे ॥ जघान । गंहन्नित्यतो लुक् । जघ्नतुः जघ्नुः । जघनिथ जघन्थ । आजघ्ने ॥ अस्तेर्भूरादेशः । बभूव बभूवतुः । ममार्ज ममार्जतुः ममृजतुः ममार्जुः ममृजुः । ममार्जिथ ॥ श्व्यादीतीक् । उवाच ऊचतुः ऊचुः । उवचिथ उवक्थ ॥ रुरोद सुष्वाप । इक् सुषुपतु. सुषुपुः । सुष्वपिथ सुष्वप्थ ॥ आन अनतुः । शश्वास शश्वसतुः । जजक्ष जजक्षतुः । जजागार जजागरतुः जजागरुः । जजागरिथ ॥ जागुषसमिन्धो वा इति वाऽम् । जागरांचकार । दरिद्रांचकार । चकासांचकार ॥ शशास शशासतुः शशासुः । शशासिथ ॥ उवाश । वशीतीक् ।

---

१ विदाम्बभूव । विदामास । आम्येङ् प्राप्नोति इति किद्वचनम् ॥ विदात्किदिति वचनात्पूर्वयोगयोर्विभागाच्चामि स्थानिवद्भावेन लिट्कार्यं किद्वद्भावश्च न भवति ॥ अकारनिर्देशः अदाद्यर्थः ॥

२ ङवर्जिते प्रत्यये परतो यौ हि हन् इत्येतौ धातू तयोर्द्विर्भावे पूर्वस्मात्परयोरादेः कु. कवर्गादेशो भवति ॥ अङे इति किं? प्राजीहयत् । अङि द्विर्वचननिमित्ते प्रत्ययेऽनन्तरस्य विज्ञानादिह न भवति हननियतुमिच्छति जिहननियिषति । ङपर्युदासाद्गुणि व्यवधाने भवति प्रजिघाययिषति । पूर्वादिति किं? परस्य यथा स्यात्तस्मादादेरिति आदेभवति ॥ "यङ्घ्नः स्वेऽङ्के वाङः ।१।४।५८।" आङ्पूर्वाद्यमेर्हन्तेश्च तस्तङो भवन्ति ॥ आजघ्ने ॥

**१४२९ लिंय्यङि** ।४।१।१२४। श्वेर्लिटि यङि च साचो यञ इग्वा भवति ॥ शुशाव शुशुवतुः शुशुवुः । सेट्तास्त्वादिट् शुशविथ । इगभावे ॥

**१४३० न** ।४।१।१२५। श्वेर्लिड्यङोः परतो द्विर्भावे पूर्वस्य साचो यञ इग् न भवति ॥ शिश्वाय शिश्वियतुः शिश्वियुः । शिश्वयिथ ॥ इग्यञ इतीक् । उवास । इकि दीर्घः ऊषतुः ऊषुः । शकृप्रच्छीत्यनिट्त्वात् वेट् । उवसिथ उवस्थ ॥ उवाद ऊदतुः ऊदुः । उवदिथ ॥ इयाज ईजतुः ईजुः इयजिथ । इयष्ठ । ईजे ॥ उवाप ऊपतुः ऊपुः । उवपिथ उवप्थ । ऊपे ऊपाते ॥ उवाह ऊहतुः ऊहुः । उवविथ । इडभावे । ढत्वधत्वादि ॥

**१४३१ सहिवहोऽस्यौः** ।१।१।८१। सहिवहोर्ढ्लुचि पूर्वस्यात ओद् भवति ॥ उवोढ । ऊहे ऊहाते ॥

**१४३२ वेर्वय्** ।४।२।१२१। वेञो लिटि वय् वा भवति ॥

**१४३३ न वः** ।४।१।१०९। वेञादेशस्य वयो यञः लिटि परे इगादेशो न भवति ॥

**१४३४ वा** ।४।१।११०। वेञादेशस्य वयो यञ इग्वा न भवति ॥ पक्षे येन सहेक् उव् । उवाय ऊयतुः ऊयुः । ऊवतुः ऊवुः । उवयिथ ॥

**१४३५ प्ये च** ।४।१।१११। वेञः प्ये लिटि च इग् न भवति ॥ आत् । ववौ ववतुः । ऊये ऊयाते । ऊवे ऊवाते । ववे ववाते ॥

**१४३६ व्योऽलिटि** ।४।१।१८१। व्येञ एचः अशि आद्भवति न लिटि ॥ विव्याय । श्व्यादीतीक् । विव्यतुः विव्युः । अवृव्यात्तेरितीट् । विव्ययिथ । विव्ये विव्याते । ह्वेञ् स्पर्धायाम् ॥

**१४३७ व्युक्तौ ह्वः** ।४।१।१२१। द्विरुक्तनिमित्ते प्रत्यये ह्वेञः साचो यञ इग् भवति ॥ जुहाव जुहुवतुः जुहुवुः । जुहविथ जुहोथ ।

---

१ 'इग्यञः साचोऽर्याज्यम्' इत्यस्यापवादः । विकल्पः पिति सावकाश इति अपिति परत्वात्किद्भावे न नित्यमेवेक् स्यात् पूर्वस्येति प्रतिषेधात् शास्वसीति षिः स्यादिति पूर्वस्मिन्नेव यञ इग्भवति पश्चात् द्विः ॥

जुहुवे जुहुवाते ॥ भजी सेवायां । बभाज । त्रप्फलीत्येत् भेजतुः । भेजे । संयोगान्तत्वादकित्त्वेन न लुक् । ररञ्ज ररञ्जे । चखान । गंहन्नित्यतो लुक्। चख्नतुः चख्नुः । चखनिथ । चख्ने । दीदांसांचकार दीदांसांचक्रे । शीशांसांचकार शीशांसांचक्रे । गुहौञ् संवरणे । औदित् । जुगूह जुगुहतुः जुगुहुः । जुगुहे । शिश्राय शिश्रियतुः । शिश्रिये शिश्रियाते । प्रत्ययेऽसुधीण इति यञ् । निनाय निन्यतुः निन्ये ॥ अथ अदादिः ॥ विवेद ॥

**१४३८ विदात् कित्** ।१।४।८६। वेत्तेर्लिटः किद्वदाम् वा भवति कृभ्वस्लिट् चानुप्रयुज्यते ॥ विदात् किद्वचनादामि स्थानित्वेन लिट्कार्यं द्विर्वचनादि न भवति । विदाञ्चकार ॥

**१४३९ हिन्नोऽङे कुः पूर्वात्** ।४।१।७१। हिन्नोर्द्विर्भावे पूर्वस्मात् परस्य कुर्भवति न ङे ॥ जघान । गंहन्नित्यतो लुक् । जघ्नतुः जघ्नुः । जघनिथ जघन्थ । आजघ्ने ॥ अस्तेर्भूरादेशः । बभूव बभूवतुः । ममार्ज ममार्जतुः ममृजतुः ममार्जुः ममृजुः । ममार्जिथ ॥ श्व्यादीतीक् । उवाच ऊचतुः ऊचुः । उवचिथ उवक्थ ॥ रुरोद सुष्वाप । इक् सुषुपतु, सुषुपुः । सुष्वपिथ सुष्वप्थ ॥ आन अनतुः । शश्वास शश्वसतुः । जजक्ष जजक्षतुः । जजागार जजागरतुः जजागरुः । जजागरिथ ॥ जागुषसमिन्धो वा इति वाऽम् । जागरांचकार । दरिद्रांचकार । चकासांचकार ॥ शशास शशासतुः शशासुः । शशासिथ ॥ उवाश । वशीतीक् ।

---

१ विदाम्बभूव । विदामास । आम्येङ् प्राप्नोति इति किद्वचनम् ॥ विदात्किदिति वचनात्पूर्वयोगयोर्विभागाच्चामि स्थानिवद्भावेन लिट्कार्यं किद्भावश्च न भवति ॥ अकारनिर्देशः अदाद्यर्थः ॥

२ ङवर्जिते प्रत्यये परतो यौ हि हन् इत्येतौ धातू तयोर्द्विर्भावे पूर्वस्मात्परयोरादेः कुः कवर्गादेशो भवति ॥ अङे इति किं? प्राजीहयत् । अङि द्विर्वचननिमित्ते प्रत्ययेऽनन्तरस्य विज्ञानादिह न भवति हननियतुमिच्छति जिहननियिषति । ङ्यपर्युदासाद्गुणि व्यवधाने भवति प्रजिघाययिषति । पूर्वादिति किं? परस्य यथा स्यात्तस्मादादेरिति आदेर्भवति ॥ "यङ्घ्नः स्वेऽङ्गे चाङः ।१।४।५८।" आङ्पूर्वाद्यमेर्हन्तेश्च लस्तङो भवन्ति ॥ आजघ्ने ॥

ऊशतुः उशुः । उवशिथ ॥ संचुक्ष्णुवे संचुक्ष्णुवाते ॥ सुस्नाव सुस्नुवतुः ॥ नुनाव नुनुवतुः । इय् । इयाय ईयतुः ईयुः । इययिथ इयेथ । इयाय ॥ वी गतिप्रजनकान्त्यसनखादनेषु ॥ विवाय विव्यतुः । ययौ ॥

**१४४० लिटि वा** ।४।२।१२०। चक्षो लिटि ख्शाञ् वा भवति ॥ चख्ये । चचक्षे । ईराञ्चक्रे । ईडाञ्चक्रे । आसाञ्चक्रे । वसि आच्छादने । ववसे । आङः शसूङ् इच्छायाम् । आशशासे । षूङौ प्राणिगर्भविमोचने । सुषुवे । इङ् अध्ययने ॥

**१४४१ गाङ् लिटि** ।४।२।१२७। इङो लिटि गाङ् भवति ॥ ङित् । अधिजगे । अनृच्छूर्णोरिति नाम् । ऊर्णुनाव ऊर्णुनुवतुः । ऊर्णुनुवे ॥ तुष्टाव तुष्टुवतुः तुष्टुवुः । स्तादित्वान्नेट् । तुष्टोथ तुष्टुवे ॥ अथ ह्वादिः॥ भीह्रीति वा श्लुवत् । आम् । विदात् किदिति नियमादन्येभ्योऽकित्त्वादेङः । बिभयांचकार बिभाय ॥ ह्री लज्जायां। जिह्रयाञ्चकार जिह्राय । पपार । आर । जहौ । ममे । बिभराञ्चकार । बिभरांचक्रे । बभार । स्तादित्वान्नेट् बभर्थ । बभ्रे ॥ डुदाञ् दाने । ददौ ददे ॥ अथ दिवादिः । त्रसै उद्वेजने । फणादीति वैत् । तत्रास तत्रसतुः त्रेसतुः ॥ राध वृद्धावेव ॥

**१४४२ लिटीडप्येत्** ।४।१।६२। वधार्थे राधोऽच इडादावपिति च लिटि एद्भवति न च द्विः ॥ अपरराध अपरेधतुः अपरेधुः । अपरेधिथ ॥ अन्यत्र आरराध अरराधतुः ॥ विव्याध । वशीतीक् । विविधतुः ॥ उच समवाये । पित्युव् । उवोच । दीर्घः ऊचतुः ॥ रध हिंसासंराद्ध्योः ॥

**१४४३ रधः** ।४।२।२००। रधोऽजादौ प्रत्यये नम् भवति ॥ ररन्ध ररन्धतुः इत्यादि । जजार । स्कृच्छृत इत्यर् । फणादीति वैत् । जेरतुः जजरतुः ॥ शशौ । गंहन्नित्यतो लुक् श्चुत्वं । जज्ञे । पेदे ॥ प्रीङ् प्रीतौ । अतत्संयोगादिति यत्नभावे इय् । पिप्रिये ॥ अथ स्वादिः ।

१ ऊर्णुनाव 'नबन्द्रा बलीति' रेफं मुक्त्वा तत इति सूत्रेण परोऽचो द्विर्भवति ॥

स्तॄञ् च्छादने। हल्भ्यामित्यइ। तस्तार तस्तरतुः। तस्तरे॥ वृञ् वरणे। ववार वव्रतुः वव्रुः। वव्रे॥ धूञ् कम्पने। दुधाव दुधुवतुः दुधुवुः। रधादीति विकल्पितेट्त्वात् थे नित्यमिट् दुधविथ दुधुवे॥ शुश्राव शुश्रुवतुः शुश्रुवुः। स्रादित्वान्नेट् शुश्रोथ॥ हि गतिवृद्ध्योः। हिनोरिति हस्य घः प्रजिघाय॥ दन्भू दम्भे। ददम्भ॥

**१४४४ दन्भः** ।४।१।६६। दन्भः अपिति लिट्यच एद्भवति न च द्विः न्लुक् च॥ देभतुः देभुः॥

**१४४५ थेवा** ।४।१।६७। दन्भस्थे लिट्येद्वा भवति न च द्विः न्लुक् च॥ देभिथ ददम्भिथ॥ अथ क्र्यादिः तस्तार। स्कृच्छॄत इत्यइ। तस्तरतुः तस्तरुः। सेट्त्वान्नित्यमिट् तस्तरिथ। तस्तरे॥ चकार चकरतुः। चकरे॥ शॄ हिंसायां। शशार॥

**१४४६ शॄदॄप्रां लिटघृ वा** ।४।२।११। श्रादीनां लिटि ऋद्वा भवति॥ पक्षे अइ। शशरतुः शश्रतुः॥ पॄ पालनपूरणयोः। पपार पपरतुः पप्रतुः॥ भॄ भरणे बभार बभरतुः बभरुः। बभरिथ॥ दॄ भये। ददार दद्रतुः ददरतुः॥ ऋ गतौ। आर आरतुः आरुः॥ जिज्यौ। वशि व्यचीतीक् जिज्यतुः। जज्ञौ जज्ञतुः जज्ञुः॥ श्रन्थ विमोचनप्रतिहर्षणयोः। शश्रन्थ॥

**१४४७ श्रन्थग्रन्थो न्लुक् च** ।४।१।६५। अनयोरिडादावपिति च लिट्येद्वा भवति न च द्विः न्लुक् च॥ श्रेथतुः शश्रन्थतुः। ग्रन्थ सन्दर्भे। जग्रन्थ ग्रेथतुः जग्रन्थतुः॥ अथ तुदादिः॥

**१४४८ भ्रस्ज्रसोऽर्** ।४।२।९५। भ्रसृजोरसः अर्वा भवति ल्याश्चि परतः॥ बभर्ज्ज॥ बभर्ज्जतुः। असंयोगादित्यकित्त्वान्नेक्। बभ्रज्ज बभ्रज्जतुः। बभर्ज्जे बभ्रज्जे॥ उज्झ उत्सर्गे। उज्झाञ्चकार॥ एङि इय् इयेष दीर्घः ईषतुः॥ व्यच व्याजीकरणे। विव्याच वशीतीक् विविचतुः॥

**१४४९ स्वञ्जेर्वा** ।४।१।१४९। स्वञ्जेर्लिटि किद्वद् भवति वा॥ सस्वञ्जे॥ अथ रुधादिः॥ ञि इन्धैङ् दीप्तौ। किद्वत्त्वान्नलुक्। ईधे

ईधाते । सम्पूर्वत्वे जाग्रुषेति वाम् । समिन्धांचक्रे ॥ अनूञ गतिव्यक्तिम्रक्षणेषु आनञ्ज आनञ्जतुः ॥ णिजन्तानामाम् । प्राग्वत् प्रक्रिया । लुण्टयांचकार इत्यादि सर्वं योज्यम् ॥

लुङि अस्पर्धिष्ट । अपनायीत् । अपनिष्ट । अपणायीत् अपाणिष्ट । औदित्त्वाद्वेट् अक्षमिष्ट । अक्षंस्त । कंश्रीति ङः द्वित्वादि अचकमत ॥ ओप्यायैङ् वृद्धौ ॥

**१४५० दीप्पूर्जनबुधतायृप्यायस्ते ञिः** ।४।३।१५। दीपादिभ्यः कर्त्तरि लुङि ते परे ञिर्वा भवति ॥ ञ इत् । ञेरिति तस्य लुक् पक्षे सिः । अप्यायि अप्यायिष्ट अप्यायिषातां ॥ तायृञ् सन्तानपालनयोः वा ञिः । अतायि अतायिष्ट ॥ औदित्त्वाद्वेट् अगाढ अघाक्षाताम् अगाहिष्ट अगाहिषातां । शक्प्रच्छीति नेट् अस्मेष्ट । अतङि सर्तीत्यङ् अद्युतत् अद्योतिष्ट । अशुभत् अशोभिष्ट । अरुचत् अरोचिष्ट अश्वितत् अश्वेतिष्ट । अमिदत् अमेदिष्ट । अस्विदत् अस्वेदिष्ट । अघुटत् अघोटिष्ट । अलुटत् अलोटिष्ट । अलुठत् अलोठिष्ट । अक्षुभत् अक्षोभिष्ट । अस्रभत् अस्रम्भिष्ट । अस्रसत् अस्रंसिष्ट । अभ्रशत् अभ्रंशिष्ट । अध्वसत् अध्वंसिष्ट । अवृतत् अवर्तिष्ट । अवृधत् अवर्धिष्ट । अशृधत् अशर्धिष्ट । अस्यदत् अस्यान्दिष्ट । अक्लृपत् अकल्पिष्ट ॥ ज्वर रोगे ॥

**१४५१ वद्व्रज्ल्रोऽतः** ।४।२।६८। वद्व्रजोर्लरान्तस्य च धातोरतः अतङानपरे सौ आद्भवति ॥ अज्वारीत् । नट नृत्तौ ॥

**१४५२ वोर्णुञ्हलादेर्लघोरिटि** ।४।२।६९। ऊर्णुञः हलादिहलन्तस्य च धातोर्लघोरतः इडादावतङानपरे सौ आरैज्वा भवति ॥ अनाटीत् अनाटिष्टाम् । अनटीत् अनटिष्टां ॥ कसे हसने । न क्षणिति नारैच् । अकसीत् ॥ ज्वल दीप्तौ वद्व्रजिति नित्यमात् अज्वालीत् ॥ पत्लृ गतौ । आङि

१ वद् व्रज् इत्येतयोर्लकारान्तस्य रेफान्तस्य च धातोरकारस्य अतङानपरे सौ परतः आकारादेशो भवति । वद्व्रज्ल्र इति किं? मा निरदीत् । अत इति किं? न्यमीलत् । अवभ्रीत् वभ्र गतौ इत्यत्रातः सेश्चानेकहल्व्यवधानमिति न भवति ॥

श्वयत्यसिति षम् अमावितौ अपप्तत् ॥ शकृमच्छीति नेट् । अस्मार्षीत् ॥

**१४५३ यरंनमातां सक् च** ।४।२।७२। यम्रम्नम्भ्यः आदन्तेभ्यः च परस्य सेरिड् भवति अतङाने परतः सक् चैतेषाम् ॥ ईटीट इति सेर्लुक् अश्रासीत् अश्रासिष्टाम् । अरंसीत् अरंस्त ॥ बुधी बोधने । बन्नासेति नेट् ऐच् । अभौत्सीत् अबौद्धां । तङि वा ञिः । अबोधि अबुद्ध अभुत्सातां । न क्षणिति नारैच् अवमीत् । सर्त्तीत्यङ् । असदत् अशदत् ॥ द्रु स्रु गतौ । कंश्रीति कः । अदुद्रुवत् असुस्रुवत् ॥

**१४५४ धेट्श्वेर्ङ्वा** ।४।२।८। धेट्श्विभ्यां कर्त्तरि लुङि ङो वा भवति ॥ ङित्त्वादिटि चातो लुक् । अदधत् अदधतां ॥

**१४५५ घ्राधेट्शाच्छासो वा** ।४।२।७४। घ्रादिभ्यस्सेरतङाने श्लुग्वा भवति ॥ अश्लुचीट्सकौ । अधात् अधाताम् । अधासीत् अधासिष्टां ॥ घुपेति सेः श्लुक् । अपात् अपातां ॥ घ्राधेङिति वा श्लुक् । अघ्रात् अघ्रासीत् । अध्मासीत् ॥ सेः श्लुक् । अस्थात् ॥ आत इत् । प्रास्थित प्रास्थिषाताम् । अघ्रासीत् । अदात् ॥ दैव् शोधने ॥ अदासीत् ॥ सृ गतौ । सर्त्तीत्यङ् ॥

**१४५६ ऋदृशोऽङ्** ।४।२।९। ऋवर्णान्तानां दृशेश्चेकः अङ्च भवति ॥ असरत् । असरतां ॥

**१४५७ लिंप्सिज्ह्वार्त्तेः** ।४।२।१३। लिपादीनां कर्त्तरि लुङ्यतङि अङ् भवति ॥ अर् । आरत् आरतां । सेट्त्वात् सिलुक् अतारीत् अतारिष्टाम् । आर्त्तीयिष्ट आर्त्तीत् ॥ ज्युतृ भासने ऋदित्त्वाद्वाङ् । अज्युतत्

१ तिप्सिपोश्च इत्याकारो न भवतीति विशेषः । अतङान इति किं? अयँस्त अरँस्त दण्डः स्वयमेव । कर्मण्यङ्वादीनां कर्मवल्लीति वचनात् कर्मकर्तरीति कर्मभावे तङ् । अमास्त धान्यं ॥ बहुवचनं लाक्षणिकार्थम् । अग्लासिष्टाम् । अग्लासिषुः ॥

२ शो तनूकरणे । छो छेदने । षो अन्तकर्मणि । धेटः पूर्वेण नित्ये प्राप्ते शेषेभ्योऽप्राप्ते विकल्पः ।

३ लिप् सिच् ह्वा अर्ति इत्येतेभ्यो धातुभ्यः कर्तरि लुचि परे मध्ये अङ् प्रत्ययो भवति ॥ अलिपत् । असिचत् । आह्वात् । आरत् । योगविभाग उत्तरार्थः ॥ 'आरैजायचः' इत्येतावता आरत् इति सिद्धौ पुनर्वचनं मा भवान् अरत् इत्यत्र समयोजनम्

अज्योतीत् ॥ ऋदित्त्वाद्वाङ् । अस्कदत् अस्कन्दीत् ॥ व्रज गतौ । वद्व्रजि- त्यात् । प्राव्राजीत् ॥ रभसेति नेट् । असाङ्क्षीत् असाङ्क्ताम् ॥ अगोपायीत् अगोपीत् । अधूपायीत् अधूपीत् । लृदित्त्वादङ् । अगमत् ॥ णम प्रह्वत्वे शब्दे । यरमितीट्सकौ । अनंसीन् अनंसीष्टाम् ॥ अयंसीत् । न क्षणिति नारैच् । अशसीत् ॥ कृषि विलेखने ॥

**१४५८ वृपादेर्वाऽ सृपः** ।४।३।३। वृपादिभ्यो लुङि सिर्वा भवति न सृपः ॥ शिशुद्विर्त्वाति नेट् ॥

**१४५९ वृप्तृप्सृप्कृषिस्पृशमृशो वा** ।४।२।१९५। वृपादीनाम- किति जल्यम् वा भवति ॥ अक्राक्षीत् अकार्क्षीत् ॥ पक्षे ॥

**१४६० इकः शलोऽ दृशः क्सो नेट् चेत्** ।४।३।४। इकः परो यः शल् तदन्ताद्धातोर्लुङि क्सो भवति नेट् चेत् न दृशः ॥ अकृक्षत् ॥ ऋदित्त्वाद्वाङ् । पक्षे सौ सृज्दृश इत्यम् । अदर्शत् अद्राक्षीत् अद्राष्टां ॥ दह भस्मीकरणे । दादेरिति हस्य घः । अधाक्षीत् अदाग्धां ॥ मिह सेचने । क्सः । अमिक्षत् ॥ धेट्श्वेर्वेति ङे अशिश्वियत् । पक्षे ॥

**१४६१ स्तन्भ्रुम्रुचुग्रुचुग्लुचुग्लुञ्चुश्विब्जोऽङ्** ।४।३।९। एतेभ्यः कर्तरि लुङ्यङ् वा भवति ॥ श्वयत्यासिति इतोऽत् अलुक् । अश्वत् पक्षे सौ न क्षणिति नारैच् । अश्वयीत् ॥ शकृप्रच्छीति नेट् । तस्सीति सस्य तः । अवात्सीत् अवात्ताम् अवात्सुः ॥ वद्व्रजित्यात् । अवादीत् ॥ अयाक्षीत् । अयष्ट । अवाप्सीत् । अवप्त । अवाक्षीत् ॥ सिलुचि ढलुगोत्वं च अवोढ अवाक्षताम् । अवासीत् अवास्त अव्यासीत् अव्यास्त ॥ लिप्सी- त्यङ् आतो लुक् आह्वत् ॥

**१४६२ तङि वा** ।४।३।१४। लिपादिभ्यः कर्त्तरि लुङि तङि अङ् वा भवति ॥ पक्षे सिः आह्वत आह्वास्त । अदीदांसीत् अदीदांसिष्ट । अशी- शांसीत् अशीशांसिष्ट । ओत ऊत् अगूहीत् अगूहिष्ट । इडभावे । क्सः । अघुक्षत् ॥

१४६३ दुहदिहलिहगुहस्तङि लुवि श्लुग्वा ।४।२।५५। दुहादिभ्यः क्सस्य तवर्गादौ वादौ च तङि श्लुग्वा भवति ॥ अगूढ । अघुक्षत ॥

१४६४ क्सस्याचि ।४।२।५१। क्सस्याजादौ लुग्भवति ॥ अघुक्षाताम् अघुक्षत । अगूढाः । अघुक्षथाः अघुक्षाथाम् अघूढ्वम् अघुक्षध्वम्। अघुक्षि अगुह्वहि अघुक्षावहि अघुक्षामहि ॥ कंश्रीति ङः । आशिश्रियत् अशिश्रियत । अनैषीत् अनेष्ट ॥ अथ अदादिः । अवेदीत् । समवित्त समवित्साताम् ॥ लिङि चेति वधादेशः । अल्लुचः स्थानित्वादनुपान्त्यत्वे नारैच्। अनेकाच्त्वादिट् च अवधीत् ॥

१४६५ घ्नो वधस्तङि लुङि ।४।२।१२२। हनस्तङि लुङि वधो वा भवति ॥ आवधिष्ट । पक्षे सिः ॥

१४६६ घ्नः ।४।२।२४५। हनस्तङि सादौ सौ किद्वद् भवति ॥ हन्मन्येति न लुक् । आहत आहसाताम् । अभूत ॥ औदित्त्वाद्वेट् अमार्जीत् अमार्क्षीत् ॥ अङि । श्वयत्यासित्युम् । अवोचत ॥ ऋदित्वाद्वाङ् अरुदत् अरोदित् ॥ अस्वाप्सीत अस्वाप्ताम् । आनीत् । अश्वसीत् अश्वासीत् । अजक्षीत् ॥ अनेकाचत्वादिट् अजागरीत् ॥

१४६७ लुङि लुग् दरिद्रः ।४।२।९६। दरिद्रो लुङि लुग्वा भवति ॥ पक्षे सक् । अदरिद्रीत् अदरिद्रासीत ॥ अचकासीत् । सर्त्तिशास्तीत्यङ् शास इति इत् अशिषत् । वोर्णुञिति वाऽन् । अवशीत् अवाशीत् ॥ रुषट्कत्वादिट् । ऐच् अरावीत् । अक्ष्णावीत् । समक्ष्णविष्ठ । अस्नावीत् । अनावीत् अयावीत ॥

१४६८ गैत्योः ।४।२।१२४। इणिकोर्लुङि गा भवति ॥ घुपेति सेः श्लुक् । अगात् अगाताम् अगुः । अध्यगात् । सक् अयासीत् ॥ ख्या प्रकथने । वक्तीत्यङ् । आतो लुक् । आख्यत् ख्शादेशे अङ् आख्यत ॥ ऐरिष्ट।

१ दुहादेरिति किं? अधुक्षत । अदीक्षत । लुवीति किं? अघुक्षामहि ॥ क्सस्याचीत्यतो लुचि वर्तमानायां श्लुग्वचनम् पूर्वार्थम् ॥

ऐडिष्ट । ऐशिष्ट । आसिष्ट । अवासिष्ट । आशासिष्ट । असविष्ट । असोष्ट ॥

**१४६९ लुङ्लृङणौ सनङे वा** ।४।२।१२८। इङो लुङ्लृङोः सनङपरे णौ च गाङ् वा भवति ॥ गाङ्कुटामिति ङिद्वद्भावे ईहल्यप्ये इतीत्वे अध्यगीष्ट । पक्षे ऐत्त्र् अध्यैष्ट ॥ क्सः । अद्विक्षत् । अद्विक्षत ॥ अधुक्षत् अदुग्ध अधुक्षत अधुक्षाताम् अधुक्षत । अदुग्धाः अधुक्षथाः अधुक्षाथाम् अधुग्ध्वम् अधुक्षध्वम् । अधुक्षि अदुह्वहि अधुक्षावहि अधुक्षामहि ॥ दिही उपदेहे । अधिक्षत् अदिग्ध अधिक्षत अधिक्षाताम् अधिक्षत । अदिग्धाः अधिक्षथाः अधिक्षाथाम् अधिग्ध्वम् अधिक्षध्वम् । अधिक्षि अदिह्वहि अधिक्षावहि अधिक्षामहि ॥ लिही आस्वादने । अलिक्षत् अलीढ अलिक्षत अलिक्षाताम् अलिक्षत । अलीढाः अलिक्षथाः अलिक्षाथाम् अलीढ्वम् अलिक्षध्वम् । अलिक्षि अलिह्वहि अलिक्षावहि चलिक्षामहि ॥ वैच् । प्रौर्णावीत् प्रौर्णवीत प्रौर्णुवीत । घून्मितीट् । अस्तावीत् अस्तोष्ट ॥

अथ ह्रादिः । अभैषीत् ॥ आरत् । तङि वाङ् समारत । पक्षे सिः समार्ष्ट ॥

अथ दिवादिः । सर्तीत्यङ् । पुष पुष्टौ । अपुषत् । अशुषत् । अतुषत् । एवं पुष्यादयः स्निहिपर्यन्ता नेयाः ॥

**१४७० श्लिषः** ।४।३।५। श्लिषो लुङि क्सो भवति नेट् चेत् ॥ आश्लिक्षत् ॥

**१४७१ नानालिङ्गने** ।४।३।६। अनालिङ्गने वर्त्तमानात् श्लिषः लुङि क्सो न भवति ॥ अङि । उपाश्लिषत् जतु काष्ठम् ॥ असू क्षेपणे । लङ् श्वयत्यसिति थक् । निरास्थत् निरास्थत ॥ नश अदर्शने । अङ् ॥

**१४७२ नशो वेम्** ।४।२।८। नशोऽङीम् वा भवति ॥ म इत् । अनेशत् अनशत् ॥ तृप प्रीणने । दृपादेर्वेति वा सिः । रधादित्वादिट् । दृसृपिति वाम् । अत्राप्सीत् अताप्र्सीत् । इटि अतर्पीत् । पक्षे अङ् अतृपत् ॥ दृप हर्षविमोहनयोः ॥ अद्राप्सीत् अदार्प्सीत् अदृपत् अदर्पीत् ॥

स्तनभूम्रुचू इति वाङ् । अङ् । अजरत् । पक्षे सिः ॠदन्तत्वादिट् । अजा-रीत् ॥ घ्राधेडिति सेर्वा श्लुक् । अशात् पक्षे सक् अशासीत् ॥ एवं अच्छात् अच्छासीत् असात् असासीत् । नित्यं सेः श्लुक् । अदात् । दी-प्पूरिति वा ञिः ॥

**१४७३ मजन्वधोऽयंरंनंगंवंकंचमः कृञ्ञौ** ।४।१।२३६। मान्तस्य जनेर्वधेश्च धातोरुपान्त्यस्यातः ञ्णिति कृति ञौ च आन्न भव-ति न यमादेः ॥ अजनि अजनिष्ट । एवमदीपि अदीपिष्ट । अपूरि अपू-रिष्ट ॥

**१४७४ पदः** ।४।३।१६। पदः कर्त्तरि लुङि ते परे ञिर्नित्यं भवति ॥ उदपादि उदपत्सातां । दीप्पूरिति वा ञिः अबोधि अबुद्ध अबुत्सातां ॥ स्विम्नेति नेट् अमंस्त ॥ श्विश्रीतीट् । अडयिष्ट ॥ शुचृञै पुतिभावे । ॠदित्त्वादतङ्यङ् । अशुचत् अशोचिष्ट ॥ हलामित्यात् । अराङ्क्षीत् अरङ्क ॥ अथ स्वादिः । धूञितीट् । अधावीत् ॥ आप्ऌ व्याप्तौ । ऌदि-त्त्वादङ् आपत् एवं अशकत् ॥ अथ क्र्यादिः ॥

**१४७५ निष्कुषः** ।४।२।१४१। निसः कुषेर्वलादेरिड्वा भवति ॥ निरकोषीत् निरकौक्षीत् । श्विश्रीतीट् अपावीत् अपविष्ट । एवं अला-वीत् अलविष्ट ॥ अथ तुदादिः । वाट् । अभार्क्षीत् अभार्ष्टाम् । अभ्रा-क्षीत् अभ्राष्टाम् । अभर्ष्ट अभ्रष्ट । अभर्ड्ढ्वम् अभ्रड्ढ्वम् ॥ दृपादेरिति वा सौ वाम् । अकार्क्षीत् अक्राक्षीत् । अकृष्ट अकष्ट । पक्षे क्सः । अकृ-क्षत् अकृक्षत ॥ लिप्सिजित्यङ् अलिपत् । तङि वा इत्यङ् अलिपत । पक्षे सिः अलिप्त ॥ षिची क्षरणे । असिचत् असिचत असिक्त ॥ अलु-पत् अलुप्त । अविदत् अवित्त । ॠदन्तत्वादिट् अकारीत् अकारिष्टां । शकृपच्छीति नेट् अप्राक्षीत् ॥ सृज् विसर्गे । सृजूदृश इत्यम् । अस्रा-क्षीत् ॥ डुमस्जो शुद्धौ । डुशब्दोतावित्तौ । नेट् ॥

**१४७६ नशमस्जसोर्नम्** ।४।२।१९६। नशः मस्जेः सस्य च

जल्यक्ङिति नम् भवति ॥ अमाविती । अमाङ्क्षीत् अमाङ्क्तां ॥ रुजो भङ्गे । ओदित् । अरौक्षीत् ॥ छुप स्पृश स्पर्शने । आवलीति नेट् अच्छौप्सीत् ॥ दन्दलीति नेट् । दृपादेरिति वा सिः । दृप्तृपिति वाम् अस्प्राक्षीत् अस्पार्क्षीत् अस्पृक्षत् ॥ एवं मृश आमर्शने । अम्राक्षीत् अमार्क्षीत् अमृक्षत् ॥ असदत् । औदित्वाद्वेट् । अव्रश्वीत् अव्राक्षीत् ॥ सेट् । इषु गत्याम् । ऐषीत् ॥ यरलाद्भ इति नेट् । अरब्ध अलब्ध ॥ अथ तनादिः ॥ क्षणूञ् हिंसायां । न क्षणिति नात् अक्षणीत् अक्षणिष्टां । थास्तयोस्सेर्वा लुक् । हन्मन्येति णलक् । अक्षत अक्षणिष्ट । अक्षथाः अक्षणिष्ठाः ॥अथ रुधादिः । भिदृञ् विदारणे । अक्षुन्विति नेट् । अभैत्सीत् । ऋदृदन्तत्वाद्वाङ् । अभिदत् अभित्त असेरिति निषेधादिट् ॥ अञ्ज गतिव्यक्तिम्रक्षणेषु आञ्जीत् आञ्जीष्टाम् ॥ अथ चुरादिः । ण्यन्तेभ्यः कंश्रीति ङः । अलघुपरत्वान्न दीर्घः । अलुलुण्टत् । अलघुपरत्वादसन्वत्त्वे नेत् ॥ यन्त्रु चुर्णसंकोचने । उदित्वान्नम् । अययन्त्रत । अञ्जेफौ मुक्त्वा द्विः ॥ उर्ज बलप्राणनयोः ॥ और्जिजत् । अग्लुच्यसन्वत्त्वान्नेत्वादि ॥ गण सङ्ख्याने ॥

**१४७७ गणाङ्गे** ।४।१।१०४। गणेर्ङे द्विर्भावे पूर्वस्य ईद्वा भवति ॥ अजीगणत् अजगणत् । अग्गाशित्वान्न ह्रस्वः ॥ पार तीर कर्मसमाप्तौ अपपारत् अतितीरत् । एवं कथादयः सर्वेऽपि नेतव्याः ॥

लुटि स्पर्द्धिता ॥ मोदिता । तितिक्षिता । तेजिता । त्रप्ता त्रपिता । मीमांसिता पनायिता पनिता । पणायिता पणिता । क्षन्ता क्षमिता । गाढा गाहिता । सेता । कुङ् शब्दे । कोता ॥ गाङ् ध्यैङ् गतौ ।

---

१ गणयतेः ॥ चशब्दो 'वेष्टिचेष्टो वा ।४।१।१०३।' इत्यतो वाऽनुकर्षणार्थः ॥ चशब्दात् 'भूरिदाक्षिण्यसंयुक्तं यत्त्वं सान्त्वमचीकथः' इत्येके ॥ अदन्तत्वात् द्वित्वस्याप्राप्तेर्वचनम् । चकारात्प्रयोजनानुसरणेनान्यत्र विकल्पेन ईद्भवति तत्र अचीकथत् अचकथत् इति सिध्दम् ॥

श्याता। धर्त्ता। माता। पविता। डयिता। स्यन्ता स्यन्दिता। कल्प्ता कल्पिता। स्मर्त्ता। दरिता दरीता॥

१४७८ **सहलुभेच्छरुषरिषस्ति** ।४।२।१६२। सहादिभ्यः तादेर्ल्यस्य इड्वा भवति॥ सोढा सहिता। रन्ता। बोद्धा। क्रोष्टा। रोढा॥ वा इट ईट् तरिता तरीता। ऋतीयिता अर्तिता। त्यक्ता। सङ्क्ता। गोपायिता गोप्ता गोपिता। धूपायिता धूपिता। तप्ता। यब्धा। गन्ता। वा अम् स्रप्ता सर्प्ता। नन्ता। यन्ता। क्रमिता। तङि प्रक्रन्ता। भ्रमिता। अक्षीता। अनिटि कलुक्। अष्टा। सहलुभेति वेद्। रुष रिष हिंसायां। रोषिता रोष्टा। रेषिता रेष्टा। क्रष्टा कर्ष्टा। दंष्टा। दग्धा। मेढा। श्वयिता। वरता। वदिता यष्टा। वस्ता। वोढा। व्याता। ह्वाता। भक्ता। रङ्क्ता। दीदांसिता। शीशांसिता। शस्ता। गूहिता गोढा। श्रयिता। हृञ् हरणे हर्त्ता। भृञ् भरणे भर्त्ता। नेता॥ अथ अदादिः॥ वेदिता। हन्ता। भविता। मार्जिता मार्ष्टा। वक्ता। रोदिता। स्वप्ता। अनिता। अनेकान्त्वादिट् जागरिता। अस्त्सन्नित्यातो लुक् दरिद्रिता। चकासिता। शासिता वशिता। रविता। क्षविता। संक्ष्णविता। स्नविता। नविता। यविता। एता। ख्याता। चक्षिता। ईरिता। सोता। साविता। अध्येता। द्वेष्टा। दोग्धा। ऊर्णविता ऊर्णुविता। स्तोता॥ अथ ह्वादिः। अर्त्ता॥ अथ दिवादिः। शक्ता वेत्ता। सहेति वेट् लोभिता लोब्धा पोष्टा तोष्टा। रुष रोषणे। रोषिता। रोष्टा। रधादित्वाद्वेट्। नशिता नंष्टा। तर्पिता त्रप्ता तर्प्ता। दर्पिता द्रप्ता दर्प्ता। द्रुहमुहस्नुहस्निहो वेति वा घः पक्षे ढः। द्रुह जिघांसायां। द्रोहिता द्रोग्धा द्रोढा। एवं मुह वैचित्ये। मोहिता मोग्धा मोढा। ष्णुह उद्गरणे। स्नोहिता स्नोग्धा स्नोढा। ष्णिह प्रीतौ। स्नेहिता स्नेग्धा। स्नेढा। जरिता जरीता। शाता। जनिता॥ अथ स्वादिः॥ धविता धोता। वरिता वरीता॥ अथ क्र्यादिः॥ आस्तरिता आस्तरीता। निष्कोष्टा नि-

प्कोषिता ॥ अथ तुदादिः । भ्रस्जी पाके । भ्रष्टा भर्ष्टा । कष्टा कर्ष्टा । स्रष्टा । मङ्क्ता । स्प्रष्टा स्पर्ष्टा । म्रष्टा मर्ष्टा । सहेति वेट् एष्टा एषिता । कुटादेर्ङिद्वत्त्वान्नैङ् कुटिता । पुटिता । कुचिता । घुटिता । स्फुरिता । नुविता । कुविता । स्वङ्क्ता । रब्धा । लब्धा ॥ अथ रुधादिः वेत्ता ॥

**१४७९ अन्जोऽसेः** ।४।२।१४०। अन्जो वलादेरिड्वा भवति न सेः ॥ अञ्जिता अङ्क्ता ॥

**१४८० इटि विजः** ।४।१।१४५। विजेरिडादौ प्रत्यये ङिद्वद् भवति ॥ विजिता शेषं सुगमं ॥ प्रागुक्तप्रक्रियया नेयाः ॥

लङ्लटोः स्यः । अस्पर्द्धिष्यत स्पर्द्धिष्यते । अबीभत्सिष्यत बीभत्सिष्यते । अवन्दिष्यत वन्दिष्यते । अहत्स्यत हत्स्यते । अतितिक्षिष्यत तितिक्षिष्यते । अजुगुप्सिष्यत जुगुप्सिष्यते । अत्रप्स्यत अत्रपिष्यत । त्रप्स्यते त्रपिष्यते अपनायिष्यत् अपनिष्यत । पनायिष्यति पनिष्यते । अपणायिष्यत् अपणिष्यत । पणायिष्यति पणिष्यते । अक्षंस्यत अक्षमिष्यत । क्षंस्यते क्षमिष्यते । अकामयिष्यत अकमिष्यत । कामयिष्यते कमिष्यते । अघाक्ष्यत अगाहिष्यत । घाक्ष्यते गाहिष्यते । अस्मेष्यत स्मेष्यते । अकोप्स्यत कोप्स्यते । अगास्यत गास्यते । अधरिष्यत धरिष्यते । अपविष्यत पविष्यते । अडयिष्यत डयिष्यते । अद्योतिष्यत द्योतिष्यते । अस्रंसिष्यत स्रंसिष्यते ॥

**१४८१ न वृद्भ्यः** ।४।२।१७२। वृतादिभ्यो वलादेरिड् न भवति अताङि परे ॥ वृतूङ् वर्तने । अवर्त्स्यत् वर्त्स्यति । अस्यन्त्स्यत् स्यन्त्स्यति । *अकल्प्स्यत् कल्प्स्यति । तङीटि अवर्तिष्यत वर्तिष्यते ।* अस्यन्दिष्यत स्यन्दिष्यते । अकल्पिष्यत कल्पिष्यते । अज्वरिष्यत ज्वरिष्यते । अस्मरिष्यत् स्मरिष्यति । अदरिष्यत् अदरीष्यत् । दरिष्यति दरीष्यति । अभोत्स्यत् भोत्स्यति । अभोत्स्यत भोत्स्यते । असत्स्यत् सत्स्यति ।

अक्रोक्ष्यत् क्रोक्ष्यति । अरोक्ष्यत् रोक्ष्यति । अजेष्यत् जेष्यति । व्यजेष्यत विजेष्यते । अधास्यत् धास्यति । ध्यै स्मृ चिन्तायाम् । अध्यास्यत् ध्यास्यति । औस्वृ शब्दोपतापयोः । अस्वरिष्यत् स्वरिष्यति । अतरिष्यत् अतरीष्यत् । तरिष्यति तरीष्यति । आर्तीयिष्यत आर्तिष्यत् । ऋतीयिष्यते अर्तिष्यति अचिकित्सिष्यत् अकेतिष्यत् । चिकित्सिष्यति केतिष्यति । असङ्क्ष्यत् सङ्क्ष्यति ॥ यभ जभ मैथुने । अयप्स्यत् यप्स्यति ॥

**१४८९ अतङः** ।४।२।१७१। गमेः परस्य सादेर्ल्यॆऌः अतङीट् नित्यं भवति ॥ अगमिष्यत् गमिष्यति । समगंस्यत संगंस्यते । अयंस्यत् यंस्यति । अक्रमिष्यत् क्रमिष्यति । तङि प्राक्रंस्यत प्रक्रंस्यते । अभ्रमिष्यत् भ्रमिष्यति । अक्रक्ष्यत् अकर्क्ष्यत् । क्रक्ष्यति कर्क्ष्यति । अदङ्क्ष्यत् दङ्क्ष्यति । अधक्ष्यत् धक्ष्यति । रह त्यागे । अरहिष्यत् रहिष्यति । अश्वयिष्यत् श्वयिष्यति । अवत्स्यत् वत्स्यति । अवदिष्यत् वदिष्यति । अयक्ष्यत् अयक्ष्यत । यक्ष्यति यक्ष्यते । अवास्यत् अवास्यत । वास्यति वास्यते । अशीशांसिष्यत् अशीशांसिष्यत । शीशांसिष्यति शीशांसिष्यते । अदीदांसिष्यत् अदीदांसिष्यत । दीदांसिष्यति दीदांसिष्यते । त्विषी दीप्तौ । अत्वेक्ष्यत् अत्वेक्ष्यत । त्वेक्ष्यति त्वेक्ष्यते । अघोक्ष्यत् अघोक्ष्यत । अगूहिष्यत् अगूहिष्यत । घोक्ष्यति घोक्ष्यते । गूहिष्यति गूहिष्यते । अश्रयिष्यत् अश्रयिष्यत । श्रयिष्यति श्रयिष्यते ॥ अथ अदादिः ॥ अवेदिष्यत् वेदिष्यति । अहनिष्यत् हनिष्यति । अभविष्यत् भविष्यति । अमार्क्ष्यत् अमार्जिष्यत् । मार्क्ष्यति मार्जिष्यति । अवक्ष्यत् वक्ष्यति । अरोदिष्यत् रोदिष्यति । अस्वप्स्यत् स्वप्स्यति । अस्सान्नित्यातो लुक् अदरिद्रिष्यत् दरिद्रिष्यति । अशासिष्यत् शासिष्यति । अरविष्यत् रविष्यति । ऐष्यत् एष्यति । लृङि वा गाङ् । इङ् अध्ययने । अध्यगीष्यत अध्यैष्यत ।

१ आर्वाऽचीत्यत्र ऋत इत्युक्तत्वात् अरादेशाभावात् मृजुधातो ऋकारो वर्तते तत अजादौ प्रत्यये आर्वा भवति । यत्र तु अरः प्राप्तिस्तत्राचि परेऽपि ऋतोऽभावात् ऋतोऽत आद्भवत्येव ॥

लृटि न गाङ् अध्येष्यते अयास्यत्। यास्यति। आख्यास्यत आख्यास्यते। आचाक्षिष्यत आचाक्षिष्यते। ऐरिष्यत ईरिष्यते। असविष्यत असोष्यत। सविष्यते सोष्यते। अद्वेक्ष्यत् अद्वेक्ष्यत। द्वेक्ष्यति द्वेक्ष्यते। और्णविष्यत् और्णुविष्यत्। और्णविष्यत और्णुविष्यत। ऊर्णविष्यति ऊर्णुविष्यति। ऊर्णविष्यते ऊर्णुविष्यते॥ अथ ह्वादिः। अभेष्यत् भेष्यति। अपरिष्यत् अपरीष्यत्। परिष्यति परीष्यति। आरिष्यत् आरिष्यति। अहास्यत् हास्यति। अवेक्ष्यत् अवेक्ष्यत। वेक्ष्यति वेक्ष्यते॥ अथ दिवादिः॥ नृतै गात्रविक्षेपणे॥

**१४८३ कृत्तृदृनृत्चृत्छृदस्स्यसौ** ।४।२।१६९। कृत् तृद् नृत् चृत छृद् इत्येतेभ्यः सादेर्स्यश्च इड्वा भवति न सेः॥ अनर्त्स्यत् अनर्तिष्यत्। नर्त्स्यति नर्तिष्यति॥ क्षिप प्रेरणे॥ आक्षेप्स्यत् क्षेप्स्यति। अरात्स्यत् रात्स्यति। अव्यत्स्यत् व्यत्स्यति। सिध्यनिति नेट् अपोक्ष्यत् पोक्ष्यति। अशोक्ष्यत् शोक्ष्यति। अतोक्ष्यत् तोक्ष्यति। अदोक्ष्यत् दोक्ष्यति। अश्लेक्ष्यत् श्लेक्ष्यति। शक मर्षणे। अशक्ष्यत् शक्ष्यति। अस्वेत्स्यत् स्वेत्स्यति। अक्रोत्स्यत् क्रोत्स्यति। अक्षोत्स्यत् क्षोत्स्यति। अशोत्स्यत् शोत्स्यति। असेत्स्यत् सेत्स्यति। अशमिष्यत् शमिष्यति। अक्लेत्स्यत् अक्लेदिष्यत्। क्लेत्स्यति क्लेदिष्यति। अमेदिष्यत् मेदिष्यति। रधादित्वाद्वेट्। अनङ्क्ष्यत् अनशिष्यत्। नङ्क्ष्यति नशिष्यति। अत्रप्स्यत् अतर्प्स्यत्। अतर्पिष्यत् त्रप्स्यति तर्प्स्यति तर्पिष्यति। अद्रप्स्यत् अदर्प्स्यत् अदर्पिष्यत्। द्रप्स्यति दर्प्स्यति दर्पिष्यति। अद्रोक्ष्यत् अद्रोहिष्यत्। द्रोक्ष्यति द्रोहिष्यति। अमोक्ष्यत् अमोहिष्यत्। मोक्ष्यति मोहिष्यति। अस्नोक्ष्यत् अस्नोहिष्यत्। स्नोक्ष्यति स्नोहिष्यति। अस्नेक्ष्यत् अस्नेहिष्यत्। स्नेक्ष्यति स्नेहिष्यति। अजरिष्यत् अजरीष्यत्। जरिष्यति जरीष्यति। अशास्यत् शास्यति। अजनिष्यत जनिष्यते। अपत्स्यत पत्स्यते। अवेत्स्यत

१ कृतै छेदने कृतै वेष्टने इति द्वयोरपि ग्रहणं। तृद हिंसानादरयोः। चृतै हिंसाग्रन्थनयोः। छृदृन् दीप्तिवमनयोः। छृद संदीपने॥

वेत्स्यते। सृजि विसर्गे। सृजिदृशोऽम् जल्यकि इत्यम्। असमस्त इति नेट्। अस्रक्ष्यत स्रक्ष्यते। दूङ् परितापे। अदविष्यत दविष्यते॥ अथ स्वादिः॥ अस्तरिष्यत् अस्तरिष्यत। स्तरिष्यति स्तरिष्यते। अवरिष्यत् अवरीष्यत्। अवरिष्यत अवरीष्यत। वरिष्यति वरीष्यति। वरिष्यते वरीष्यते। अधविष्यत् अधोष्यत्। अधविष्यत अधोष्यत। धविष्यति धोष्यति। धविष्यते धोष्यते। आप्स्यत् आप्स्यति। राध साध संसिद्धौ। असात्स्यत् सात्स्यति॥ अथ क्र्यादिः। अप्रेष्यत् अप्रेष्यत। प्रेष्यति प्रेष्यते। अपविष्यत् अपविष्यत। पविष्यति पविष्यते। आरिष्यत् आरीष्यत्। अरिष्यति अरीष्यति। अभरिष्यत् अभरीष्यत्। भरिष्यति भरीष्यति। अज्ञास्यत् अज्ञास्यत। ज्ञास्यति ज्ञास्यते। अभन्त्स्यत् भन्त्स्यति॥ मन्थ विलोडने। अमन्थिष्यत् मन्थिष्यति। निरकोक्ष्यत् निरकोषिष्यत्। निष्कोक्ष्यति निष्कोषिष्यति॥ अथ तुदादिः॥ अदेक्ष्यत् अदेक्ष्यत। देक्ष्यति देक्ष्यते। अभ्रक्ष्यत् अभर्क्ष्यत्। भ्रक्ष्यति भर्क्ष्यति। अवेत्स्यत् अवेत्स्यत। वेत्स्यति वेत्स्यते। कृती छेदने। वेट्। अकर्त्स्यत् अकर्तिष्यत्। कर्त्स्यति कर्तिष्यति। अम्रक्ष्यत् म्रक्ष्यति। अमङ्क्ष्यत् मङ्क्ष्यति। अस्प्रक्ष्यत् अस्पर्क्ष्यत्। स्प्रक्ष्यति स्पर्क्ष्यति। अम्रक्ष्यत् अमर्क्ष्यत्। म्रक्ष्यति मर्क्ष्यति। अकुटिष्यत् कुटिष्यति। अस्फुटिष्यत् स्फुटिष्यति। अनुविष्यत् नुविष्यति। अद्रुष्यत् द्रुष्यति। उदविजिष्यत् उद्विजिष्यते। अस्पङ्क्ष्यत स्पङ्क्ष्यते। अरप्स्यत रप्स्यते। अलप्स्यत लप्स्यते॥ अथ रुधादिः॥ अभेत्स्यत् अभेत्स्यत। भेत्स्यति भेत्स्यते। भञ्जो अवमर्दने। अभङ्क्ष्यत् भङ्क्ष्यति। आङ्क्ष्यत् आञ्जिष्यत् अङ्क्ष्यति अञ्जिष्यति। ण्यन्तानां प्राग्वत्॥

कर्म्मभावकर्म्मकर्त्तृषु प्राग्वत्तङादि॥

लिङि॥ स्पर्द्धिषीष्ट बीभत्सिषीष्ट वन्दिषीष्ट तितिक्षिषीष्ट तेजिषीष्ट।

---

१ असमस्तयुयार्विगिलाभुरुभाज्वः इत्यत्र विजूत् पृथग्भावे इत्यस्य इट्प्रतिषेधः। ओवीजैङ् इत्यस्य तु ऐदित्करणसामर्थ्यात्॥

कुङ् शब्दे । वा ञिट् । काविषीष्ट कोषीष्ट । धारिषीष्ट धृषीष्ट । मेङ् प्रतिदाने । आत् आतो यम् मायिषीष्ट मासीष्ट । पाविषीष्ट पविषीष्ट । डायिषीष्ट डयिषीष्ट । ज्वरिषीष्ट । हल्भ्यामिति वेट् । स्मारिषीष्ट स्मरिषीष्ट स्मृषीष्ट । भुत्सीष्ट धायिषीष्ट धासीष्ट । स्थायिषीष्ट स्थासीष्ट । तारिषीष्ट तरिषीष्ट तीर्षीष्ट । ऋतीयिषीष्ट अर्त्तिषीष्ट । चिकित्सिषीष्ट । केतिषीष्ट । सङ्क्षीष्ट । गोपायिषीष्ट गोपिषीष्ट । धूपायिषीष्ट धूपिषीष्ट । गंसीष्ट गैंसीष्ट । क्रंसीष्ट । अक्षिषीष्ट अक्षीष्ट । तक्षिषीष्ट तक्षीष्ट । कृक्षीष्ट । दर्शिषीष्ट दृक्षीष्ट । दङ्क्षीष्ट धक्षीष्ट । श्वायिषीष्ट श्वयिषीष्ट । वत्सीष्ट वदिषीष्ट । यक्षीष्ट । वप्सीष्ट वक्षीष्ट । वायिषीष्ट वासीष्ट । दीदांसिषीष्ट । शीशांसिषीष्ट । श्रायिषीष्ट श्रयिषीष्ट । हारिषीष्ट हृषीष्ट । नायिषीष्ट नेषीष्ट ॥ अथ अदादिः ॥ वेदिषीष्ट । वा ञिट् ॥

**१४८४ हो घः** ।४।१।२३९। हनो ञिति णिति च हस्य घो भवति ॥ घानिषीष्ट । वधिषीष्ट । माविषीष्ट । मार्जिषीष्ट मर्जिषीष्ट मृक्षीष्ट । वक्षीष्ट । रोदिषीष्ट । दरिद्रिषीष्ट । राविषीष्ट रविषीष्ट स्नाविषीष्ट । गंस्नोरिति नेट् । स्नोषीष्ट । आयिषीष्ट एषीष्ट । यायिषीष्ट यासीष्ट । साविषीष्ट सविषीष्ट सोषीष्ट । ऊर्णाविषीष्ट ऊर्णविषीष्ट ऊर्णुविषीष्ट ॥ अथ ह्वादिः ॥ भायिषीष्ट भेषीष्ट ॥ अथ दिवादिः ॥ कृत्तृदिति वेट्[1] । नर्त्तिषीष्ट नृत्सीष्ट । रधादित्वाद्वेट् नशिषीष्ट नङ्क्षीष्ट । त्रप्सीष्ट तर्पिषीष्ट तृप्सीष्ट । द्रप्सीष्ट दर्पिषीष्ट दृप्सीष्ट । द्रोहिषीष्ट । ध्रुक्षीष्ट । जनिषीष्ट दीपिषीष्ट ॥ अथ स्वादिः ॥ सायिषीष्ट सेसीष्ट । क्र्यादिः । ज्ञायिषीष्ट ज्ञासीष्ट ॥ तुदादिः । कर्त्तिषीष्ट कृत्सीष्ट । मङ्क्षीष्ट । एषिषीष्ट इत्यादि सर्वं प्रागुक्तप्रक्रियया नेयं॥

लिटि ॥ पस्पर्द्धे । पनायांचक्रे पेने पणायाञ्चक्रे पेणे । सस्मरे । शश्रे । स्वेने सस्वने । रेजे रराजे । वेमे ववमे । जिग्ये । दधे । पपे । आरे । तेरे ऋतीयाञ्चक्रे आनृते । चिकित्सांचक्रे चिकिते । गोपायांचक्रे जुगुपे ।

---

१ गमो वेति किद्वत्वे हन्मन्येति लुक् ॥

धूपायाञ्चक्रे दुधूपे । जग्मे । बभ्रमे । भ्रेमे । फेले । शशसे । ऊषे । ददृशे । आनर्हे । शुशुंवे । शिश्विये । ऊषे । ऊहे । ऊदे । ईजे । ऊपे । ऊहे । ऊवे । ऊये । ववे । विव्ये । जुहुवे । भेजे । ररञ्जे । चख्ने । दीदासांचक्रे । शीशासांचक्रे । जुगुहे । शिश्रिये । निन्ये ॥ अथ अदादिः ॥ विविदे विदांचक्रे । जघ्ने । बभूवे । ममार्जे ममृजे । ऊचे । सुषुपे । आने । शश्वसे । जजक्षे । जजागरे । जागराञ्चक्रे । दरिद्राञ्चक्रे । चकासांचक्रे । शशासे । ऊशे । चुक्ष्णुवे । सुस्नुवे । नुनुवे । ईये । यये । चख्ये । चचक्षे । ईरांचक्रे । अधिजगे । ऊर्णुनुवे । तुष्टुवे ॥ अथ ह्वादिः ॥ बिभयांचक्रे बिभ्ये । जिह्रयांचक्रे जिह्रिये । पप्रे । जहे । ममे । बिभराञ्चक्रे बभ्रे । ददे ॥ अथ दिवादिः ॥ तत्रसे त्रेसे । अपरेधे । आरराधे । विविदे । ऊचे । जजरे ॥ जेरे ॥ अथ स्वादिः ॥ तस्तरे । वव्रे । दुधुवे । शुश्रुवे । जिग्ये । देभे ॥ अथ क्र्यादिः ॥ तस्तरे । चकरे । शशरे । शश्रे । पपरे पप्रे । बभरे । ददरे दद्रे । जिज्ये । जज्ञे । श्रेथे शश्रन्थे ग्रेथे जग्रन्थे ॥ अथ तुदादिः ॥ बभर्जे बभ्रज्जे । उज्झाञ्चक्रे ईषे । व्यच व्याजीकरणे । विविचे ॥ अथ रुधादिः ॥ आनञ्जे ॥ अथ चुरादिः ॥ लुण्टयाञ्चक्रे । इत्यादि सर्वं योज्यं ॥

लुङि अस्पर्द्धि । अपनायि अपानि अपनिषाताम् । अपणायि अपाणि अपाणिषातां । मजन्निति नात् । अक्षमि अक्षमिषाताम् अक्षंसाताम् । अयंरमित्यनिषेधादात् । अकामि । णिञिटि अकमिचमीति न ह्रस्वः । णिलुक् । अकामिषाताम् । अकामयिषाताम् । अप्यायि । अतायि । अगाहि अगाहिषाताम् । अघाक्षाताम् । अस्मायि अस्मायिषाताम् अस्मेषाताम् । अद्योति । अशोभि । अरोचि । अश्वेति । अमेदि । आस्वेदि । अघोटि । अलोटि । अलोठि । अक्षोभि । अस्तम्भि । अस्रंसि । अभ्रंशि । अध्वंसि । अवर्ति । अवर्द्धि । अशर्द्धि । अस्यन्दि । अकल्पि । अज्वारि

---

१ लिट्यडीति यणो वेक् । तस्य च हल्कार्यत्वात्तस्मिन्कृते पश्चात् द्विः ॥

अज्वरिषाताम् । अनाटि । अज्वालि । अस्मारि अस्मारिषाताम् अस्मरिषाताम् अस्मृषाताम् । अश्रायि अश्रायिषाताम् अश्रासाताम् । अरामि । अबोधि अभुत्साताम् । अवामि अवमिषाताम् । असादि अशादि । अद्रावि अद्राविषाताम् अद्रोषाताम् । एवं अस्रावि अस्राविषाताम् अस्रोषाताम् । अधायि अधायिषाताम् अधासाताम् । एवमादन्तानाम् अघ्रायि । अध्मायि । अस्थायि । अम्नायि । अदायि । असारि । आरि । आरिषाताम् । अतारि अतारिषाताम् अतरिषाताम् अतरीषाताम् अतीर्षाताम् । आर्त्तीयि आर्त्ति । अज्योति । अस्कन्दि । अस्कन्साताम् । प्राव्राजि । असञ्जि असङ्क्षाताम् । अगोपायि अगोपि । अधूपायि अधूपि । आगामि अगंसाताम् । असर्पि असृप्साताम् । अनामि अनंसाताम् । अयामि । अशासि । अकर्षि अकृक्षाताम् । अदर्शि अदर्शिषाताम् अदृक्षाताम् । अदाहि अधक्षाताम् । अमेहि । अश्वायि अश्वायिषाताम् अश्वयिषाताम् । अवासि । अवादि अवदिषाताम् । अयाजि । अवापि । अवाहि । अवायि अव्यायि अह्वायि । अदीदांसि । अशीशांसि । अगूहि अगूहिषाताम् अघुक्षाताम् । अश्रायि । अनायि ॥ अथ अदादिः ॥ अवेदि । अघानि अघानिषाताम् । अहसाताम् । स्थानिवद्भावेन अनुपान्त्यत्वात् नात् अवधि अवधिषाताम् । अभावि । अमार्जि अमार्जिषाताम् अमृक्षाताम् । अवाचि । अरोदि । अस्वापि । आनि । अश्वासि । अजाक्षि । अजागारि । अदरिद्रि । अचकासि । अशासि । अवाशि । अरावि अराविषाताम् अरविषाताम् । अक्षावि अक्षाविषाताम् अक्षविषाताम् । अक्ष्णावि । अस्नावि अस्नाविषाताम् अस्नोषाताम् । अनावि । अयावि । अगावि । अयायि । आख्यायि । ऐरि । ऐडि । ऐशि । आसि । अवासि अवसिषाताम् । आशासि । असावि । अध्यगायि अध्यायि । अद्वेषि । प्रौर्णावि । अस्तावि ॥ अथ ह्वादिः ॥ अभायि । आरि ॥ अथ दिवादिः ॥ अपोषि

१ गमेति सूत्रेण सकारादिप्रत्यये विकल्पेनेट्प्राप्तौ गमुस्नोरसुप्तङाने इति नेट् ॥

अपुक्षाताम्। अशोषि। अतोषि। अश्लेषि अश्लिक्षातां। रधादित्वाद्वेट्॥

**१४८५ नेट्यलिटि** ।४।२।२०१। रध इडादौ प्रत्यये नम् न भवति न लिटि॥ अरन्धि अरधिषाताम् अरत्साताम्। अनाशि। अतर्पि। अदर्पि। अजारि। अशायि। अच्छायि। असायि। अदायि। मजन्वध इति नात्। अजनि। अदीपि। अपूरि। उदपादि। अबोधि। अमानि। अडायि। अशोचि। अरञ्जि॥ अथ स्वादिः॥ अधावि। आपि॥ अथ क्र्यादिः॥ अश्रायि। अपावि। अलावि। निरकोषि॥ अथ तुदादिः॥ अभर्जि अभ्रज्जि। अकर्षि। अलेपि। असेचि। अलोपि। अवेदि। अकारि। अप्रच्छि। अमज्जि अमङ्क्षाताम्। अरोजि। अच्छोपि अस्पर्शि। अमर्शि। असादि। अव्रश्चि ऐषि॥

**१४८६ रेभः** ।४।२।२०२। रभोऽजादौ प्रत्यये नम् भवति न लिटि॥ अरम्भि॥

**१४८७ लभः** ।४।२।२०३। लभोऽजादौ प्रत्यये नम् भवति न लिटि॥ अथ तनादिः। अक्षाणि॥ अथ रुधादिः॥ अभेदि। भन्जे अवमर्दने॥

**१४८८ भन्जेञौ वा** ।४।१।२२३। भन्जो नस्य लुग्वा भवति ञौ परे॥ अभाजि अभञ्जि॥ अथ चुरादिः॥ अलुण्डि। अयन्त्रि। और्जि। अकथि। अगणि। अपारि। अतीरि। एवं सर्वं नेयं शेषं प्राग्वत्॥

लुटि॥ स्पर्धिता मोदिता हर्त्ता इत्यादि प्राग्वत्। स्मेता स्मायिता। क्नोता क्नाविता। श्याता श्यायिता। धर्त्ता धारिता। पविता पाविता।

---

१ 'रधः' इति सूत्रेण प्राप्तस्य नमोऽपवादः। इटीति किं? रन्धयति। अलिटीति किं? ररन्धिव ररन्धिम॥ रेधिवानित्यत्र नमो लुक्। लिटीति पूर्वेण सिद्धे नियमनेऽर्थे योगे लिटि वेत्यवधारणे ररन्धेत्यत्र न स्यात्। रधितेत्यादौ स्यादेव॥

२ न लिटीति किं? आरेभे। अजादाविति किं? आरब्धा॥ आरभते इति तुदादित्वाच्छे न लुक्॥

३ अलिटीति किं? लेभे। अचीति किं? लब्धा। लभते इति तुदादित्वाच्छे न लुक्॥

डयिता डायिता। दारिता दरिता दरीता। कन्ता। दर्शिता द्रष्टा। श्वयिता श्वायिता। वाता वायिता। श्रयिता श्रायिता। हर्त्ता हारिता। नेता नायिता॥ अथ अदादिः॥ घानिता। हन्ता। भाविता भविता। जागारिता जागरिता। राविता रविता। क्षाविता क्षविता। क्ष्णाविता क्ष्णविता। स्नाविता स्नोता। नाविता नविता। याविता यविता। आयिता। एता। यायिता याता। इत्यादि सर्वं ञिङ्भावाभावाभ्यामभ्यूह्यं॥ लङ्लटोः॥ अस्पर्धिष्यत स्पर्धिष्यते। अकामिष्यत अकामयिष्यत अकमिष्यत कामिष्यते कामयिष्यते कमिष्यते। अस्मायिष्यत अस्मेष्यत स्मायिष्यते स्मेष्यते। अकाविष्यत अकोप्यत काविष्यते कोप्यते। अधारिष्यत अधरिष्यत धारिष्यते धरिष्यते। अपाविष्यत अपविष्यत पाविष्यते पविष्यते। अडायिष्यत अडयिष्यत डायिष्यते डयिष्यते। अज्वरिष्यत ज्वरिष्यते। अस्मारिष्यत अस्मरिष्यत स्मारिष्यते स्मरिष्यते। अदारिष्यत अदरीष्यत अदरिष्यत दारिष्यते दरिष्यते दरीष्यते। अभोत्स्यत भोत्स्यते। अगंस्यत गंस्यते। अक्रंस्यत क्रंस्यते। अभ्रमिष्यत भ्रमिष्यते। अदर्शिष्यत अद्रक्षत। दर्शिष्यते द्रक्ष्यते॥ अथ अदादिः॥ अघानिष्यत अहनिष्यत। घानिष्यते हनिष्यते। एवं ञिङ्भावाभावाभ्यां सर्वमभ्यूह्यं॥

यङि। पास्पर्ध्यते। वावन्यते। मम् पम्पन्यते। पम्पण्यते। अकवतेरिति चुत्वाभावः कोकूयते॥ स्रन्सूङ् भ्रन्सूङ् अवस्रंसने॥

**१४८९ वन्चस्रन्सध्वन्सभ्रन्शकसपत्पदिस्कन्दान्नीम्** ।४।१।८७। वन्चादीनां यङन्तानां द्विर्भावे पूर्वस्य नीम् भवति॥ म इत्। नलुक् सनीस्रस्यते बनीभ्रश्यते। ध्वन्सूङ् गतौ। दनीध्वस्यते। घटिष् चेष्टायां। जाघट्यते। ञित्वरिष् सम्भ्रमे। तात्वर्यते। श्रुचि॥

**१४९० त्वंज्वर्मव्याविस्रिवोऽचश्च** ।४।१।१४२। त्वरादीनां

१ वन्च प्रलयने। स्रन्सूङ् अवस्रंसने। ध्वन्सूङ् गतौ। कस गतौ। स्कन्द गतिशोषणयोः॥ दीर्घोच्चारणान्नीम् न विक्रियते। श्रुचीगेनदिति वचनात् हलोनोऽनर्चेति नलुक् नास्ति॥

२ ञित्वरिष् सम्भ्रमे। मव मव्य कीलबन्धने। अव रक्षणपालनयोः। सिवू गतिशोषणयोः। वकारः स्थानी भवतीति तेन यकारोऽत्रादेशो भवति॥

वस्य साचः क्विपि जलि चानुनासिकादौ प्रत्यये ऊच् भवति । तातूर्ति तातूर्त्तः तात्त्वरति । तातूर्षि तातूर्थः तातूर्थ । तातूर्मि तातूर्वः तातूर्मः ॥ जाज्वर्यते। श्लुच्यूच् जाजूर्ति जाजूर्तः जाज्वरति। सास्मर्यते। ध्वन शब्दे। दंध्वन्यते । रंरम्यते । सासद्यते । कस गतौ । नीम् विचनीकस्यते देधीयते । पेपीयते ॥

**१४९१ घ्राध्मोर्यङि** ।४।२।८९। घ्राध्मोर्यङि ईद्भवति ॥ जेघ्रीयते । देध्मीयते । सलुक् तेस्थीयते । माम्नायते । देदीयते । दादायते । जेगीयते । अरार्यते । तेतीर्यते । चनीस्कद्यते । वनॄ गतौ च । वनीवच्यते । हुर्च्छा कौटिल्ये । जोहूर्च्छ्यते ॥ श्लुचि ॥

**१४९२ रात्लुक्** ।४।१।१४३। राच्छवयोरनुनासिके क्विपि जलि च लुग् भवति ॥ जोहूर्ति जोहूर्त्तः जोहूर्च्छति ॥ मुर्च्छा मोहसमुच्छ्राययोः । मोमूर्च्छ्यते । श्लुचि मोमूर्ति मोमूर्तः मोमूर्च्छति । सासज्यते सासञ्जीति सासङ्क्ति । अट गतौ । अटाट्यते । जप मानसे च ॥

**१४९३ जब्जभदहदशभञ्जपसाम्** ।४।१।८९। जपादीनां यङि द्विर्भावे पूर्वस्य मम् भवति ॥ जञ्जप्यते । श्लुचि जञ्जप्ति जञ्जपीति । जभ मैथुने । जञ्जभ्यते । जङ्गम्यते जङ्गमीति जङ्गन्ति । हन्मन्येति मलुक् जङ्गतः जङ्गमति । जङ्गमीषि जङ्गंसि जङ्गथः जङ्गथ । जङ्गमीमि । म्वोश्चेति मो निः जङ्गन्मि जङ्गन्वः जङ्गन्मः ॥ सरीसृप्यते । भण शब्दे । बम्भण्यते नन्नम्यते । नन्नमीति । नन्नन्ति नन्नतः नन्नमति । नन्नमीषि नन्नंसि नन्नथः नन्नथ । नन्नमीमि नन्नन्मि नन्नन्वः नन्नन्मः । एवं यंयम्यते यंयमीति । चङ्क्रम्यते चङ्क्रमीति । बम्भ्रम्यते बम्भ्रमीति ॥ दल त्रिफला विशरणे ॥

**१४९४ चर्फलां**[1] ।४।१।९०। चर्फलां यङि द्विर्भावे पूर्वस्य मम् भवति ॥

---

१ चर गतिभक्षणयोः । फल निष्पत्तौ । दल त्रिफला विशरणे । इत्येतेषां धातूनां यङन्तानां द्विर्भावे पूर्वस्य ममागमो भवति ॥ बहुवचनं त्रिफला विशरणे इत्यस्य परिग्रहार्थम् ॥ अन्यथा हि निरनुबन्धकग्रहणे न सानुबन्धकस्येति फल निष्पत्तावित्यस्यैव ग्रहणं स्यात् ॥

**१४९५ ति चातो ल्युन्** ।४।१।९१। चर्फलां यङि तादौ प्रत्यये रेफलकारपरस्य अत उद् भवति ॥ पम्फुल्यते पम्फुलीति । चर भक्षणे । चञ्चूर्यते चञ्चुरीति । दरीदृश्यते दरीदृशीति । दन्दश्यते दन्दशीति दन्दष्टि दन्दह्यते दन्दहीति । दा.दित्वाद् घः दन्दग्धि ॥ वा सम्प्रसारणं । शोशूयते शेश्वीयते । वावस्यते ॥

**१४९६ स्वंव्यास्यमः** ।४।१।११९। स्वपादीनां यङि साचो यत्र इग् भवति ॥ वेवीयते वेवेति । दूव्लुक्तौ ह्व इति इक् । जोहूयते । धावून् शुद्धौ च । दाधाव्यते । वस्य ऊच्यैच् । दाधावीति दाधौति दाधौतः दाधावति । चायृञ् पूजायां च ॥

**१४९७ चायः की** ।४।१।१२०। चायो यङि की भवति ॥ चेकीयते । नेनीयते । अथ अदादिः । जङ्घन्यते जङ्घनीति जङ्घन्ति जङ्घतः जङ्घनति ॥

**१४९८ घ्नो घ्नी हिंसायाम्** ।४।२।९०। हिंसायां हनो यङि घ्नी भवति ॥ जेघ्नीयते शत्रून् । बोभूयते । सोषुप्यते । इत् शेशिष्यते ॥

**१४९९ वशो न यङि** ।४।१।११८। वशो यङि यत्र इग् न भवति ॥ वावश्यते । मेमीयते । चाख्यायते । चाचक्ष्यते । तोष्टूयते तोष्टवीति तोष्टोति । अव्यादित्वाद्यङ् । ऊर्णोनूयते । जेहीयते मेमीयते । अथ दिवादिः ॥

**१५०० नृतेर्यङः** ।१।२।५५। यङन्तस्य नृतेः षात्परस्य नस्य णो न भवति ॥ नरीनृत्यते । वेविध्यते । जेजीयते । पनीपद्यते । मम्मन्यते मम्मनीति मंमन्ति मंमतः मम्मनति । वेव्रीयते ॥ अथ स्वादिः । हस्य घः । प्रजेघीयते ॥ अथ क्र्यादिः । उर् । मोमूर्यते पोपूर्यते । गॄ शब्दे

---

१ ञिष्वप् शये । व्येञ् संवरणे । स्यमू स्वन शब्दे । यङीति वर्तते । यङीति किं? स्वपन्ति । इग् इति किं? संवेवियते इत्यत्र वकारस्य मा भूत् ॥

२ हिंसायामिति किं? जघन्यते । केचिदिमं विकल्पेनाहुः त्वं तु राजन् चटकमपि न जघन्यसे ॥

जेगीर्यते जेजीयते जाज्ञायते। अश भोजने इत्यस्य अश्यादित्वं केचिदिच्छन्ति अशाश्यते॥ अथ तुदादिः। बरीभृज्ज्यते॥ षिची क्षरणे॥

**१५०१ सिचो न यङि** ।१।२।६२। सिचो यङि सस्य षिर्न भवति॥ सेसिच्यते। लुप्लृञ् छेदने। लोलुप्यते। गॄ निगरणे॥

**१५०२ यङि** ।४।२।२५८। ग्रो यङि रस्य लो नित्यं भवति॥ जेगिल्यते। इक्। परीपृच्छयते वरीवृश्च्यते। इक्। वेविच्यते। कुङ् शब्दे। अनेधादित्वात् चुत्वं चोकूयते। मम् बंभज्यत इत्यादि सर्वेषु लकारेषु प्रागुक्तप्रक्रियया नेयं॥

णिञि। स्पर्द्धयति। लिङि णिलुक् स्पर्द्यात् स्पर्द्धयिषीष्ट। लिटि स्पर्द्धयांचक्रे। लुङि ङे द्वित्वादि अलघुपरत्वान्न सन्वद्भावः अलघुपरत्वात् पूर्वस्य न दीर्घः अपस्पर्द्धत् अपस्पर्द्धत। लुटि स्पर्द्धयिता। लृङि अस्पर्द्धयिष्यत् अस्पर्द्धयिष्यत। लृटि स्पर्द्धयिष्यति स्पर्धयिष्यते। एवं सर्वत्र योज्यं। बाधृङ् लोडने। ऋदित् लुङि अशास्वप्नास्यृदित इति न ह्रस्वः अबबाधत। अमूमुदत्। अकुङ् लक्षणे। उङावितौ नम् आञ्चिकत्। क्नूयैङ् शब्दे। ह्रीव्लीति पक् यलुक् जुस्पकीत्येङ्। क्नोपयति अचुक्नुपत्। क्ष्मायैङ् विधूनने। क्ष्मापयति अचिक्ष्मपत्। स्फायैङ् वृद्धौ। कथादीति वम्। स्फावयति अपिस्फवत्। भाषि व्यक्तायां वाचि। भाषयति॥

**१५०३ भ्राज्भास्भाष्दीप्पीड्मील्जीवकण्श्रणवणलुटां वा** ।४।१।२१२। भ्राजादेरुपान्त्यस्याचो ङपरे णौ ह्रस्वो वा भवति॥ ह्रस्वे सन्वत् कार्यम्। अबीभषत् अबभाषत्। भासि दीप्तौ। भासयति अबी-

---

१ उदित इति नमि तत इति द्विर्भावप्राप्तौ 'न बन्द्रा बलि' इति नकारं मुक्त्वा द्विः। म्नां जयीति नस्य ञः। णिलुक्॥

२ भ्राजि वर्चि दीप्तौ। भाषि व्यक्तायां वाचि। दीपैङ् कासि दीप्तौ। पीड गतौ। मील निमेषणे। जीव प्राणधारणे। कण रण गतौ। श्रण् दाने। वन शब्दे। लुट प्रतिघाते। पूर्वेण नित्ये प्राप्ते वचनम्। नित्यस्याः इत्यात्वे कृते पश्चाद्वा ह्रस्वः॥

भसत् । अबभाषन् अतीतृपत् । अचीकमत । भ्राजि वर्चि दीप्तौ । भ्राजयति अबिभ्रजत् अबभ्राजत् । चेष्टि चेष्टायां । चेष्टयति ॥

१५०४ **वेष्टिचेष्टो वा** ।४।१।१०३। वेष्टिचेष्टयोर्ङपरे णौ द्विर्भावे पूर्वस्य[1] अद्वा भवति ॥ अचचेष्टत् अचिचेष्टत् । एवं वेष्टि वेष्टने । वेष्टयति अववेष्टत् अविवेष्टत् ॥

१५०५ **प्रयोक्तुः स्मिङः** ।४।१।१९१। प्रयोक्तृनिमित्तकस्य स्मिङो णौ आद्वा भवति ॥ जटिलो विस्मापयते व्यसिस्मपत ।[1] नान्यनिमित्तकस्य । कुञ्चिकया विस्माययति व्यसिस्मयत् । लुटि प्रतिघाते लोटयति । भ्राजूभासिति वा ह्रस्वः अलूलुटत् अलुलोटत् । वर्त्तयति ॥

१५०६ **ङेॠत्** ।४।१।२१२। धातोरुपान्त्यस्य ऋवर्णस्य ङे णौ ऋद्वा भवति ॥ पक्षे अर् अवीवृतत् अववर्तत् । कल्पयति अचीकॢपत् अचकल्पत् ॥[2]

घटिष् चेष्टायां ॥

१५०७ **घटादिकगेवनूजनैङ्जृष्क्सूरञ्जयमोऽकमिचम्यम्य-**[3]

---

१ प्रयोक्तुः स चेत् स्मिङ् णिकर्तुः कारकाद्भवति नान्यस्मादर्थतो भवतीति स्मिङ् ततो भवतीत्युच्यते । मुण्डी विस्मापयते जटिलो विस्मापयते । प्रयोक्तुरिति किं? कुञ्चिकयैनं विस्मापयति करणादत्र विस्मयो न प्रयोक्तुः । अनुबन्धनिर्देशाद्यङः श्लुचि न भवति । विसिस्माययति ॥

२ ऋणारेणान्तरंगादपि रवचनाद्बाध्यते । उपान्त्यस्येति किं? अचीकरत् । कृपौङ् सामर्थ्ये । कृपोऽकृपीटादिषु इति रस्य लकारः ॥ कल्पयतीत्यत्र 'ङेॠत्' इति सूत्रेण ऌद्वा भवति । ऋवर्णग्रहणे ऌवर्णस्यापि ग्रहणात् ॥

३ अपपरिपूर्वस्खदवर्जितानां घटादीनां कगे वनू जनैङ् जृष् क्सू रञ्ज इत्येतेषां कमि चम्यमिवर्जितानां चामन्तानामुपान्त्यस्याचो णौ परे अण् ह्रस्वो भवति । अमि परे तु णौ अस्याचः स्थाने दीर्घो वा भवति ॥ कगे इत्येकार एतत्कार्यार्थः । कगे इति सौत्रो धातुः ॥ वनूङ् याचने तनादिः । वनू इत्यूदिदुपादानात् वनूङ् याचने इत्यस्यैव भवति । वन षण सम्भक्तावित्यस्य तु वानयति वानं वानं अवानित्येव भवति ॥ केचित् जनैङ्-जृष्क्स्विति पठन्ति । तेषां क्सू निरसने इति धात्वन्तरं दैवादिकम् ॥ क्सू ह्वरणदी-प्त्योः दैवादिकः । रञ्जो नस्य णौ मृगरमणे लुग्भवति तत्राकारो 'ञिणत्यस्याः' इति प्राप्नोति अतस्तद्ग्रहणम् । अतो रजयति मृगा नेत्येव भवति । अन्यथा प्राप्तिपूर्वकत्वात्प्र-

**पपरिस्खद उपान्त्यस्याचोऽणम्णौ तु दीर्घो वा** ।४।१।२०२। घटादीनां कगोपद्रुकस्य अमन्तानां च धातूनाम् उपान्त्यास्याचो णौ परे अण् ह्रस्वो भवति अम्णिपरे तु णौ दीर्घो वा भवति न कम्यादीनाम् ॥ घटयति अजीघटत् । व्यथयति अविव्यथत् । प्रथिष् प्रख्याने । प्रथयति ॥

१५०८ **स्मृदृत्वरत्वम्रदप्रथस्पशोऽत्** ।४।१।१०२। स्मादीनामनग्लुचि ङपरे णौ द्विर्भावे पूर्वस्य अद्भवति ॥ सन्वत्त्वापवादः । अपप्रथत् । म्रदिष् मर्दने । म्रदयति अमम्रदत् । त्वरयति अतत्वरत् । क्रपि कृपायां । क्रपयति अचिक्रपत् । ज्वरयति अजिज्वरत् । नट नृत्तौ । नटयति अनीनटत् । क्रण रण चण गतौ । कणयति रणयति चणयति । भ्राजभासिति वा ह्रस्वः अचीकणत् अचकाणत् । अरीरणत् अरराणत् । श्रण दाने । श्रणयति अशिश्रणत् अशश्राणत् । ज्वल दीप्तौ ॥

१५९० **वाऽनुपसर्गाज्ज्वलह्वलह्मलवनूवमनमग्लाल्लाम्** ।४।१।२०७। अनुपसर्गस्य ज्वलादेरुपान्त्यस्याचो णौ ह्रस्वो वा भवति ॥ ज्वलयति ज्वालयति अजिज्वलत् । स्मरयति असस्मरत् । दृ भये । दरयति अददरत् । चल कम्पने । चलयति अचीचलत् ध्वनयति अदिध्वनत् । ह्रस्वः रमयति अरीरमत् । चालयति अचीचलत् । वामयति वमयति अवीवमत् । सोपसर्गस्य प्रवमयति ॥

१५१० **वाशद्योर्विधूननागत्योर्जक्तौ** ।४।१।१९९। वायाः णौ विधूनने जक् भवति अगतौ शदस्तादेशः ॥ फलानि शातयति ॥

१५११ **रुहः पः** ।४।१।१९६। रुहो णौ पादेशो वा भवति ॥

---

[1]तिषेधस्येति तद्ग्रहणं व्यर्थमेव स्यात् ॥ घटादिग्रहणं किं? पाठयति पाठे पाठे । कगादिष्विहार्थविशेषणानुपादानं । घटादयः पुनः पठितार्था एवेति तेषां पृथगुपादानं । तेन उद्घोटयति पाणयतीत्यन्यत्र । स्खद इति किं? कामयते आचामति आमयति अपस्खादयति परिस्खादयति । अपपरिग्रहणं किं? स्खदयति ॥ प्रस्खदयति । उपान्त्यस्येति किं? श्रपयति ॥

१ दृ भये । स्तृञ् च्छादने । ञित्वरिष् सम्भ्रमे । म्रदिष् मर्दने । प्रथिष् प्रख्यापने स्पशि ग्रहणश्लेषणयोः । अदिति तपरकरणान् लघोर्दीर्घोऽनजादेरिति दीर्घो न भवति ॥

रोपयति रोहयति । क्रीङ्जेरित्यात्वे पक् । जापयति । ह्रीव्लीति पक् । धापयति ॥

**१५१२ वेञ्व्यापाह्वशाच्छासो यिक्** ।४।१।२००। वेञादीनां णौ यिक् भवति ॥ इकावितौ पगपवादः । पाययति ॥

**१५१३ पिबस्येब् ङे** ।४।१।७०। पाधातोरचः ङे परे णौ ईप् भवति न च द्विः ॥ अपीप्यत् । प्रापयति ॥

**१५१४ जिघ्रतेरिः** ।४।१।२१४। घ्र उपान्त्यस्याचो ङे णौ इद्वा भवति ॥ अजघ्रिपत् अजिघ्रपत् । घ्मपयति अदिध्मपत् ॥

**१५१५ तिष्ठतेः** ।४।१।२१५। स्थ उपान्त्यस्याचो ङे णौ नित्यमिद्भवति ॥ स्थापति अतिष्ठिपत् । ग्लै हर्षक्षये । वा ह्रस्वः । ग्लपयति ग्लापयति अजिग्लपत् । ध्यै स्मृ चिंतायां । ध्यापयति अदिध्यपत् स्मारयति असस्मरत् । पक् । अर्पयति आर्पिपत् । अर्चयति आर्चिचत् । मूर्च्छयति अमुमूर्च्छत् । सज्ञयति अससज्ञत् नाटयति अनीनटत् । लड विलासे । डो लः । लालयति अलीललत् ॥

**१५१६ जभोऽचि** ।४।२।१९९। जभोऽजादौ ल्यश्लि प्रत्यये नम् भवति ॥ जम्भयति । अजजम्भत् । गमयति अजीगमत् । सर्पयति । असीसृपत् अससर्पत् । वण शब्दे । वाणयति अवीवणत् अववाणत् । नामयति नमयति अनीनमत् ॥

**१५१७ यमोऽपरिवेषे णिचि च** ।४।१।२०४। अपरिवेषे यमः उपान्त्यस्याचो णौ ह्रस्वो भवति अमुञि परे तु णौ दीर्घः ॥ यमयति अयीयमत् । परिवेषे चन्द्रं यामयति अयीयमत् । आचामयति आचीचमत् । क्रमयति अचिक्रमत् । भ्रमयति । मील निमेषणे । मीलयति । भ्राज्भासिति वा ह्रस्वः । अमीमिलत् अमिमीलत् । जीव प्राणधारणे । जीवयति । वा ह्रस्वः । अजिजीवत् अजीजिवत् । दर्शयति अदीदृशत् अददर्शत् । चह परिकल्कने ॥

**१५१८ चहः शाठ्ये** ।४।१।१०६। शाठ्ये चहोऽचो णौ ह्रस्वो भवति अग्लौ तु दीर्घो वा ॥ चहयति अचीचहत् अन्यत्र चाहयति। अर्ह पूजायाम्। अर्हयति आर्जिहत। श्वाययति ॥

**१५१९ श्वेर्वा** ।४।१।१२३। श्वेस्सनि ङे च णौ यञ इग्वा भवति ॥ अशूशवत् अशिश्वयत्। यिक् वाययति अवीवयत्। व्याययति अविव्ययत्। ह्वाययति ॥

**१५२० णौ सन्ङे** ।४।१।१२२। ह्वेञः सनि ङे च णौ यञ इग् भवति ॥ अजूहवत्। रञ्जयति अररञ्जत् ॥

**१५२१ णौ मृगरमणे** ।४।१।२२६। मृगाणां क्रीडायां रञ्जो णौ नस्य लुग् भवति ॥ घटादीति ह्रस्वः। रजयति मृगान् अरीरजत्। ऊत् गूहयति अजूगुहत्। श्राययति अशिश्रयत्। हृञ् हरणे। हारयति अजीहरत्। नाययति अनीनयत् ॥ अथ अदादिः ॥

**१५२२ घ्नो नस्तोऽञिणे** ।४।१।२३८। हनो नस्य ञ्णिति तो भवति न औ णशि च ॥ घातयति। अङे इति निषेधात् न हस्य घः। अजीहतत्। भावयति अबीभवत्। मार्जयति अमीमृजत् अममार्जत्। स्वापयति। अच्कार्यात् प्रागेव द्विः ॥

**१५२३ स्वपेर्णावुः** ।४।१।९९। स्वपेर्णौ द्विर्भावे पूर्वस्य यञ उद्भवति ॥

**१५२४ स्वापेर्ङे** ।४।१।११७। स्वापेः ङे साचः यञ इग् भवति ॥ असूषुपत्

१ सन्परे णौ परे ङपरे णौ परे इत्यर्थः। सन्परे णौ शुशावयिषतीत्युदाहरणम्। ङपरे णो अशूशवदित्युदाहरणम् ॥ सनि णौ ङे णौ चेति नियमद्वय भवति। तदुदाहरणं जुहावयिषति अजूहवत् ॥ सन्ङे इति किं? ह्वाययति। णावित्युत्तरार्थम् ॥

२ णिप्रत्ययणादेशवर्जिते ञिति प्रत्यये परे। घ्नो न इत्यत्र घ्न इत्येतावता षष्ठ्याः स्थानेऽन्तेऽल इति नकारस्य स्यात्। घटादिकगे इत्यादिना उपान्त्याधिकारादुपान्त्यस्य स्यात् इति न इत्युच्यते ॥

३ स्वपेरिति किं? यियाजयिषति। णाविति किं? सिस्वापकियिषति स्वापं करोति ॥

४ स्वापेरिति किं? स्वापयतेः सन् सिस्वापयिषतीत्यत्र स्वपेर्णिषुव्यवधानात्। ङे इति किं? सोषोपयिषति ॥ स्वापेति ण्यन्तनिर्देशः। अन्यथा स्वप इत्येवोच्येत ॥

**१५२५ जागुर्ञ्णिणे** ।४।१।२३१। जगुरतः ञ्णिणशोरेवाद्भवति । नियमादत्र न दीर्घः ॥ जागरयति अजजागरत् । अस्सनिल्यातो लुक् । दरिद्रयति अददरिद्रत् । शासयति । अशास्विति न ह्रस्वः । अशशासत् ॥

**१५२६ णौ गमज्ञाने** ।४।२।१२५। अज्ञाने ऐत्योर्णौ गम् भवति ॥ गमयति अजीगमत् । ज्ञाने प्रत्याययति प्रत्ययियत् । वा गतिगन्धनयोः । विधूनने जक् । वाजयति अवीवजत् । ष्णा शौचे । वा ह्रस्वः । स्नपयति स्नापयति असिष्णपत् । कथादीति लक् । पालयति अपीपलत् । ईरयति ऐरिरत् । सावयति असूषवत् । क्रीङ्जेरित्याति पक् अध्यापयति अध्यापिपत् । ङे वा गाङ् अध्यजीगपत् । ऊर्णावयति और्णुनवत् ॥ अथ ह्लादिः ॥

**१५२७ विभेतेर्भीष् च** ।४।१।१९२। कर्तृनिमित्तकस्य भियो णौ आच्च भीष् च पर्यायेण भवतः ॥ आति पक् । जटिलो भापयते मुण्डो भीषयते । अन्यनिमित्तस्य न भवति कुञ्चिकया भाययति । ह्री लज्जायां । पक् । जुस्पकीत्येङ् । ह्रेपयति अजिह्रिपत् । अथ दिवादिः । दुष वैकृत्ये ॥

**१५२८ ऊद् दुषो णौ** ।४।१।२१६। दुषोऽचो णौ ऊद् भवति ॥ दूषयति अदूदुषत् ॥ षिधू संराद्धौ ॥

**१५२९ सिद्ध्यतेरज्ञाने** ।४।१।१९०। अज्ञाने सिध्यतेरचो णावाद्

---

१ अज्ञाने इति विशेषणं इण एव नेकः असम्भवात् इत्येतदर्थमेव द्विवचनम् एत्योरिति इणिकोरित्यर्थः । गम् इत्ययमादेशो भवति ॥

२ प्रयोक्तुः स चेद्बिभेतेर्णिकर्तुः कारकाद्भवति । मुण्डो भापयते । जटिलो भीषयते प्रयोक्तुरिति कुञ्चिकयैनं भाययति अत्र करुणाहृदयं न प्रतोक्तुः (?) कुञ्चिका ध्यहिं मत्वा बालस्ततो बिभेति ॥ तिप्निर्देशात् यङ्लुचि न भवति बिभाययति ॥

३ ऊकारादेशः । णाविति किं? दोषः । दुष्टमाचष्टे दुषयति इत्यत्र धातोः स्वरूपग्रहणे तत्प्रत्ययविज्ञानाम्न भवति ॥ णाविति वर्तमाने पुनर्णौग्रहणं के इत्यस्य निवृत्त्यर्थं ॥

४ अज्ञान इति किं? तपः तपस्विनं सेधयति । स्वान्येव वैरं कर्माणि सेधयन्ति ॥ सिद्ध्यति तपस्वी जानीते ज्ञानेन सम्बध्यते आविर्भूतप्रकाशो भवतीत्यर्थः ॥ पक्षं साधयति पक्ष इत्युक्ते स्वपरिगृहीतः पुरुषः स सिद्ध्यति सम्पन्नः कार्ये भवति तं सिद्धकार्यं करोतीत्यर्थः ॥ एवं देवदत्तो जिनदत्तं काम्पिल्ये साधयति ॥

भवति ॥ साधयत्यन्नम्। असीसधत्। ज्ञाने सेधयति मुनिं तपः ॥

१५३० **शमोऽदर्शने** ।४।१।२०३। अदर्शनेऽर्थे शमोऽचो णौ ह्रस्वो भवति अमृञि परे तु वा दीर्घः॥ शमयति रोगं अशीशमत्। दर्शने निशामयति कन्यां। रध इति नम् रन्धयति अररन्धत्। घटादीति ह्रस्वः। जरयति। यिक् शाययति अशीशयत्। छाययति अचिच्छयत्। साययति असीसयत्। दापयति अदीदपत्। जनयति अजीजनत्। दीपयति। भ्राज्भासेति वा ह्रस्वः। अदीदिपत् अदिदीपत्। लीङ् श्लेषणे॥

१५३१ **पूजाप्रलम्भाभिभवे णौ** ।४।१।१८८। पूजाप्रलम्भाभिभवेषु लीङ्लिनात्योरचो णौ आद् भवति॥ जटाभिरालापयते स्वं पूजां प्रापयतीत्यर्थः। लोकमुल्लापयते वञ्चयतीत्यर्थः। श्येनो वर्तिकामपलापयते अभिभवतीत्यर्थः। अन्यत्र लाययति श्लेषयतीत्यर्थः। अथ स्वादिः। अङे इति न घः। प्रहाययति प्राजीहयत्। आपयति आपिपत्। अथ क्र्यादिः। प्रीञ् कान्तितर्पणयोः॥ नक् धूनयति अदूधुनत्। स्तारयति अतस्तरत्। जारयति अजीजरत्॥ व्ली वरणे। पक् व्लेपयति अविव्लिपत्। री रेषणे च। रेपयति अरीरिपत्॥

१५३२ **मारणतोषणनिशाने ज्ञश्च** ।४।१।२०५। मारणादिषु जानातेरचो णौ ह्रस्वो भवति अमृञि तु दीर्घो वा॥ ज्ञपयति मृगान् व्याधः। ज्ञपयति गुरुं शिष्यः। ज्ञपयति शरान् व्याधः। अन्यत्र ज्ञापयति धर्मं गुरुः॥ अथ तुदादिः। वार्। भर्ज्जयति अबभर्ज्जत् भ्रज्जयति अबभ्रज्जत्। अञ्णिति निषेधान्न ङिद्वत्त्वं। कोटयति अचूकुटत्। स्फुर स्फुरणे। चिस्फुरोर्वेति वात्। स्फारयति अपिस्फरत् स्फोरयति अपुस्फुरत्। रभ इति नम्।

---

१ पूजाप्रलम्भन इति किं? विलाययति। वेति नानुवर्तते तदनुवर्तने हि पूर्वेणैव सिद्धत्वाद्वचनं व्यर्थं स्यात्। आङ्पूर्वाल्लीङो लिनातेर्वा आलीयन्ते आलिनन्ति वा॥ जटाभिरालापयते पूजयन्ति परे लोका इमं जटिनं तानसौ जटी जटाभिः प्रयुंक्ते इति णिच्

२ मरणप्रापणं मारणं। तोषणं तुष्टिः। निशानं तेजनं तीक्ष्णीकरणं। अन्ये निशामने इति पठन्ति। निशामनमालोचनं प्रणिधानमाहुः॥

आरम्भयति आररम्भत् । लम्भयति अललम्भत् ॥ अथ तनादिः ॥ घटादीति ह्रस्वः । वनयति अवीवनत् । अथ चुरादिः । पीड गहने । पीडयति अपिपीडत् अपीपिडत् । एवं प्रागुक्तप्रक्रियया शेषं योज्यम् ॥

भावकर्मकर्मकर्तृषु लिङि ॥ वा ञिटि णिलुक् । स्पर्द्धिषीष्ट । पक्षे इट् । स्पर्द्धयिषीष्ट । लिटि स्पर्द्धयांचक्रे । लुङि ञिः अस्पार्द्धि । सौ वा ञिट् । अस्पर्द्धिषाताम् अस्पर्द्धयिषातां । लुटि वा ञिट् स्पर्द्धिता स्पर्द्धयिता । लृङ्लृटोः अस्पर्द्धिष्यत अस्पर्द्धयिष्यत स्पर्द्धिष्यते स्पर्द्धयिष्यते एवं सर्वत्र योज्यं ॥

ञौ केषांचिद्विशेषोऽस्ति । अघटि अघाटि । अव्यथि अव्याथि । अप्रथि अप्राथि । अम्रदि अम्रादि । अत्वरि अत्वारि । अक्रपि अक्रापि । अज्वरि अज्वारि । अनटि अनाटि । अकणि अकाणि । अरणि अराणि । अश्रणि अश्राणि । अज्वलि अज्वालि । अस्मरि अस्मारि । अदरि अदारि । अध्वनि अध्वानि । अरमि अरामि । अवमि अवामि । अगमि अगामि । अनमि अनामि । अयमि अयामि । अक्रमि अक्रामि । अभ्रमि अभ्रामि । अकमीति न ह्रस्वः । अचामि । अग्लपि अग्लापि । अस्नपि अस्नापि । अथ दिवादिः ॥ अशमि अशामि । अरन्धि अरन्धिषाताम् अरन्धयिषाताम् । अजरि अजारि । अजनि अजानि । अज्ञपि अज्ञापि ॥ अथ तुदादिः ॥ अरम्भि अलम्भि । अवनि अवानि । शेषं सुगमम् । इति णिङ्प्रकरणम् ॥

अथ सन् प्रपञ्च्यते । सनीटि द्विर्भावादि । विवन्दिषते ॥

**१५३३ यौ हलादे रलः संस्त्वोः** ।४।१।१५२। इदुदुपान्त्यस्य रलन्तस्य हलादेर्धातोरिडादौ सनि क्त्वाप्रत्यये च किद्वद्वा भवति ॥ मुमुदिषते । मुमोदिषते । जिहृसते । अञ्चिकिषत । तितिजिषते तितेजिषते । अट्टि हिंसातिक्रमणयोः । अट्टिटिषते । स्फुटि विकसने पुस्फुटिषते पुस्फोटिषते ।

१ इश्च उश्च यु तस्मिन् यौ सति । रलिति रल्प्रत्याहारः । सन् च त्वाच संस्त्वौ तयोः संस्त्वोः । याविति किं? विवर्तिषते । वर्तित्वा । हलादेरिति किं? एषिषिषति । एषित्वा । रल इति किं? दिदेविषति देवित्वा । इडीति किं? भुक्त्वा बुभुक्षति ॥

जुगुप्सिषते जुगोपिषते। तितृप्सते तितर्पिषते। चिक्षंसते चिक्षमिषते। षेवृङ् सेवने। न स्विदीति न षिः सिसेविषते। जिघांक्षते जिगाहिषते। क्रादीतीट्। सिस्मयिषते। न क्विदिति नेट्। चुकूषते। घुमीतीस्। मेङ् प्रतिदाने प्रतिमित्सते। दित्सते। पिप्यासते। ओः पुयण्ज्ये इति इत् पिपविषते। डिड्यिषते। दिद्योतिषते दिद्युतिषते। न वृद्भ्य इति नेट्। विवृत्सति। तङीट्। विवर्तिषते विवृत्सति। विवर्धिषते। चिक्लृप्सति चिकल्पिषते। जिज्वरिषति। सनीति दीर्घे किद्वत्त्वाद् सुस्मूर्षते। रिरंसते। बुभुत्सति बुभुत्सते। भ्रस्जृधेति वेट् पिपतिषति। अनिटीस् न च द्विः सस्य लुक् पित्सति। सिषत्सति। क्रुश आह्वानरोदनयोः चुक्रुक्षति। रुरुक्षति जिगीषति। घुत्वादिम्। धित्सति। पिपासति। जिघ्रासति। तिष्ठासति। दित्सति। दिदासति। इट्यकित्त्वादद्। अरिरिषति। तितरिषति। वा इट ईट्। तितरीषति तितीर्षति। चितै संज्ञाने। चिचितिषति चिचेतिषति। न स्विदीति न षिः सिसंङ्क्षति। यियप्सति। अतङीट् जिगमिषति सञ्जिगंसते। निनंसति। यियंसति। चिक्रमिषति प्रचिक्रंसते। बिभ्रमिषति। जिजीविषति। अचिक्षति अचिक्षिषति। दिदृक्षते दिदङ्क्षति। दिधक्षति। शिश्वयिषति। विवत्सति विवदिषति। यियक्षति यियक्षते। विवप्सति विवप्सते। विवक्षति विवक्षते। विवासति विवासते। विव्यासति विव्यासते। जुहूषति जुहूषते। बिभक्षति बिभक्षते। रिरङ्क्षति रिरङ्क्षते। चिखनिषति चिखनिषते। न किदादीति नेट्। जुगुक्षति जुगुक्षते। भ्रस्जृधेति वेट्। शिश्रयिषति शिश्रयिषते। शिश्रीषति शिश्रीषते। जिहीर्षति जिहीर्षते। भ्रस्जृधेति वेट्। भृञ् भरणे। बिभरिषति। बुभूर्षति। निनीषति। अथ अदादिः॥ रुद्विन्मुषीति किद्वत्त्वान्नेङ्। विविदिषति॥

१५३४ इङ्घ्नः।४।१।१३८। इणिगिङादेशस्य गमो हनश्चाचः सनि

---

१ इण् च इक् च इश्च इः। इश्च हन् च इहन् तस्य इघ्नः॥ येन नाव्यवधानं तेन व्यवहितेऽप्युपान्त्यस्य भवति सञ्जिगंस्यते वत्सो मात्रा। सनीङः इति सूत्रेण विज्ञान-व्यतिरिक्तेऽर्थे प्रासस्य भवति॥

दीर्घो भवति ॥ जिघांसति आजिघांसते । मिमार्जिषति मिमृक्षति । रुरुदिषति । रुद्विन्मुषीति किद्वत्त्वान्नेट् सुषुप्सति । अनिनिषति । शिश्वसिषति । सुसूषते । जिजागरिषति । अस्सन्निति वचनसामर्थ्याद्वेट् दिदरिद्रिषति दिदरिद्रासति । शिशासिषति । विवशिषति । रुरूषति । युयूषति । अस्जृधेति वेट् । यियविषति ॥

१५३५ सनीङश्च ।४।२।१२६। इङः एत्योश्च सनि गम् भवति न[1] ज्ञाने ॥ अतङ इतीट् । जिगमिषति अधिजिगमिषति । ज्ञाने । प्रतीषिषति । यियासति । अदादित्वान्नेम् मिमासति । चिख्यासति । ईरिरिषते । सुसूषति । गम् गंस्रोरिति नेट् इन्न इति दीर्घः । अधिजिगांसते । दिद्रिक्षति । दिद्रिक्षते । अस्जृधेति वेट् । ऊर्णुनविषति ऊर्णुनविषते ऊर्णुनुविषति ऊर्णुनुविषते ऊर्णुनूषति ऊर्णुनूषते । तुष्टूषति तुष्टूषते ॥ अथ ह्वादिः । बिभीषति । पुपूर्षति । जिहासते । माङ् माने मित्सते । बुभूर्षति । डुदाञ् दाने । दित्सति दित्सते । विविक्षति विविक्षते । अथ दिवादिः । षिवू तन्तुसन्ताने । सिसेविषति सुस्यूषति । निनृत्सति निनर्तिषति । चिक्षिप्सति ॥

१५३६ राधेर्वधे ।४।१।६१। वधे राधोऽचः सनीस् भवति न च द्विः[2] ॥ अपरित्सति । विव्यत्सति । पुपुक्षति । शक मर्षणे शिक्षति । ष्विदा गात्रप्रक्षरणे । सिष्वित्सति । जिह्वासति । शिशमिषति । ऋधू वृद्धौ ॥

१५३७ सीर्दीप्झीप् सन्यृधाब्ज्ञपेर्न च[3] ।४।१।५७। ऋधः सकारादौ सनीर्द् भवति आपः ईप् ज्ञपेर्झीप् न च द्विः ॥ ईर्त्सति ।

---

१ न ज्ञाने इति विशेषणं इणः नेतरयोरसम्भवात् व्यभिचाराच्च ॥

२ वधे इति किं? आरिरात्सति गुरुं । राधेर्वधे हिंसायामर्थे वर्तमानस्य सकारादौ सनि परे अचः इसादेशो भवति न चास्य द्विः । अपरित्सति आकारस्येस् संयोगस्येति सलुक् ॥

३ आदेशसंयोगे द्विर्वचनं प्रतिषिध्यते तदभावे भवत्यचे । जिज्ञपयिषति । सनीति किं? आप्स्यते ॥

आर्दिधिषति । रिरत्सति रिराधिषति । निनङ्क्षति निनाशिषति । जिजीर्षति जिजरिषति । शिशासति । जिजानिषते । पित्सते । दीङ् क्षये ॥

**१५३८ दीङः सनि** ।४।१।१८४। दीङः सनि आद्वा भवति ॥ दिदासते दिदीषते । मीङ् हिंसायां मित्सते । पिप्रीषते ॥ अथ स्वादिः ॥ वुवूर्षति वुवूर्षते । विवरिषति विवारिषते विवरीषति विवरीषते । दुधूषति दुधूषते । प्रजिघीषति । ईप्सति ॥

**१५३९ दिब्दीब् दन्भः** ।४।१।५८। दन्भस्सदौ सनि दिब्दीपौ वा भवतः न च द्विः ॥ धिप्सति धीप्सति । दिदम्भिषति ॥ अथ क्र्यादिः ॥ मीञ् हिंसायां । मित्सति मित्सते लुलूषति लुलूषते । तिस्तरिषति तिस्तारिषते तिस्तीर्षति तिस्तीर्षते । जिज्ञासति जिज्ञासते ॥ क्लिशौ विबाधने ॥ चिक्लिक्षति चिक्लिशिषति चिक्लेशिषति । मुष स्तेये । मुमुषिषति ॥ अथ तुदादिः । बिभ्रक्षति बिबर्क्षति बिभ्रज्जिषति बिभार्जिषति । चिकृत्सति । चिकर्तिषति ॥ कॄ विक्षेपणे ॥ कादीतीट् । चिकरिषति । जिगरिषति ॥ दृङ् आदरे । दिदरिषते । पिपृच्छिषति । मिमङ्क्षति । विव्रक्षति विव्रश्चिषति । उवृजिजिषति । एषिषिषति । चुकुटिषति । पुस्फुरिषति । आरिप्सते । लिप्सते ॥ अथ तनादिः ॥ षणूञ् दाने। वेट् । सिसानिषति सिसनिषते ॥

**१५४० सनि** ।४।१।२६८। षणः सनि अनिट्याद् भवति ॥ सिषासति सिषासते । अथ रुधादिः । बिभित्सति बिभित्सते । अञ्जिजिषति । एवं सर्वं योज्यं ॥

णिञः सनि । पिस्पर्धयिषतीत्यादि । न स्विदीति न षिः । सिस्वादयिषति । सिसाहयिषति ॥

**१५४१ श्रुसुद्रुप्रुप्लुच्योर्वा** ।४।१।९८। श्रवादीनां सनि द्विर्भावे पूर्वस्योवर्णस्य अवर्णपरे यञि परे इद्वा भवति ॥ च्युङ् ज्युङ् प्रुङ् प्लुङ् गाङ् श्यैङ् गतौ ॥ चिच्यावयिषति चुच्यावयिषति पिप्रावयिषति पुप्रावयिष-

ति । पिप्लावयिषति पुप्लावयिषति । दिद्रावयिषति दुद्रावयिषति । सिस्नावयिषति सुस्नावयिषति ॥

१५४२ संञ्जेर्णिचष्वाणि ।४।१।७४। सञ्जेर्णौ सनि द्विर्भावे पूर्वात् परस्य सस्य षिर्भवति वा ॥ सिषञ्जयिषति सिसञ्जयिषति । णौ सन्ङे इति इक् । जुहावयिषति । वेक् । शुशावयिषति शिश्वाययिषति ॥ अथ अदादिः ॥ स्वपेर्णावुरित्युत् सुष्वापयिषति । लुङ्ल्टृङ्णाविति वा गाङ् । अधिजिगापयिषति । अध्यापिपयिषति ॥ अथ स्वादिः ॥ शिश्रावयिषति शुश्रावयिषति ॥ अथ क्र्यादिः ॥ ज्ञीप्सति । ओः पूयञ्ज्ये इतीत् पिपावयिषति । लिलावयिषति ॥ अथ रुधादिः ॥ अञ्जिजयिषति ॥ शेषं सुगमं ॥ यङः सनि पूर्ववदेव प्रक्रिया न विशेषः । पास्पर्द्धिषते इत्यादि । यङो णिजि पास्पर्द्धयतीत्यादि । सनादीनां भावकर्मकर्मकर्तृष्वविशेषः ॥ किञ्च ॥

२५४३ वोन्मुचोऽनाप्येऽचः ।४।१।५९। मुचः सादौ सन्यचः ओत् वा भवति न च द्विः कर्मकर्तरि ॥ मोक्ष्यते वत्सः स्वयमेव । मुमुक्ष्यते वत्सः स्वयमेव ॥

लट्लृटोरतङ्तङ्वच्छतानशौ । मगादि प्राग्वत् । स्पर्द्धमानः स्पर्द्धमाना स्पर्द्धमानं स्पर्द्धिष्यमाणः स्पर्द्धिष्यमाणा स्पर्द्धिष्यमाणं । बीभत्समानः बीभत्सिष्यमाणः । वन्दमानः । नन्दिष्यमाणः । तितिक्षमाणः तितिक्षि-

---

१ सञ्जेरिति ण्यन्तनिर्देशः । अन्यथा असन्देहार्थं सन्ज इत्येवोच्येत । षत्वभूते सनीति षत्वे प्राप्ते एतदुत्तरार्थं इह तु विनाऽपि षत्वनिर्देशेन सनीत्यपि सिद्ध्यति । शास्वसीति नित्यं षत्वे प्राप्ते विकल्पः ॥

२ मुच्लृ मोक्षणे । न चेदस्य आप्यं कर्म विवक्ष्यते । अनाप्य इति न विद्यते आप्यमस्येत्यनाप्योऽर्थः तस्मिन्वर्तमानादित्यर्थः । अथवा आप्यस्याभावोऽनाप्यं अव्ययीभावः तस्मिन् आप्याभावे सतीत्यर्थः ॥ अच इति किं? अन्त्यस्य मा भूत् । आदेशसन्नियोगे द्विर्वचनप्रतिषेधः ॥ ॥ भूषार्थसन्दुहादीनां च ञियक् ।४।३।४४। भूषार्थानां सन्नन्तानां दुहादीनां तङ्यकर्मकाणां च धातूनां कर्तरि ञिः ञित् यक् च प्रत्ययो भवति ॥ अबुभूषत कन्यां देवदत्तः । अबुभूषत कन्या स्वयमेव ॥

ष्यमाणः। पनायन् पनायन्ती पनायत् पनायिष्यन् पनायिष्यन्ती पनायिष्यती पनायिष्यत् पनिष्यमाण इत्यादि। एवं पणायन् पणायिष्यन् पणिष्यमाणः। स्मयमानः स्मेष्यमाणः। कवमानः कोष्यमाणः। शित्त्वान्नात्। श्यायमानः। लृङ्यात् श्यास्यमानः। धरमाणः धरिष्यमाणः। मथमानः मास्यमानः। दयमानः दास्यमानः। पवमानः पविष्यमाणः। डयमानः डयिष्यमाणः। द्योतमानः द्योतिष्यमाणः। वर्तमानः वर्त्स्यन् वर्तिष्यमाणः। कल्पमानः कल्प्स्यन् कल्पिष्यमाणः। घटमानः घटिष्यमाणः। ज्वरन् ज्वरिष्यन्। स्मरन् स्मरिष्यन्। श्रान् श्रास्यन् राजन् राजमानः। राजिष्यन् राजिष्यमाणः। सीदन् सत्स्यन्। शीयमानः शत्स्यन्। धयन् धास्यन्। पिबन् पास्यन्। जिघ्रन् घ्रास्यन्। धमन् ध्मास्यन्। तिष्ठन् स्थास्यन्। मनन् म्नास्यन्। यच्छन् दास्यन्। ऋच्छन् अरिष्यन्। तरन् तरिष्यन् तरीष्यन्। ऋतीयमानः ऋतीयिष्यमाणः अर्तिष्यन्। चिकित्सन् चिकित्सिष्यन्। स्कन्दन् स्कन्त्स्यन्। गोपायन् गोपायिष्यन् गोपिष्यन् गोप्स्यन्। धूपायन् धूपायिष्यन् धूपिष्यन्। गच्छन् गमिष्यन्। संगच्छमानः सगंस्यमानः। सर्पन् स्रप्स्यन्। सर्प्स्यन्। नमन् नंस्यन्। यच्छन् यंस्यन्। क्रामन् क्रममाणः क्रमिष्यन्। प्रक्रंस्यमानः। भ्रमन् भ्रमिष्यन्। अक्ष्णुवन् अक्षन् अक्ष्यन् अक्षिष्यन् पश्यन्। द्रक्ष्यन्। दशन् दङ्क्ष्यन्। दहन् धक्ष्यन्। श्रयन् श्रयिष्यन्। वसन् वत्स्यन्। वदन् वदिष्यन्। यजन् यजमानः। यक्ष्यन् यक्ष्यमाणः। रजन् रजमानः। रङ्क्ष्यन् रङ्क्ष्यमाणः। दीदांसन् दीदांसमानः। दीदांसिष्यन् दीदांसिष्यमाणः। शीशांसन् शीशांसिष्यमाणः। गूहन् गूहमानः। गूहिष्यन् गूहिष्यमाणः। मोक्ष्यन् घोक्ष्यमाणः। श्रयन् श्रयमाणः। श्रयिष्यन् श्रयिष्यमाणः। नयन् नयमानः। नेष्यन् नेष्यमाणः॥

अथ अदादिः ॥

**१५४४ शतुः क्वसुः** ।१।४।१०३। विदो लटः शतुः क्वसुर्वा भवति ॥ क्कोताविती विदन् विद्वान् वेदिष्यन् । घ्नन् घ्नती । अनदन्तत्वान्न मक् । आघ्नानः । हनिष्यन् आहनिष्यमाणः । सन् भविष्यन् । मृजन् मार्जन् । मार्क्ष्यन्ती मार्क्ष्यती । मार्जिष्यन्ती मार्जिष्यती । वचन् वक्ष्यन् । रुदन् रोदिष्यन् । स्वपन् स्वप्स्यन् । अनन् । जक्षत् जक्षिष्यन् । जाग्रत् जागरिष्यन् । दरिद्रत् दरिद्रिष्यन् । चकासत् चकासिष्यन् । शासत् शासिष्यन् । उशन् वशिष्यन् । रुवन् रविष्यन् । क्षुवन् क्षविष्यन् । संक्ष्णुवानः संक्ष्णविष्यमाणः । स्नुवन् स्नविष्यन् । युवन् यविष्यन् । यन् एष्यन् । यन् इयन् एष्यन् । यान् यास्यन् । आचक्षाणः आख्यास्यमानः । ईराणः ईरिष्यमाणः ॥

**१५४५ आसीनः** ।४।२।४५। आसेरानस्यासीन इति निपात्यते ॥ आसीनः आसिष्यमाणः । वसानः वसिष्यमाणः । शिञ्जानः शिञ्जिष्यमाणः । सुवानः सविष्यमाणः सोष्यमाणः । अधीयानः अध्येष्यमाणः । द्विषन् द्विषाणः । द्वेक्ष्यन् द्वेक्ष्यमाणः ॥

अथ ह्वादिः । बिभ्यत् भेष्यन् । जिह्रियत् ह्रेष्यन् । इयृत् अरिष्यन् । मिमानः मास्यमानः । बिभ्रत् बिभ्राणः । भरिष्यन् भरिष्यमाणः । नेनिजत् नेनिजानः । नेक्ष्यन् नेक्ष्यमाणः ॥ अथ दिवादिः ॥ नृत्यन् नर्त्स्यन् नर्तिष्यन् । विध्यन् व्यत्स्यन् । पुष्यन् पोक्ष्यन् । शाम्यन् शमिष्यन् । रध्यन् रधिष्यन् । रत्स्यन् । नश्यन् नङ्क्ष्यन् नशिष्यन् । तृप्यन् त्रप्स्यन् तर्प्स्यन् तर्पिष्यन् श्यन् शास्यन् । जायमानः जनिष्यमाणः । विद्यमानः वेत्स्यमानः । रज्यन् रज्यमानः । रङ्क्ष्यन् रङ्क्ष्यमाणः ॥ अथ स्वादिः ॥ वृण्वन्

१ ककारः सजूरहस्स शति सामान्यार्थः । विदेः शत्रन्तः क्रियाशब्दो रूढिशब्दश्च तत्र क्रियाशब्दत्वे विकल्पो रूढौ नित्य एव ॥ ल्यब्क्वाविति ङिद्वत्त्वे सिद्धे ककारः क्वस उसित्याद्यर्थः ॥

वृण्वानः । वरिष्यन् वरीष्यन् वारिष्यमाणः वरीष्यमाणः । शृण्वन् श्रोष्यन् । आप्नुवन् आप्स्यन् ॥ अथ क्र्यादिः ॥ प्रीणन् प्रीणानः । प्रेष्यन् प्रेष्यमाणः । पुनन् पुनानः । पविष्यन् पविष्यमाणः । जानन् जानानः ज्ञास्यन् ज्ञास्यमानः ॥

अथ तुदादिः ॥ भृज्जन् भृज्जमानः भ्रक्ष्यन् भर्क्ष्यन् भ्रक्ष्यमाणः भर्क्ष्यमाणः । कृन्तन् कर्त्स्यन् कर्तिष्यन् कृषन् क्रक्ष्यन् कर्क्ष्यन् । सृजन् स्रक्ष्यन् । मज्जन् मङ्क्ष्यन् । मृशन् म्रक्ष्यन् मर्क्ष्यन् । इच्छन् एषिष्यन् । कुटन् कुटिष्यन् । कुवमानः कुविष्यमाणः । उद्विजमानः उद्विजिष्यमाणः । लभमानः लप्स्यमानः ॥ अथ रुधादिः ॥ भिन्दन् भिन्दानः भेत्स्यन् भेत्स्यमानः । इन्धानः इन्धिष्यमाणः । अञ्जन् अञ्जिष्यन् । अञ्जोऽसेरिति वा इट् । इत्यादि सर्वं प्रागुक्तप्रक्रियया योज्यं ॥

पूर्ववल्लिटः अतङ्वत् तङ्वत् क्सुकानौ ॥ पस्पर्द्धानः पस्पर्द्धाना पस्पर्द्धानं । बबाधानः । ववन्दानः । जहदानः । सेहानः । आनृजानः । त्रेपाणः । पनायांचकृवान् । ऋच्यामुम् । पनायांचकुषी । पनायांचकृवत् पेनानः । एवं पणायांचकृवान् पेणानः । कामयाञ्चक्राणः चकमानः । अयांचक्राणः । दयांचक्राणः । ऊयांचक्राणः । ईक्षांचक्राणः कासांचक्राणः । सस्रसानः । दिग्यानः । दिद्युतानः । विव्यथानः । एकाच्त्वादिट् । नेटिवान् । सस्मृवान् । आदन्तत्वादिट् । शश्रिवान् । फेणिवान् । पफण्वान् । स्वेनिवान् सस्वन्वान् । रेजिवान् रराज्वान् रेजानः रराजानः । भ्रेजानः बभ्राजानः । वेमिवान् । ववन्वान् । जिगिवान् विजिग्यानः । ऋ आरिवान् । पुनः किद्वद्वचनान्नाद् तितीर्वान् । ऋतीयांचक्राणः आनृत्वान् । चिकित्सांचकृवान् चिकित्वान् । गोपायांचकृवान् जुगुप्वान् । धूपायांचकृवान् दुधूप्वान् ॥

१५४६ **गमहनविदविशदृशां वा** ।४।२।१६८। गमादिभ्यः क्वस इड्वा भवति ॥ जग्मिवान् जगन्वान् । सञ्जग्मानः । भ्रेमिवान् बभ्रण्वान् । ईर्ष्यांचकृवान् देलिवान् फेलिवान् । शशस्वान् । वेद् ददाशिवान् ददश्वान् ।

आनृह्वान् । वेक् । शुशुवान् शिश्विवान । ऊषिवान् । ऊदिवान् । ईजिवान् ईजानः । ऊपिवान् ऊपानः । ऊहिवान ऊहानः । ऊयिवान् ऊविवान् ववियान् ऊयानः ऊवानः ववानः । भेजिवान् भेजानः । ररञ्ज्वान् ररञ्जानः । चखन्वान् चख्नानः । दीदांसांचकृवान् दीदांसांचक्राणः । शीशांसांचकृवान् शीशांसांचक्राणः । जुगुह्वान् जुगुहानः । शिश्रिवान् शिश्रियाणः । निनीवान् निन्यानः ॥ अथ अदादिः ॥ विविदिवान् विदांचकृवान् विविद्वान् । जघ्निवान् जघन्वान् आजघ्नानः । बभूवान् । ममृज्वान् । ऊचिवान् ॥

१५४७ श्रुविण्वस्सदोऽनुवचश्च कर्तरि भूते ।१।४।८१। श्रुवादिभ्यः कर्तरि भूतसामान्ये लिटः क्वसुर्भवति अनुवचः कानः ॥ अनूचानः साङ्गे प्रवचनेऽधीती । रुरुद्वान् । सुषुप्वान् । आनिवान् । शश्वस्वान् । जजक्ष्वान् । जजागृवान् । जागरांचकृवान् । दरिद्रांचकृवान् । चकासांचकृवान् । शिशिष्वान् । ऊशिवान् । संचुक्ष्णुवानः । सुष्णुवान् । नुनुवान् । ईयिवान् । ययिवान् । चख्यानः चचक्षाणः । ईरांचक्राणः । आसांचक्राणः । सुषुवाणः । अधिजगानः । ऊर्णुनुवान् ऊर्णुनुवानः । तुष्टुवान् तुष्टुवानः ॥

अथ ह्वादिः ॥ बिभयांचकृवान् बिभीवान् । जिह्रयांचकृवान् जिह्रीवान् । पपृवान् पुपूर्वान् । आरिवान् । जहिवान् । ममानः । बिभरांचकृवान् बिभरांचक्राणः । बभृवान् बभ्राणः । दधिवान् दधानः ॥ अथ दिवादिः ॥ त्रेसिवान् तत्रस्वान् । ऊचिवान् । जिजीर्वान् । शशिवान् । जज्ञानः ।

---

१ सूत्रेण पृथक् विभक्तिकरणं श्रुवादिभ्यः क्वसुरेव अनुवचः कान एव न क्वसुर्भवतीत्येतदर्थं एव पृथग्निर्देशः । निश्चयेन देशः कथनं निर्देशः ॥ ईयिवान् द्विर्वचनवदिडपि । द्विर्वचन एकादेशे कृते एकाजेव धातुरिति नित्यः ॥ ततः परत्वादिटि कृतेऽत्र द्विर्वचनम् ॥ कर्तरीति किं? अनूक्तमित्येवान्यत्र कानो भावकर्मणोरपि प्राप्नोति । क्वसुस्त्वतङिदिति नियमान्न प्राप्नोति । अत एव सम्पूर्वात् श्रुवोऽकर्मकात् व्यतिहृते च कर्तरि अपि क्वसुर्न भवति ॥ भूतग्रहणं भूतसामान्यप्रतिपत्त्यर्थम् । नाभूते लिडस्ति तत्र चात एव वचनात् आदेशपक्षे लिडनुमीयते तदभावे लुङेव अगात् । अनद्यतनार्थप्रकरणादिनिरपेक्षा नैतेभ्यः प्रतिपत्तिरस्ति । भूतसामान्येऽपि कृतेऽर्थप्रकरणापेक्षायां च सामान्यशब्दानामपि विशेषे वृत्तिरस्ति इति न तत्र यत्नः क्रियते इति ॥

पिप्रियाणः ॥ अथ स्वादिः ॥ तिस्तीर्वान् तिस्तिराणः । ववृवान् वव्राणः । दुधूवान् दुधुवानः । शुश्रुवान् । प्रांजिघिवान् । देभिवान् ॥ अथ क्र्यादिः ॥ चिकीर्वान् चिकिराणः । शिशीर्वान् शशृवान् । पुपूर्वान् पपृवान् । दिदीर्वान् ददृवान् । जिजीवान् जज्ञानः । श्रेथिवान् शश्रथ्वान् । ग्रेथिवान् जग्रथ्वान् । अश भोजने । नञ्पूर्वत्वे ॥

**१५४८ अनाश्वान्** ।१।४।८२। नञ्पूर्वादश्नातेः अनाश्वान् इति निपात्यते ॥ अथ तुदादिः । बभ्रज्ज्वान् बभ्रज्जानः । विश प्रवेशने । वेट् । विविशिवान् विविश्वान् उज्झांचकृवान् । ईषिवान् । विविच्वान् । सस्वजानः ॥ अथ रुधादिः । ईधानः । समिन्धांचक्राणः । अनज्वान् ॥ अथ चुरादिः ॥ लुण्टयांचकृवान् । इत्यादि सर्वं नेयम् ॥

अथोपसर्गाधिकारा उच्यन्ते ॥

**१५४९ क्रीञ्तन्यवस्यादेर्लुग्बहुलम्** ।४।२।२०९। क्रीञ्तनोः परतः अवस्यादेरतो लुग् बहुलं भवति ॥ वक्रीणीते अवक्रीणीते । वतनोति अवतनोति ॥

**१५५० धाञ्नह्यपेः** ।४।२।२१०। धाञ्नह्योः परतः अपेरतो लुग्वा भवति ॥ पिदधाति अपिदधाति । पिनह्यति अपिनह्यति ॥

**१५५१ सम्पर्युपात् कृञः सड् भूषसमवाये** ।४।२।२११। सम्पर्युपेभ्यः परस्य कृञः सड् भवति भूषसमवाययोः ॥ परिष्करोति । उपस्करोति । संस्करोति दध्योदनमित्यादि ॥

**१५५२ उपाद्विकारप्रतियत्नवाक्याध्याहारे** ।४।२।२१२।

१ अलंकारे समवाये समुदाये चार्थे । सड्डिति द्विसकारको निर्देशः । तेन सकार एव सड्भवतीति समचिस्करदित्यादौ षिर्न भवति ॥ परिष्करोतीत्यत्र 'सदतुस्वञ्जां वा त्वटि' इति षिः ॥

२ प्रकृतेरन्यथाभावो विकारः । पुनः पुनर्यत्यते इति यत्नः । सतोऽर्थस्य सम्बन्धाय वृद्धये तादवस्थ्याय वा समीहा प्रतियत्नः । गम्यमानार्थस्य वाक्यैकदेशस्य स्वरूपेणोपादानं वाक्याध्याहारः ॥ उपस्कुरुते प्रतियत्नं करोतीत्यर्थः । सोपस्कराणि सूत्राणि सवाक्याध्याहाराणीत्यर्थः ॥

उपात् परस्य कृञः सड् भवति विकारप्रतियत्नवाक्याध्याहारेषु ॥ गच्छत्नुपस्कुरुते । एधो दकस्योपस्कुरुते । पदमुपस्कुरुते ॥

१५५३ **किरतेर्लवने** ।४।२।२१३। उपात् किरतेः सड् भवति लवने सति ॥ उपस्किरन् लुनाति ॥

१५५४ **प्रतेश्च वधे** ।४।२।२१४। प्रतेरुपाच्च परस्य किरतेस्सड् भवति हिंसायाम् ॥ प्रतिस्कीर्णं ह उपस्कीर्णं ह ते वृषल भूयात् । हिंसानुबन्धी विक्षेपस्ते भूयादित्यर्थः ॥

१५५५ **चतुष्पद्यपाद्धर्षात्**[1] ।४।२।२१५। अपात् किरतेस्सड् भवति हर्षाच्चतुष्पदि कर्तरि ॥ अपस्किरते हृष्टो गौः ॥

१५५६ **विशुनि**[2] **भक्षाश्रयाय** ।४।२।२१६। अपात् किरतेस्सड् भवति भक्षाय वौ कर्तरि आश्रयाय च शुनि च ॥ अपस्किरते कुक्कुटः । अपस्किरते श्वा ॥

१५५७ **प्रात्तुम्पतेर्गवि** ।४।२।२१८। प्रात्परस्य तुम्पतेः सड् भवति गवि कर्तरि ॥ प्रस्तुम्पति गौः ॥

अथ षत्वविधिरुच्यते ॥

१५५८ **प्रादुस्सश्चाच्यस्तेःषिः** ।४।२।२१९। उपसर्गात् प्रादुसश्च परस्यास्तेः सस्य अचि ये च परे षिर्भवति ॥ अत्रापि क्विञः सः षिः । शर्नम इति परिभाषाऽऽश्रीयते । अभिषन्ति अभिष्यात् । प्रादुष्षन्ति प्रादुष्ष्यात ॥

१५५९ **सुञ्स्**[3]**सोस्तुस्तुभोऽव्यप्यड्डेः** ।४।२।२२०। उपसर्गात्

---

१ हर्षाच्चेच्चतुष्पदि विषये तदर्थो भवति । अपस्किरते हर्षाद्विलिख्य विक्षिपतीत्यर्थः । हर्षादित्यत एव निर्देशाद्धेतौ पञ्चमी ॥

२ विश्च श्वाच विश्वा तस्मिन् विशुनि । विः पक्षिपरमात्मनोः । कुक्कुटोऽपस्किरते भक्षार्थं विलिख्य विक्षिपतीत्यर्थः । अपस्किरति श्वा आश्रयाय विलिख्य विक्षिपतीत्यर्थः ॥ भक्षाश्रयायेति किं? अपस्किरति श्वा ओदनं पिंडमाशितुः ॥

३ उपसर्गादित्येव । उपसर्गादिति किं? दधि सुनोति । पदात्परस्याप्राप्ते वचनं । 'क्विञः सः षिः । शर्नमः ।' इति विनियम्यते तत्रापि सति न प्राप्नोतीति अड्ग्रहणं ।

परेषां अद्विरुक्तानां सुश्रादीनां सस्य षिर्भवति मध्ये अटि सत्यपि असत्यपि ॥ अभिषुणोति अभ्यषुणोत् । अभिषुवति अभ्यषुवत् । परिष्यति पर्यष्यत् । अभिष्टौति अभ्यष्टौत् ॥ ष्टुभुञ् स्तम्भे । अभिष्टोभते अभ्यष्टोभत । द्विरुक्तानां न भवति । अभिसुसूषति षो अन्तकर्मणि । अभिसिषासति ॥

१५६० **स्थासेनिषेधसिचसञ्जां द्यटि** ।४।२।२२१। उपसर्गात् स्थादीनां सस्य षिर्भवति द्विर्भावे अटि च सत्यपि ॥ अधिष्ठास्यति अधितष्ठौ अध्यष्ठास्यत् । अभिषेणयाति अभिषिषेणयिषति अभ्यषेणयत् । प्रतिषेधति प्रतिषिषेध प्रत्यषेधत् । अभिषिञ्चति अभिषिषेच अभ्यषिञ्चत् । अभिषजति अभिषिषङ्क्षति अभ्यषजत् ॥

१५६१ **स्तम्भोऽङ्प्रतिस्तब्धनिस्तब्धे** ।४।२।२२२। उपसर्गात् स्तम्भेः षिर्भवति ङप्रत्ययं प्रतिस्तब्धनिस्तब्धौ च वर्जयित्वा द्विर्भावे अटि च सत्यपि ॥ विष्टभ्नाति वितष्टम्भ व्यष्टभ्नात् । अङेत्यादि किं? । व्यतस्तम्भत् प्रतिस्तब्धो देवदत्तः । निस्तब्धः चैत्रः ॥

१५६२ **अवाच्चालम्बनाविदूर्यौर्ज्ये**[1] ।४।२।२२३। अवात् स्तम्भेः सस्य षिर्भवति आलम्बनाविदूर्यौर्जित्येष्वर्थेषु द्यटि सत्यपि न ङे ॥ अवष्टभ्नाति दुर्गम् अवतष्टम्भ अवाष्टभ्नात् । अवष्टभ्नाति शरत् अवतष्टम्भ अवाष्टभ्नात् । अवष्टभ्नाति वृषलः अवतष्टम्भ अवाष्टभ्नात् । ङे । अवातस्तम्भत् ॥

१५६३ **वेश्च**[2] **स्वनोऽशने** ।४।२।२५४। वेरवाच्च परस्य स्वनतेः सस्य षिर्भवति अशने अर्थे द्यटि सत्यपि ॥ विष्वणति विषष्वाण व्यष्व-

---

१ अङे इत्यस्यानुकर्षणार्थश्चकारः । आलम्बनमाश्रयणं । अविदूरस्य भाव आविदुर्यं और्जित्यमौत्कर्ष्यं एतेष्वर्थेषु और्जित्यमूर्जितत्वं । ऊर्ज बलप्राणनयोः ॥

२ वि इत्येतस्मादवाच्चोपसर्गात्परस्य 'स्वन अवतंसने' इत्येतस्य धातोरशने भोजनेऽर्थे वर्तमानस्य सकारस्य द्वयोरटि च सत्यसत्यपि षिरादेशो भवति ॥ विष्वणति भुङ्क्ते इत्यर्थः ॥

णत् अवष्वणति अवषष्वाण अवाष्वणत् । अभोजने विस्वमति मृदङ्गः । अवस्वनति घण्टा ॥

**१५६४ सदोऽप्रतेर्लौ त्वादेः** ।४।२।२२५। अप्रतेरुपसर्गात् सदः सस्य षिर्भवति द्यटि सत्यपि लिटि तु द्वयोरादेरेव भवति ॥ निषीदति निषाषद्यते न्यषीदत् निषसाद । अप्रतेरिति किं? । प्रतिसीदति ॥

**१५६५ स्वञ्जेश्च** ।४।२।२२६। उपसर्गात् स्वञ्जेः सस्य षिर्भवति द्यटि सत्यपि लिटि तु द्वयोरादेः ॥ परिष्वजते । परिषिष्वङ्क्षते पर्यष्वजत परिषस्वजे ॥

**१५६६ परिनिवेः सेवः** ।४।२।२२७। परिनिविभ्यः सेवः सस्य षिर्भवति द्यटि सत्यपि ॥ षेवृङ् सेवने । परिसेवते परिषिषेविषते पर्यषेवत निषेवते निषिषेविषते न्यषेवत विषेवते विषिषेविषते व्यषेवत ॥

**१५६७ सद्स्तुस्वञ्जां वा त्वटि** ।४।२।२२९। परिनिविभ्यः सडादीनां सस्य षिर्भवति अटि तु वा ॥ परिष्करोति पर्यष्करोत् पर्यस्करोत् । परिष्टौति पर्यष्टौत् पर्यस्तौत् । निष्टौति न्यष्टौत् न्यस्तौत् । विष्टौति व्यष्टौत् व्यस्तौत् । परिष्वजते पर्यष्वजत पर्यस्वजत । निष्वजते न्यष्वजत न्यस्वजत । विष्वजते व्यष्वजत व्यस्वजत ॥

**१५६८ सीवूसहोऽङेऽसोः** ।४।२।२३०। परिनिविभ्यः परस्य सीवूसहोः सस्य अङे षिर्भवति वा त्वटि न सोभावे ॥ परिषीव्यति पर्यषीव्यत् पर्यसीव्यत् । निषीव्यति न्यषीव्यत् न्यसीव्यत् । विषीव्यति व्यषीव्यत् व्यसीव्यत् । परिषहते पर्यषहत पर्यसहत । निषहते न्यषहत न्यसहत । विषहते व्यषहत व्यसहत । अङ इति किं? । पर्यसीषिवत् न्यसीषिवत् व्यसीषिवत् पर्यसीषहत् न्यसीषहत् व्यसीषहत् । असोरिति किं? । परिसोढव्यः निसोढा विसोढा ॥

**१५६९ स्यन्दतेर्वाऽभ्यनोश्चाप्राणिनि** ।४।२।२३१। अभ्यनोः परिनिविभ्यश्च स्यन्दतेः सस्य षिर्भवति वा अप्राणिनि कर्तरि सति ॥

अभिष्यन्दते अभिस्यन्दते । अनुष्यन्दते अनुस्यन्दते । परिष्यन्दते परिस्यन्दते । निष्यन्दते निस्यन्दते । विष्यन्दते विस्यन्दते तैलं । प्राणिनि अभिस्यन्दते मत्स्यः ॥

**१५७० वेः स्कन्दोऽक्तयोः** ।४।२।२३२। वेः स्कन्दः सस्य षिर्भवति वा न क्तयोः ॥ विष्कन्दति विस्कन्दति । अक्तयोरिति किं? । विस्कन्नः विस्कन्नवान् ॥

**१५७१ परेः** ।४।२।२३३। परेः स्कन्दः सस्य षिर्वा भवति ॥ परिष्कन्दति परिस्कन्दति । परिष्कन्नः परिस्कन्नः ॥

**१५७२ स्फुरस्फुलोर्निर्नेः** ।४।२।२३४। निर्निभ्यां स्फुरस्फुलोः सस्य षिर्वा भवति ॥ निःष्फुरति निःस्फुरति निष्फुरति निस्फुरति । निःष्फुलति निःस्फुलति निष्फुलति निस्फुलति ॥

**१५७३ वेः** ।४।२।२३५। वेः स्फुरस्फुलोः सस्य षिर्वा भवति ॥ विष्फुरति विस्फुरति । विष्फुलति विस्फुलति ॥

**१५७४ स्कभ्नः** ।४।२।२३६। वेः स्कभ्नातेः सस्य षिर्नित्यं भवति ॥ विष्कभ्नाति । श्नावचनान्नैधादेः । विस्कम्भते ॥

**१५७५ निर्दुस्सुवेस्समसूतिस्वपोऽवः** ।४।२।२३७। निसादिभ्यः समसूत्योरवकारस्य स्वपेर्धातोश्च सस्य षिर्भवति ॥ निष्षमः दुष्षमः सुषमः विषमः निष्षूतिः दुष्षूतिः सुषूतिः विषूतिः निष्षुप्यते दुष्षुप्तः सुषुप्तिः विषुप्तिः । अव इति किं? । दुःस्वप्नः सुस्वप्नः ॥

---

१ अक्तयोः न चेत् क्तक्तवतू परतो भवतः । द्विवचनादुभयोः परिग्रहः ॥ क्तयोरग्रे नानुवृत्तिः ।

२ निस् दुस् सु वि इत्येतेभ्यः उपसर्गेभ्यः समशब्दस्य सूतिशब्दस्य च अवकारस्य स्वपेर्धातोःषिरादेशो भवति ॥ समसूतीति प्रातिपदिकग्रहणं । तेनेह न भवति निस्समतिः । दुस्समतिः । निस्सूतं दुस्सूतं ॥ अन्ये धातुग्रहणमाहुः । तेषां निष्षमति दुष्षमति ॥

अथ णत्वविधिर्दर्श्यते ॥

**१५७६ हिनुमीनानिणोऽदुरोऽन्तरश्च णः** ।४।२।२३८। षून्नो ण इति परिभाषोपतिष्ठते । अदुर उपसार्गोदन्तरश्च परस्य हिनु मीना आनि इत्येतेषां णादेशस्य च नस्य णो भवति ॥ प्रहिणोति प्रमीणाति प्रभवाणि प्रणयति अन्तर्णयति अन्तर्भवाणि । अदुर इति किं? । दुर्नयति ॥

**१५७७ शः** ।४।२।२३९। अदुर उपसर्गोदन्तरश्च परस्य शकारान्तस्य धातोर्नस्य णो भवति ॥ प्रणश्यति अन्तर्णश्यति । अदूर इति किं? । दुर्नश्यति । अशान्तत्वे णो न भवति । प्रनष्टः ॥

**१५७८ नेर्घुमानद्गत्पत्पदिस्यतियातिवातिद्रातिप्सातिहन्तिवपिवहिशमूच्चिञ्देग्धौ** ।४।२।२४०। अदूर उपसर्गोदन्तरश्च परस्य नेर्घ्वादौ धातौ परे णो भवति ॥ प्रणिदधाति प्रणिददाति । प्रणिमयते प्रणिमिमीते । णद अव्यक्ते शब्दे । प्रणिनदति प्रणिगदति । प्रणिपतति प्रणिपद्यते । प्रणिष्यति । प्रणियाति । प्रणिवाति । प्रणिद्राति । प्रणिप्साति । प्रणिहन्ति । प्रणिवपति । प्रणिवहति । प्रणिशाम्यति । प्रणिचिनोति । प्रणिदेग्धि । अन्तर्णिदधाति इत्यादि । अदुर इति किं? । दुर्निदधाति दुर्निदेग्धि ॥

---

१ हिनु गतिवृध्योःस्वादिः । मीम् हिंसायां । दुर्वर्जितात् ॥ हिन्वादीति किं? प्रनृत्यति । नुति नन्दि नशि नर्दि नक्कि नादि नाट्टणां णोपदेशाभावान्न भवति ॥ प्रवपानि आकारान्तनपुंसकलिङ्गोऽयं । मासानीत्यानीत्यनर्थकं लेडादेशोऽर्थवान् इति न भवति ॥ प्रगतो नायकोऽस्मात्प्रनायको देशः प्रादेरत्र प्रत्ययार्थेन योगो न धातुनेत्यनुपसर्गत्वम् । परिनदनमिति नवनशब्दस्य क्षुभ्नादौ पाठान्न भवति । प्रनंक्ष्यतीत्यत्र षात्प्राक्त्वसत्वान्न भवति

२ णश्चोरणोपदेशात्पूर्वेणासिध्दे विध्यर्थो योगः ॥

३ नेरिति नि इत्युपसर्गस्य । घु इति सञ्ज्ञा । मा नद् गद् पत् पदि स्यति ( षो अन्तकर्मणि ) याति वाति द्राति ( द्रा कुत्सायाम् ) प्साति ( प्सा रक्षणे । ) हन्ति वपि शमू चिञ् देग्धौ ( दिहि उपदेहे ) इत्येतेषु परतः । देग्धीत्यस्य सप्तमी । तिप्निर्देशो यङ्लुब्निवृत्त्यर्थः । तेन प्रनिसासाति प्रनिसासेतीत्यादौ न भवति । अन्यत्र भवति । प्रणिददाति ॥ मा मेङ् माङोर्ग्रहणं

**१५७९ शेषेऽषान्तकखपाठे वा** ।४।२।२४१। अदुरं उपसर्गादन्तरश्च परस्य नेः शेषे घ्वादिभ्योऽन्यस्मिन् धातुपाठे निर्दिष्टे परे णो वा भवति न षान्ते कखादौ च ॥ प्रणिपचति प्रनिपचति । अन्तर्णिपचति अन्तर्निपचति । प्रणियोजति प्रनियोजति । अन्तर्णियोजति अन्तर्नियोजति । अषान्तकखेति किं? । प्रनिपिनष्टि । प्रनिकिरति । प्रनिखनति । पाठ इति किं? । प्रनिसासाति प्रनिपापचीति ॥

**१५८० परेरनितेः** ।४।२।२४२। परेरनितेर्नस्य णो वा भवति ॥ पर्यनिति पर्यणिति ॥

**१५८१ अन्ते च** ।४।२।२४३। अदुर उपसर्गादन्तरश्च परस्यानितेर्नस्य णो वा भवति पदान्ते अपदान्ते च ॥ प्राणिति अन्तराणिति । हे प्राण् हे पराण् । अदुर इति किं? । दुरनिति ॥

**१५८२ द्वयोः** ।४।२।२४४। अदुर उपसर्गादन्तरश्च परस्यानितेर्द्विर्भावे द्वयोर्णो भवति ॥ प्राणिणिषति प्राणिणत् । अन्तराणिणिषति अन्तराणिणत् ॥

**१५८३ घ्नः** ।४।२।२४५। अदुर उपसर्गादन्तरश्च परस्य हनो नस्य णो भवति ॥ प्रहण्यते अन्तर्हण्यते ॥

**१५८४ म्वि वा** ।४।२।२४६। अदुर उपसर्गादन्तरश्च परस्य हनो नस्य मवयोर्णो वा भवति ॥ प्रहण्मि प्रहन्मि । प्रहण्वः प्रहन्वः । अन्तर्हण्मि अन्तर्हन्मि । अन्तर्हण्वः अन्तर्हन्वः ॥

**१५८५ निंसनिक्षनिन्दः कृति वा** ।४।२।२४८। अदुर उपसर्गादन्तरश्च परस्य निंसादीनां नस्य णो वा भवति कृति परे ॥ णिसुङ् चुम्बने । णिक्ष चुम्बने । णिदु कुत्सायां । प्रणिंसनं प्रनिंसनं । प्रणिक्षणं प्रनिक्षणं । प्रणिन्दनं प्रनिन्दनम् । अन्तर्णिंसनमित्यादि ॥

---

१ शेषे घ्वादिभ्योऽन्यस्मिन्धातौ । पाठे धातूपदेशे । अषान्ते अकखादौ परे इत्यर्थः ॥

१५८६ अंशोऽवोऽ भाभूपूञ्कंगंप्यायिवेपः ।४।२।२४९। अषकारान्तादुर, उपसर्गादन्तरश्च पराद्धातोः परस्य कृतः अचः परस्य नस्य णो भवति न भादेः ॥ प्रयाणं महाणम् अन्तर्याणं । अष इति किं? । निष्पानम् । अच इति किं? । प्रभग्नः । अभादेरिति किं? । प्रभानं प्रभवनं प्रपवनं प्रकमनं प्रगमनं प्रप्यायनं । टुवेपृङ् चलने । प्रवेपनं ॥

१५८७ नमीजादेरेव ।४।२।२५०। अषकारान्तादुर उपसर्गादन्तरश्च परस्य इजादेरेव धातोर्नमि सति अचः परस्य कृतो नस्य णो भवति ॥ इखु गतौ । प्रेङ्खणं परेङ्खणम् । इजादेरिति किं? । मकुङ् मण्डने । प्रमङ्कनं ॥

१५८८ णिहलिजुपान्त्याद्वा ।४।२।२५१। अषकारान्तादुर उपसर्गादन्तरश्च परात् ण्यन्तात् हलः परो य इच् तदुपान्त्याच्च धातोरचः परस्य कृतो नस्य णो भवति वा न भादेः ॥ प्रयापणं प्रयापनं । कुप क्रोधे । प्रकोपणं प्रकोपनं । न भादेः प्रभापना प्रभावना प्रपावना प्रकामना प्रगमना प्रप्यायना प्रवेपना ॥

१५८९ रो लोऽयौ ।४।२।२५३। उपसर्गस्य रेफस्य अयिधातौ परे लो भवति । पलायते ॥

१५९० निष्प्रतेर्वा ।४।२।२५४। निष्प्रत्यो रेफस्य अयिधातौ परे

---

१ कृतीति वर्तते । अषकारान्तादुर उपसर्गादन्तरश्च परात् भू भा पूञ् कम् गम् प्यायि वेप् इत्येतद्वर्जिताद्धातोः परस्य कृत्प्रत्ययस्थस्य नकारस्याचः परस्य णकारादेशो भवति ॥ अच इति किं? निष्पानं । कृतीति किं? प्रवापेन । पूञिति ञकारानुबन्धोपादानात् ङकारानुबन्धस्य भवति प्रवपणं प्रवमाणः ॥ अषकारादित्युपसर्गादित्यस्य विशेषणं न धातोः ॥

२ हलः पर इच् हलिच् स उपान्त्यं यस्य सः हलिजुपान्त्यः । णिश्च हलिजुपान्त्यश्च तस्मात् । हल्ग्रहणं किं? प्राहणं पराहणं । इजुपान्त्यस्य हलन्तत्वात् व्यभिचारात् हलः परो य इच् तदुपान्त्यादिति सम्बध्यते । इजुपान्त्यादिति किं? प्रवपणं । अष इति किं? निष्पावनं ॥

लो वा भवति ॥ निलयते निरयते । प्लत्ययते प्रत्ययते इत्यादि । शेषं शास्त्रे ज्ञातव्यम् ॥

अथ तङ्विधिरभिधीयते ॥

१५९१ **ऊह्यसोर्वोपसर्गात्** ।१।४।३। उपसर्गात् पराभ्यामूहि असु इत्येताभ्यां परस्य लस्तङ् वा भवति ॥ समूहति समूहते । असु क्षेपणे । निरस्यति निरस्यते ॥

१५९२ **युंजोऽजुदः** ।१।४।४। अजन्तादुदश्चोपसर्गात् परात् युजृञो लस्तङ् भवति ॥ प्रयुङ्क्ते उद्युङ्क्ते ॥

१५९३ **परिव्यवात् क्रियः** ।१।४।६। परिव्यवेभ्यः क्रीञो लस्तङ् भवति ॥ परिक्रीणीते विक्रीणीते अवक्रीणीते ॥

१५९४ **पराविर्जेः** ।१।४।७। पराविभ्यां जेर्लस्तङ् भवति ॥ पराजयते विजयते ॥

१५९५ **समस्तृतीयया** ।१।४।९। तृतीयया युक्तात् समश्चरेर्लस्तङ् भवति ॥ अश्वेन संचरते ॥

१५९६ **क्रीडोऽकूजे** ।१।४।१०। समः क्रीडो लस्तङ् भवति न कूजने ॥ क्रीडृ विहारे संक्रीडते । कूजने संक्रीडति रथः ॥

१५९७ **पर्यन्वाङः** ।१।४।११। पर्यन्वाङ्भ्यः क्रीडो लस्तङ् भवति॥ परिक्रीडते अनुक्रीडते आक्रीडते ॥ शपनाथ इति तङ् ॥ शपि आक्रोशे । देवदत्ताय शपते । अन्यत्राक्रोशे शपति चैत्रं । नाथृङ् णाथृङ् याच्ञाशीरुपतापैश्वर्येषु । सर्पिषो नाथते । याच्ञादौ नाथति । कलासु शिक्षते । अन्यत्र शिक्षाति । ओदनं भुङ्क्ते । त्राणे भुवं भुनक्ति ॥

---

१ अच उद् च तस्मात् अजुदः ॥

२ "कर्मणो दचरः ।१।४।८।" इत्यतश्चर इत्यनुकृष्यते । तथाच सम्पूर्वाच्चरतेस्तृतीयान्तेन योगे सतीति लभ्यते ॥ तृतीययेति किं? उभौ लोकौ सञ्चरति ॥

**१५९८ हृञो गतिताच्छील्ये** ।१।४।१३। गतिताच्छील्ये हृञो लस्तङ् भवति ॥ पैतृकमनुहरते अश्वः। पितुरागतं गमनं स्वभावतो गच्छतीत्यर्थः ॥

**१५९९ न्यः सम्माननाचार्यकभृत्युत्सञ्जनज्ञानव्ययविगणने** ।१।४।१४। सम्माननादिष्वर्थेषु णीञो लस्तङ् भवति ॥ सम्मानने नयते वैद्ये। आचार्यके माणवकमुपनयते। भृतौ कर्मकरानुपनयते। उत्सञ्जनमुत्क्षेपणं। तत्र दारकमुदानयते। ज्ञाने नयते विद्वान् स्याद्वादे। व्यये शतं विनयते। विगणने वृषलः करं विनयते ॥

**१६०० लोः कृपः** ।१।४।१८। कृपेर्लुटस्तङ् वा भवति ॥ कल्प्तासि कल्पितासे ॥

**१६०१ द्युद्भ्यो लुङः** ।१।४।१९। द्युतादिभ्यो लुङस्तङ् वा भवति ॥ अद्युतत् अद्योतिष्ट। अक्लृपत् अकल्पिष्ट अक्लृप्त ॥

**१६०२ वृद्भ्यः सस्यात्** ।१।४।२०। वृतादिभ्यः सन्स्याभ्यां तङ् वा भवति ॥ विवृत्सति विवर्तिषते। वर्त्स्यति वर्तिष्यते। अवर्त्स्यत् अवर्तिष्यत। चिक्लृप्सति चिकल्पिषते चिक्लृप्सते। कल्प्स्यति कल्पिष्यते

---

१ तस्य शीलं स्वभावो यस्य तच्छीलं तच्छीलस्य भावस्ताच्छील्यं। गतेस्ताच्छील्यं गतिताच्छील्यं तस्मिन्। हरतेर्लकारस्य पूर्ववत्तङो भवन्ति गतेस्ताच्छील्ये गम्यमाने। मातृकं गावोऽनुहरन्ते ॥ स्वभावतो गच्छति पितृवन्मातृवच्च गमनमेषां स्वभावत एतीत्यर्थः ॥

२ सम्माननं पूजनं। तत्र नयते विद्वान् स्याद्वादे प्रमाणव्यापारवित् स्याद्वादे जीवादीन् पदार्थान् युक्तिभिः स्थिरीकृत्य सम्मानयन् शिष्यबुद्धिं प्रापयतीत्यर्थः। आचार्यस्य भावः कर्म वा आचार्यकं मौञ्जीबन्धनं करोतीत्यर्थः ॥ माणवकमुपनयते इत्यस्य स्वयमाचार्यो माणवकमात्मसमीपे प्रापयतीत्यर्थः ॥ भृतिर्वेतनं भृतिदानेन कर्मकरानात्मसमीपे करोतीत्यर्थः ॥ ऊर्ध्वं सञ्जनं उत्सञ्जनं उत्क्षेपणं माणवकमुदानयते उत्क्षिपति अधस्थितं बालकं ऊर्ध्वं नयतीत्यर्थः ॥ प्रमेयनिश्चयो ज्ञानं तस्मिन्। ये ये गत्यर्थास्ते ज्ञानार्थाः ॥ धर्मादिषु विनियोगो व्ययः। धर्मार्थं शतं विनियुङ्क्ते इत्यर्थः ॥ ऋणादेर्निर्यातनं विगणनं ॥ एतेष्विति किं? अजां नयति ग्रामम् ॥

कल्प्स्यते अकल्प्स्यत् अकल्पिष्यत अकल्प्स्यत ॥

१६०३ **क्रमोऽनुपसर्गात्** ।१।४।२१। अनुपसर्गात् क्रमो लस्तङ् वा भवति ॥ क्रमते क्रामति । उपसर्गात् । संक्रामति ॥

१६०४ **वृत्तिसर्गतायने**[1] ।१।४।२२। वृत्त्यादिषु क्रमो लस्तङ् नित्यं भवति ॥ वृत्तौ शास्त्रे बुद्धिः क्रमते । सर्गे तात्पर्ये सूत्राय क्रमते । तायने क्रमन्ते गुणाः । क्रमते राजा भुवनं ॥

१६०५ **परोपात्**[2] ।१।४।२३। परोपाभ्यां क्रमो लस्तङ् भवति ॥ पराक्रमते उपक्रमते ॥

१६०६ **वेः पादविक्षेपे** ।१।४।२४। वेः क्रमो लस्तङ् भवति पादविक्षेपे ॥ सुष्ठु विक्रमते अश्वः अन्यत्र विक्रामति राजा ॥

१६०७ **प्रोपाभ्यां समर्थाभ्याम्**[3] ।१।४।२५। प्रोपाभ्यां समर्थाभ्यां क्रमो लस्तङ् भवति ॥ भोक्तुं प्रक्रमते उपक्रमते । प्रारभत इत्यर्थः॥

१६०८ **ज्योतिरुद्गतावाङः**[4] ।१।४।२६। आङः क्रमो लस्तङ् भवति ज्योतिषामुदये ॥ आक्रमते चन्द्रः । अन्यत्र आक्रामति शैलं ॥

१६०९ **नुदाप्प्रच्छः** ।१।४।२७। आङो नुदाप्प्रच्छिभ्यो लस्तङ्

---

१ वेति निवृत्तम् । वृत्तं वृत्तिरात्मयापनं अप्रतिबन्धो वा । तात्पर्यमुत्साहो वा सर्गः । सन्तानं पालनं वा तायनम् ॥ शास्त्रेऽस्य बुद्धिः क्रमते वर्तते तत्रात्मानं यापयतीत्यर्थः । सूत्राय क्रमते तदर्थं तत्परो भवति उत्सहते वेत्यर्थः ॥

२ ज्ञात्वाऽऽरम्भ उपक्रमः । अवृत्त्याद्यर्थं आरम्भः । अन्ये त्विह वृत्त्यादीनपेक्षन्ते । पूर्वत्रानुपसर्गादिति तत्रायं सोपसर्गार्थमारम्भो भवति ॥

३ सम् सङ्गतः समानः अर्थोऽभिधेयो ययोस्तौ समर्थौ ताभ्यां । स चार्थः आदिकर्म अङ्गीकारो वा । तेनादिकर्मण्यङ्गीकारे च वर्तमानाभ्यां भवतीत्यर्थः प्रक्रमते शुश्रूषामुपक्रमते शुश्रूषामंगीकरोतीत्यर्थः ॥ समर्थाभ्यामिति किं? पूर्वेद्युः प्रक्रामति गच्छतीत्यर्थः । परेद्युरुपक्रामति आगच्छतीत्यर्थः ॥

४ ज्योतिषां चन्द्रादीनां उद्गतौ वर्तमानादाङ्पूर्वात्क्रमो लकारस्य । आक्रमन्ते ज्योतींषि उदस्यन्तीत्यर्थः ॥ ज्योतिर्ग्रहणं किं? क्रमति धूमः । उद्गतिग्रहणं किं? नभः समाक्रमते नष्टवर्तनास्थितैकचक्रेण रथेन भास्करो व्याप्नोतीत्यर्थः ॥

भवति ॥ आनुते सृगालः । धनमादत्ते । आपृच्छते गुरुं ॥

**१६१० गमेः प्रतीक्षायाम्** ।१।४।२८। आङो ण्यन्तात् गमेः लस्तङ् भवति प्रतीक्षायाम् ॥ आगमयते गुरुम् । अन्यत्र आगमयति विद्यां ॥

**१६११ ह्वः स्पर्धे** ।१।४।२९। आङो ह्वेञो लस्तङ् भवति स्पर्धे ॥ मल्लो मल्लमाह्वयते । अन्यत्र आह्वयति मित्रं ॥

**१६१२ संनिवेः** ।१।४।३०। सन्निविभ्यो ह्वेञो लस्तङ् भवति ॥ संह्वयते निह्वयते विह्वयते ॥

**१६१३ उपात्** ।१।४।३१। उपात् ह्वेञो लस्तङ् भवति ॥ उपह्वयते ॥

**१६१४ यमो विवाहे** ।१।४।३२। उपाद्यमो लस्तङ् भवति विवाहे ॥ उपयच्छते कन्याम् । अन्यत्र उपयच्छति शकटं । गृह्णातीत्यर्थः ॥

**१६१५ स्थः पथिमैत्रीदेवार्चासङ्गममन्त्रकरणे** ।१।४।३३। उपात्तिष्ठतेर्लस्तङ् भवति पथ्यादिष्वर्थेषु ॥ अयं पन्थाः स्रुघ्नमुपतिष्ठते । मैत्र्यां चैत्रमुपतिष्ठते । देवार्चायां जिनेन्द्रमुपतिष्ठते । सङ्गमे गङ्गा यमुनामुपतिष्ठते । मन्त्रकरणे मृत्युञ्जयेनोपतिष्ठते ॥

**१६१६ लिप्सौ वा** ।१।४।३४। उपात्तिष्ठतेर्लस्तङ् वा भवति लिप्सौ कर्तरि ॥ भिक्षुर्गृहंगृहमुपतिष्ठते ॥

**१६१७ उदोऽनूर्ध्वेहे** ।१।४।३५। उदस्तिष्ठतेर्लस्तङ् भवति अनूर्ध्वे ईहे चेष्टायाम् ॥ शास्त्रे उत्तिष्ठते । उद्युङ्क्ते इत्यर्थः । अन्यत्र आसनादुत्तिष्ठति । ग्रामे शतमुपतिष्ठति ॥

**१६१८ संविप्रावात्** ।१।४।३६। संविप्रावेभ्यः तिष्ठतेः लस्तङ् भवति ॥ सन्तिष्ठते वितिष्ठते प्रतिष्ठते अवतिष्ठते ॥

---

१ उर्ध्वं न भवतीत्यनूर्ध्वं अनूर्ध्वे वर्तमान ईहोऽनूर्ध्वेहस्तस्मिन् । शास्त्रे उपतिष्ठते तत्रोद्योगं करोतीत्यर्थः । अनूर्ध्वेह इति किं? अस्माद्ग्रामाद्गच्छन्तमुपतिष्ठति उत्पद्यते इत्यर्थः । शतं जन उत्थाय व्यापारं करोतीत्यर्थः शतमुपतिष्ठतीत्यस्य ॥

**१६१९ स्थेयप्रकाशने** ।१।४।३७। स्थेये प्रमाणभूते विषये प्रकाशने च तिष्ठतेर्लस्तङ् भवति ॥ तिष्ठते प्रमेयमकलङ्के। तिष्ठते कन्या च्छात्रेभ्यः ॥

**१६२० प्रतिज्ञाने** ।१।४।३८। प्रतिज्ञाने अभ्युपगमे तिष्ठतेर्लस्तङ् भवति ॥ सर्वमनेकान्तात्मकमातिष्ठते जैनः ॥

**१६२१ समो गिरात्** ।१।४।३९। प्रतिज्ञाने समो गिरतेर्लस्तङ् भवति ॥ उपयोगलक्षणमात्मानं संगिरते जैनः ॥

**१६२२ अवात्** ।१।४।४०। अवाद् गिरतेर्लस्तङ् भवति ॥ अवगिरतेऽन्नम् ॥

**१६२३ संप्रतेर्ज्ञोऽस्मृतौ** ।१।४।४१। संप्रतिभ्यां जानातेर्लस्तङ् भवति न स्मृतौ ॥ सञ्जानीते प्रतिजानीते। स्मृतौ मातरं सञ्जानाति ॥

**१६२४ निह्नवे** ।१।४।४२। निह्नवे अपलापे जानातेर्लस्तङ् भवति ॥ शतमुपजानीते। अन्यत्र चैत्रमुपजानाति ॥

**१६२५ सनोऽननोः** ।१।४।४३। सनन्ताज्जानातेर्लस्तङ् भवति नानोः ॥ धर्मं जिज्ञासते। अनोः शिष्यमनुजिज्ञासति ॥

**१६२६ श्रुवोऽप्रत्याङः** ।१।४।४४। सनन्तात् शृणोतेर्लस्तङ् भवति न प्रत्याङ्भ्याम् ॥ धर्मं शुश्रूषते। प्रत्याङ्भ्यां तत्त्वं प्रतिशुश्रूषति। आशुश्रूषति ॥

---

१ तिष्ठत्यस्मिन्निति स्थेयः रूढिशब्दोऽयं। विवादपदे निर्णेता प्रमाणभूतः पुरुष स्थेये इत्युच्यते। प्रकाशनं प्रकटनं पुनर्द्वन्द्वः। स्थेयविषयायां क्रियायां प्रकाशने च वर्तमानात्तिष्ठतः ॥ विरुद्धाबद्धवाग्जालच्छन्नव्यामुग्धबुद्धिषु ॥ अश्रद्धेयमनाप्तेषु सार्वज्ञं त्वयि तिष्ठते ॥ १ ॥ इति देवागमस्तोत्रे ॥ प्रकाशने तिष्ठते वृषली ग्रामपुत्रेभ्य स्वाभिप्रायप्रकाशनाय तत्समर्थमाचरतीत्यर्थः। तत्समर्थाचरणेन स्वाभिप्रायं प्रकाशयतीत्यर्थः ॥

२ गॄ निगरणे। गॄ इत्यनुक्त्वा गिरादिति शविकरणनिर्देशेन गिरतेर्ग्रहणं न गृणातेः। उपयोगलक्षणमात्मानमित्यत्र ज्ञानदर्शनमुपयोगः स लक्षणं चिह्नं यस्य स उपयोगलक्षणस्तमात्मानं जैन अङ्गीकरोतीत्यर्थः ॥

१६२७ **स्मृदृशः** ।१।४।४५। सनन्ताभ्यां स्मृदृशिभ्यां लस्तङ् भवति॥ सुस्मूर्षते दिदृक्षते ॥

१६२८ **गन्धनावक्षेपसेवासाहसप्रतियत्नप्रकथाव्यये** ।१।४।४९। गन्धनादिषु कृञो लस्तङ् भवति ॥ गन्धने सूचने कार्यमुत्कुरुते । अवक्षेपे दुर्वृत्तानपकुरुते । सेवायां गणकान् प्रकुरुते । साहसे परदारान् प्रकुरुते । प्रतियत्ने एधो दकस्योपस्कुरुते । प्रकथायां व्याख्यानं प्रकुरुते । व्यये शतं प्रकुरुते ॥

१६२९ **प्रसहनेऽधेः** ।१।४।५०। प्रसहने अभिभवे अधेः कृञो लस्तङ् भवति ॥ चैत्रमधिकुरुते । अन्यत्र ग्रामे अधिकरोति । स्वामिनं करोतीत्यर्थः ॥

१६३० **दीप्तिज्ञानेहाविमत्युपसम्भाषोपमन्त्रणे वदः** ।१।४।५१। दीप्त्यादिषु वदेः लस्तङ् भवति ॥ दीप्तौ स्याद्वादे वदते विद्वान् । ज्ञाने वैद्ये वदते । ईहायां धर्मे वदते । विमतौ तत्त्वे विवदते ।

---

१ उत्साहने च हिंसायां सूचने चापि गन्धनमित्यमरः ॥ गन्धनमपकारात्मकसूचनं प्रोत्साहनादिकं गन्धनम् । अवक्षेपणमुपक्षेपः कुत्सनं भर्त्सनं वा । श्येनो वर्तिकामुपस्कुरुते भर्त्सयतीत्यर्थः । सहसा प्रवृत्तिः साहसं साहसिकं कर्म परदारान् प्रस्कुरुते तान् हठात् गृह्णातीत्यर्थः ॥ दकस्येत्यत्र 'कृञः प्रतियत्ने' इति षष्ठी । उपस्कुरुते सतस्तस्य प्रकर्षाधानायापत्तये किञ्चित्करोतीत्यर्थः ॥ प्रकर्षेण कथनं प्रारम्भो वा प्रकथा व्याख्यानं प्रकुरुते प्रकर्षेण कथयति कथयितुं प्रारभते वा इत्यर्थः ॥ धर्मार्थे विवियोगो व्ययः ॥

२ प्रहसनमभिभवः पराजयो वा । तथाच तिरस्क्रियायामुपसर्गः । अधेरिति किं? शत्रून् प्रकरोति ॥

३ दीप्तौ स्याद्वादे विवदते विद्वान् दीप्तो वदतीत्यर्थः । ज्ञाने ज्ञात्वा वदतीत्यर्थः वदितुं जानीते इत्येके । ईहा चेष्टा यत्न उत्साहः तत्र श्रुते वदते तद्विषयमुत्साहं वाचा आविष्करोतीत्यर्थः ॥ नाना मतिर्विमतिः तत्र तत्त्वे विवदते विमत्या किंचिद्भाषते इत्यर्थः ॥ उपसम्भाषा उपसान्त्वनमुपालम्भो वा उपवदते उपसान्त्वयति उपालभते वा इत्यर्थः ॥ उपमन्त्रणं रहस्युपच्छन्दनं वधूमुपवदते रहसि वशीकरोतीत्यर्थः ॥

उपसम्भाषायां कर्मकरानुपवदते । उपमन्त्रणे रहसि वधूमुपवदते ॥

**१६३१ व्यक्तवाचां सहोक्तौ** ।१।४।५२। व्यक्तवाचां सहोक्तौ वदेर्लस्तङ् भवति ॥ संवदन्ते जैनाः । व्यक्तवाचामिति किं? सम्प्रवदन्ति कुक्कुटाः ॥

**१६३२ विप्रलापे वा** ।१।४।५३। विप्रलापे वदेर्लस्तङ् वा भवति॥ विप्रवदन्ते विप्रवदन्ति कुतीर्थ्याः ॥

**१६३३ कर्मण्यसत्यनोः** ।१।४।५४। अनोर्वदेर्लस्तङ् भवति कर्मण्यसति ॥ गुरोरनुवदते शिष्यः । कर्मणि वाद्युक्तमनुवदति ॥

**१६३४ ज्ञोपस्थः** ।१।४।५५। कर्मण्यसति जानातेरुपात्तिष्ठतेश्च लस्तङ् भवति ॥ सर्पिषो जानीते । योगी योगे उपतिष्ठते । कर्माणि स्वरेण पुत्रं जानाति । राजानमुपतिष्ठति ॥

**१६३५ समोऽर्तिस्वरतिश्रुदृशिविद्गम्प्रच्छृच्छः** ।१।४।५६। कर्मण्यसति समोऽर्त्यादिभ्यो लस्तङ् भवति ॥ समियृते संस्वरते संशृणुते सम्पश्यते संवित्ते संगच्छते सम्पृच्छते समृच्छते । कर्मणि रूपं सम्पश्यतीत्यादि ॥

**१६३६ यंड्हनः स्वेऽङ्गे चाङः** ।१।४।५८। कर्मण्यसति स्वाङ्गे

---

१ विप्रलापो विरोधोक्तिः । विरुद्धः प्रलापा विप्रलापः विप्रलापात्मिकाया सहोक्तावित्यर्थः । विप्रवदन्ते परस्परप्रतिषेधेन युगपत्प्रलपन्तीत्यर्थः । विप्रलाप इति किं? सम्प्रवदन्ते वैयाकरणाः । व्यक्तवाचामिति किं? विप्रवदन्ते शकुनयः । सहोक्ताविति किं? मौहूर्तिको मुहुर्तैन वदति क्रमेण वदतीत्यर्थः ॥

२ अनु इत्युपसर्गात् गुरोरनुवदते गुरुर्यथा वदति तथा वदतीत्यर्थः । अनुः सादृश्ये पश्चादर्थे वा । गुरुणा वा पूर्वमुक्ते पश्चाच्छिष्यो वदतीत्यर्थः ॥ कर्मण्यसतीति किं? जिनदत्तेनोक्तमनुवदति देवदत्तः पुनर्वदतीत्यर्थः ॥ व्यक्तवाचामिति वर्तत एव । कुतः? अनुवदति वीणा ॥

३ ऋ प्रापणे चेत्यंधादेः ऋ गताविति ह्वादेश्च ग्रहणमर्तीत्यनेन । विदिति नित्यमेवातङ्प्राप्तिमद्भिरर्त्यादिभिः साहचर्याद्वित्तिर्गृह्यते न विन्दतिः ॥

४ स्वे आत्मीये चाङ्गे । स्वाङ्ग इति समासे अविकारोद्रवं मूर्तमिति परिभाषाप्रतिपत्तिः स्यात् प्रसिद्धेर्बलीयस्त्वात् तत्र पराङ्गेऽपि स्यादित्यपारिभाषिकार्थोऽसमासः । अत्रासमासादेव तत्र 'वा स्वाङ्गात्' इत्यादौ पारिभाषिकं स्वाङ्गं । कर्मण्यसतीत्यनेन

**१६२७ स्मृदृशः** ।१।४।४५। सनन्ताभ्यां स्मृदृशिभ्यां लस्तङ् भवति॥ सुस्मूर्षते दिदृक्षते ॥

**१६२८ गन्धनावक्षेपसेवासाहसप्रतियत्नप्रकथाव्यये** ।१।४।४९। गन्धनादिषु कृञो लस्तङ् भवति ॥ गन्धने सूचने कार्यमुत्कुरुते । अवक्षेपे दुर्वृत्तानपकुरुते । सेवायां गणकान् प्रकुरुते । साहसे परदारान् प्रकुरुते । प्रतियत्ने एधो दकस्योपस्कुरुते । प्रकथायां व्याख्यानं प्रकुरुते । व्यये शतं प्रकुरुते ॥

**१६२९ प्रसहनेऽधेः** ।१।४।५०। प्रसहने अभिभवे अधेः कृञो लस्तङ् भवति ॥ चैत्रमधिकुरुते । अन्यत्र ग्रामे अधिकरोति । स्वामिनं करोतीत्यर्थः ॥

**१६३० दीप्तिज्ञानेहाविमत्युपसम्भाषोपमन्त्रणे वदः** ।१।४।५१। दीप्त्यादिषु वदेः लस्तङ् भवति ॥ दीप्तौ स्याद्वादे वदते विद्वान् । ज्ञाने वैद्ये वदते । ईहायां धर्मे वदते । विमतौ तत्त्वे विवदते ।

---

१ उत्साहने च हिंसायां सूचने चापि गन्धनमित्यमरः ॥ गन्धनमपकारात्मकसूचनं प्रोत्साहनादिकं गन्धनम् । अवक्षेपणमुपक्षेपः कुत्सनं भर्त्सनं वा । श्येनो वर्तिकामुपस्कुरुते भर्त्सयतीत्यर्थः । सहसा प्रवृत्तिः साहसं साहसिकं कर्म परदारान् प्रस्कुरुते तान् हठात् गृह्णातीत्यर्थः ॥ दकस्येत्यत्र 'कृञः प्रतियत्ने' इति षष्ठी । उपस्कुरुते सतस्तस्य प्रकर्षायान्यापत्तये किञ्चित्करोतीत्यर्थः ॥ प्रकर्षेण कथनं प्रारम्भो वा प्रकथा व्याख्यानं प्रकुरुते प्रकर्षेण कथयति कथयितुं प्रारभते वा इत्यर्थः ॥ धर्मार्थं विनियोगो व्ययः ॥

२ प्रहसनमभिभवः पराजयो वा । तथाच तिरस्क्रियायामुपसर्गः । अधेरिति किं? शत्रून् प्रकरोति ॥

३ दीप्तौ स्याद्वादे विवदते विद्वान् दीप्तो वदतीत्यर्थः । ज्ञाने ज्ञात्वा वदतीत्यर्थः वदितुं जानीते इत्येके । ईहा चेष्टा यत्न उत्साहः तत्र श्रुते वदते तद्विषयमुत्साहं वाचा आविष्करोतीत्यर्थः ॥ नाना मतिर्विमतिः तत्र तत्त्वे विवदते विमत्या किंचिद्भाषते इत्यर्थः ॥ उपसम्भाषा उपसान्त्वनमुपालम्भो वा उपवदते उपसान्त्वयति उपालभते वा इत्यर्थः ॥ उपमन्त्रणं रहस्युपच्छन्दनं वधूमुपवदते रहसि वशीकरोतीत्यर्थः ॥

उपसम्भाषायां कर्मकरानुपवदते । उपमन्त्रणे रहसि वधूमुपवदते ॥

१६३१ **व्यक्तवाचां सहोक्तौ** ।१।४।५२। व्यक्तवाचां सहोक्तौ वदेर्लस्तङ् भवति ॥ संवदन्ते जैनाः । व्यक्तवाचामिति किं? सम्प्रवदन्ति कुक्कुटाः ॥

१६३२ **विप्रलापे वा** ।१।४।५३। विप्रलापे वदेर्लस्तङ् वा भवति॥ विप्रवदन्ते विप्रवदन्ति कुतीर्थ्याः ॥

१६३३ **कर्मण्यसत्यनोः** ।१।४।५४। अनोर्वदेर्लस्तङ् भवति कर्मण्यसति ॥ गुरोरनुवदते शिष्यः । कर्मणि वाद्युक्तमनुवदति ॥

१६३४ **ज्ञोपस्थः** ।१।४।५५। कर्मण्यसति जानातेरुपात्तिष्ठतेश्च लस्तङ् भवति ॥ सर्पिषो जानीते । योगी योगे उपतिष्ठते । कर्मणि स्वरेण पुत्रं जानाति । राजानमुपतिष्ठति ॥

१६३५ **समोऽर्तिस्वरतिश्रुदृश्विदृंप्रच्छृच्छः** ।१।४।५६। कर्मण्यसति समोऽर्त्यादिभ्यो लस्तङ् भवति ॥ समियृते संस्वरते संशृणुते सम्पश्यते संवित्ते संगच्छते सम्पृच्छते समृच्छते । कर्मणि रूपं सम्पश्यतीत्यादि ॥

१६३६ **यंङ्घनः स्वेऽङ्गे चाङः** ।१।४।५८। कर्मण्यसति स्वाङ्गे

---

१ विप्रलापो विरोधोक्तिः । विरुद्धः प्रलापो विप्रलापः विप्रलापात्मिकायां सहोक्तावित्यर्थः । विप्रवदन्ते परस्परप्रतिषेधेन युगपत्प्रलपन्तीत्यर्थः । विप्रलाप इति किं? सम्प्रवदन्ते वैयाकरणाः । व्यक्तवाचामिति किं? विप्रवदन्ते शकुनयः । सहोक्ताविति किं? मौहूर्तिको मुहूर्तेन वदति क्रमेण वदतीत्यर्थः ॥

२ अनु इत्युपसर्गात् गुरोरनुवदते गुरुर्यथा वदति तथा वदतीत्यर्थः । अनुः सादृश्ये पश्चादर्थे वा । गुरुणा वा पूर्वमुक्ते पश्चाच्छिष्यो वदतीत्यर्थः ॥ कर्मण्यसतीति किं? जिनदत्तेनोक्तमनुवदति देवदत्तः पुनर्वदतीत्यर्थः ॥ व्यक्तवाचामिति वर्तत एव । कुतः? अनुवदति वीणा ॥

३ ऋ प्रापणे चेत्यधाद्ः ऋ गताविति ह्वादेश्च ग्रहणमर्तीत्यनेन । विदिति नित्यंमवातद्प्राप्तिमद्भिरर्त्यादिभिः साहचर्याद्वित्तिर्गृह्यते न विन्दतिः ॥

४ स्वे आत्मीये चाङ्गे । स्वाङ्ग इति समासे अविकारोद्रवं मूर्तमिति परिभाषाप्रतिपत्तिः स्यात् प्रसिद्धेर्बलीयस्त्वात् तत्र पराङ्गेऽपि स्यादित्यपारिभाषिकार्थोऽसमासः । अत्रासमासादेव तत्र 'वा स्वाङ्गात्' इत्यादौ पारिभाषिकं स्वाङ्गं । कर्मण्यसतीत्यनेन

कर्मणि च आङो यमिहनिभ्यां लस्तङ् भवति ॥ आयच्छते आहते । आयच्छते पाणिम् । आहते शिरः । अस्वाङ्गे आयच्छति रज्जुम् । आहन्ति चोरं ॥

**१६३७ व्युदस्तपः** ।१।४।५९। कर्मण्यसति स्वाङ्गे कर्मणि च व्युद्भ्यां तपेर्लस्तङ् भवति ॥ वितपते उत्तपते राजा । वितपते उत्तपते पाणिम् । अस्वाङ्गे वितपति भुवं सविता ॥

**१६३८ न प्राणिन्यणिञो णिञस्तस्य** ।१।४।६०। अकर्मकादणिञन्ताण्णिञो लस्तङ् न भवति प्राणिनि कर्तरि ॥ आस्ते देवदत्तः आसयति देवदत्तम् । एवं शाययति बालम् । अप्राणीति किं? । शोषयते व्रीहीन् ॥

**१६३९ भीष्मिल्यां षाकारे** ।१।४।६२। णिजन्तानां भीष्मिलीनां षाकारयोर्लस्तङ् भवति ॥ मुण्डो भीषयते । जटिलो विस्मापयते । श्येनो वर्तिकामपलापयते ॥

**१६४० गृधिवञ्च्योर्विप्रलम्भे** ।१।४।६३। विप्रलम्भे गृधिवाञ्चिभ्यां णिञो लस्तङ् भवति ॥ माणवकं गर्धयते । माणवकं बञ्चयते । प्रतारयतीत्यर्थः ॥

धेट्पादिति वा तङ् फलेशत्वे । धापयते शिशुं । पाययते आदयते दमयते आयामयते आयासयते परिमोहयते रोचयते नर्तयते वादयते वासयते । चल्यद्यर्थादिवर्जितेभ्यः । एधयते वेधयते । अफलेशत्वे । धापयतीत्यादि । पदान्तरात् ज्ञाते फलेशत्वे वा तङ् स्वं पुत्रं धापयते धापयतीत्यादि । चल्यद्यर्थादिप्रतिषेधः किं? । चालयति शाखां । कम्पयति गमयति । आशयति निगारयति भोजयति । अध्यापयति भावयति द्रावयति स्रावयति बोधयति योधयति नाशयति जनयति ॥

---

सर्वस्य निषेधे स्वाङ्गे कर्मणि भवति । स्व इति किं? आयच्छति पादौ देवदत्तस्य आहन्ति शिरो देवदत्तस्य । अङ्ग इति किं? स्वामायच्छति रज्जुं । स्वं पुत्रमाहन्ति। चकारोऽसतीत्यस्याभिसम्बन्धार्थः ॥

**१६४१ यमःसमुदाङोऽग्रन्थे**[1] ।१।४।६७। समुदाङ्भ्यो यमो लस्तङ् भवति फलेशे कर्तरि पदान्तरात् फलेशत्वे ज्ञाते तु वा न ग्रन्थे ॥ संयच्छते व्रीहीन्। उद्यच्छते भारम्। आयच्छते रज्जुम्। अन्यत्र संयच्छतीत्यादि। अग्रन्थ इति किम्? । उद्गच्छाति व्याकरणं। व्याकरणविषये उद्योगं करोतीत्यर्थः।

**१६४२ न पर्याङ्वे रमः** ।१।४।६८। पर्याङ्विभ्यो रमतेर्लस्तङ न भवति ॥ परिरमति आरमति विरमति ॥

**१६४३ उपात्** ।१।४।६९। उपाद्रमेर्लस्तङ् न भवति ॥ उपरमति चैत्रं

**१६४४ वाऽकर्मकात्** ।१।४।७०। अकर्मकादुपाद्रमतेर्लस्तङ् वा न भवति ॥ उपरमति उपरमते दोषात् ॥

**१६४५ व्यादाञोऽपराङ्गे**[1] ।१।४।७१। व्यादाञो लस्तङ न भवति अपराङ्गे कर्मणि ॥ व्याददाति मुखं व्याघ्रः। पराङ्गे व्याददते पिपीलिकाः पतङ्गमुखं ॥

**१६४६ परानोः कृः** ।१।४।७२। परानुभ्यां कृञो लस्तङ् न भवति ॥ पराकरोति अनुकरोति ॥

**१६४७ प्रत्यत्यभेः क्षिपः** ।१।४।७३। प्रत्यत्यभिभ्यः क्षिपेर्लस्तङ् न भवति ॥ प्रतिक्षिपति अतिक्षिपति अभिक्षिपति ॥

**१६४८ प्राद्वहः** ।१।४।७४। प्राद्वहेर्लस्तङ् न भवति ॥ प्रवहति ॥

**१६४९ परेर्मृषेश्च** ।१।४।७५। परेर्मृषेर्वहेश्च लस्तङ् न भवति ॥ परिमृष्यति। परिवहति ॥

**१६५० व्यतिहृतेऽगतिहिंसाशब्देऽहृवहश्चापरस्परान्यो-**[2]

---

१ अग्रन्थ इति किं? उद्यच्छति चिकित्सितं चिकित्सिते ग्रन्थे उद्यमं करोतीत्यर्थः ॥

१ वि आङ् इत्युभयात्परस्य दाञः। ञकारो देङ् निवृत्त्यर्थः। अपराङ्गे परांगविषयश्चेत्स व्यादाञ् न भवति। नुदाञ्प्रच्छः ञीदिति वचनात्प्राप्तेः। व्याग्रहणं किं? दत्ते आदत्ते विदत्ते आविदत्ते ॥

२ परस्परसम्बन्धिहरणं व्यतिहारः। इतरसम्बन्धिन इतरेण इतरसम्बन्धिनश्चेतरेण ग्रहणं तस्य कर्म व्यतिहृतं तस्मिन्। गतिहिंसाशब्दवर्जितेऽर्थे वर्तमानस्य हरतेर्वहतेरन्यस्य च धातोर्लः कर्तरि वर्तमानस्य तङो भवन्ति। परस्परान्योन्येतरेतर इत्ये-

**न्येतरेतरे** ।१।४।७६। व्यतिहारे गतिहिंसाशब्दार्थवर्जिताद्धातोर्हरतिवहतिभ्यां च लस्तङ् भवति न परस्परादिप्रयोगे ॥ व्यतिभवन्ते ग्रामाः । व्यतिलुनते वृषलाः सम्प्रहरन्ते राजानः । व्यतिवहन्ते नद्यः । गत्यर्थस्य व्यतिगच्छन्ति । हिंसार्थस्य व्यतिघ्नन्ति । शब्दार्थस्य जल्प रप लप व्यक्तायां वाचि । व्यतिजल्पन्ति । परस्परादिप्रयोगे व्यतिलुनन्ति परस्परस्य अन्योन्यस्य इतरेतरस्य वा । इति सर्वं योज्यम् ॥

अथ लकारार्था निर्दिश्यन्ते ॥

सतीति वर्तमानार्थे लट् । पचति ॥

**१६५१ स्मे च लट्** ।४।३।२१५। पुरास्मशब्दयोरुपपदयोर्भूतानद्यतनेऽर्थे लड् भवति ॥ पचतिस्म । पचति पुरा । पुरास्म पचति ॥

**१६५२ ननौ पृष्टोक्तौ** ।४।३।२१६। पृष्टोक्तौ प्रतिवचने भूतार्थे धातोर्लड् भवति ननुशब्दे उपपदे ॥ किमकार्षीः देवदत्त । ननु करोमि ॥

**१६५३ किंवृत्तेऽर्थित्वे** ।४।३।२८६। प्रष्टुरर्थित्वे सति किंवृत्ते उपपदे भविष्यति लड्वा भवति ॥ को भवतां भिक्षां ददाति दास्यते । कतमो भवतो भोजयति भोजयिष्यति ॥

**१६५४ अर्घ्यासिद्धौ** ।४।३।२८७। अर्घ्यस्य दातुः फलसिद्धौ विवक्षितायां भविष्यति लड् वा भवति ॥ यो भक्तं ददाति स स्वर्गं गच्छति । यो भक्तं दास्यति स स्वर्गं गमिष्यति ॥

**१६५५ लेटि हेतौ** ।४।३।२८८। लेडन्ते उपपदे लेटो लेडन्तार्थस्य

---

तस्मिन्नसति ॥ परस्परादिशब्दानां प्रयोगे सति तङ् न ॥ हृवहिग्रहणं प्रतिषेधार्थं । क्रियाया व्यतिहारो व्यतिनैव द्योतित इति परस्परादिभिः तत्कर्माभिसम्बध्यते परस्परस्य केदारमिति ॥

१ किमा किंशब्देन वृत्तं निष्पन्नं किंवृत्तं तस्मिन् । अर्थत इत्येवं शीलोऽर्थी तस्य भावोऽर्थित्वं तस्मिन् गम्यमाने इत्यर्थः ॥ वृत्तग्रहणे तद्विभक्त्यन्तं डतरडतमौ चेति वैयाकरणस्मृतिः । तेन किन्तरां किन्तमां ॥ किं पुरुष इत्यादौ न भवति । अर्थित्वे इति किं? पाटलिपुत्रं गमिष्यति गन्ता । पक्षे लृट्लुटावपि भवतः को भवतां भिक्षां दाता के भवतो भोजयन्ति ॥ बहूनां प्रश्ने डतमश्च ॥

हेतौ निमित्ते वर्त्स्यत्यर्थे धातोर्लट् प्रत्ययो वा भवति ॥ उपाध्यायश्चेदागच्छति अगमिष्यति अथ सूत्रमधीष्व ॥

१६५६ **लेङ् चोर्ध्वमौहूर्तिके** ।४।३।२८९। लेङन्ते उपपदे तद्धेतौ ऊर्ध्वमौहूर्तिके भविष्यति लेङ् लट् च वा भवतः ॥ ऊर्ध्वं मुहूर्तादुपाध्यायश्चेदागच्छेत् आगच्छति आगमिष्यति अथ त्वं सूत्रमधीष्व ॥

१६५७ **गर्हेऽपिजात्वोर्लेट्** ।४।४।११०। अपिजात्वोरुपपदयोर्गर्हे गम्यमाने धातोर्लेङ् भवति ॥ अपि संयतो भवानादाय कृतं सेवते। जातु तत्रभवान् हिनस्ति ॥

१६५८ **कथमि लेङ् च वा** ।४।४।१११। कथंशब्दे उपपदे गर्हे लट् लेङ् च वा भवतः ॥ कथं तत्रभवान् भूतानि हिनस्ति हिंस्यात् हिंसिष्यतीत्यादि ॥ अनद्यतने लङ् ॥ अपचत् ॥

१६५९ **लङ् च स्मेन** ।४।४।१३८। स्मेन सह माङि उपपदे धातोर्लङ्लुङौ भवतः ॥ मास्म करोत् मास्म कार्षीत् ॥ आशिषि लेट् ॥ पचतु ॥

१६६० **इच्छार्थे लेङ् लेट्** ।४।४।१२५। इच्छार्थे धातावुपपदे धातोर्लेङ्लेटौ भवतः ॥ इच्छामि भुञ्जीत भुङ्क्तां भवान् ॥ विधिनिमन्त्रणेति विध्यादिषु लेङ्लेटौ भवतः। विधौ नियोगे पचेत् पचतु भवान् ॥ निमन्त्रणे नियमतः कर्तव्ये। सन्ध्यासु भवान् वन्दनां कुर्यात् करोतु ॥ आमन्त्रणे कामचारतः कर्तव्ये। देवदत्त इह भवानासीत आस्ताम् ॥ अधीष्टे सत्कारपूर्वकव्यापारे। भगवान्नः प्रसीदेत् प्रसीदतु ॥ सम्प्रश्ने सम्प्रधारणे। किं नु खलु व्याकरणमधीयीय अध्ययै उत धर्मशास्त्रं ॥ प्रार्थने याच्ञायाम्। अङ्ग पुत्र अधीयीथाः अधीष्व ॥

---

१ अपिर्जातुरित्येतयोरुपपदयोः ॥ कालसामान्येऽयं लट् परत्वात्कालविशेषविहितानपि प्रत्ययान् बाधते। एवमुत्तरत्रापि ॥ अपि तत्रभवान् भूतानि हिनस्ति ॥

**१६६१ प्रैषानुज्ञावसरे लेट्ध्यप्** ।४।४।१२७। प्रैषादिषु धातोर्लेड्ध्यपौ भवतः ॥ प्रैषे चैत्रौदनं पच । अनुज्ञायां साधो वन्दनां कुरु । अवसरे सम्प्रति सङ्गच्छ ॥

**१६६२ अधीष्टे** ।४।४।१३०। स्मशब्दे उपपदे अधीष्टे लेट् भवति ॥ अङ्ग राजन्नणुव्रतानि रक्षस्म ॥

**१६६३ भृशाभीक्ष्णे लेट् तस्मिन् तथार्थे** ।४।४।१३९। भृशाभीक्ष्णयोर्लेड् भवति तस्मिन्नेव धातौ तथार्थे साधनोपग्रहविशिष्टे उपपदे सति ॥

**१६६४ भृशादौ हिः** ।१।४।११८। भृशादौ लेटो हिर्भवति ॥ लुनीहिलुनीहि इत्येवं लुनाति लुनीतः लुनन्तीत्यादि सर्वलकारवचनसाधनस्थानीयं

**१६६५ प्रचये वा सामान्यार्थे** ।४।४।१४०। सामान्यार्थे धातौ उपपदे प्रचये नानाधात्वर्थसमुच्चये गम्यमाने धातोर्लेड् वा भवति ॥ व्रीहीन् वप लुनीहि पुनीहि इत्येवं यतते चेष्टते इत्यादि । पक्षे यथासम्भवं लकारो वेदितव्यः ॥

**१६६६ क्षिप्राशंसार्थे लृड्लेङ्** ।४।४।१०४। क्षिप्राशंसार्थयोरुपपदयोर्धातोर्यथासङ्ख्यं लृड्लेङौ भवतः ॥ उपाध्यायश्चेदागच्छति क्षिप्रमध्येष्ये । सम्भावये अधीयीय ॥

**१६६७ किंवृत्ते लेङ्लृटौ** ।४।४।११२। किंवृत्ते उपपदे गर्हे लेङ्-

---

१ प्रेषणं प्रैषो बलान्नियोगः । प्राप्तकालतानिमित्तोऽपरः । एतेषु गम्यमानेषु ॥ ध्यप उदाहरणं भवता खलु कटः कार्यः कर्तव्यः करणीयः कृत्यः ॥ अतिसर्जनमनुज्ञा भवानिह प्रेषितोऽनुज्ञातः । प्राप्तकालो भवतोऽवसरः कटकरणे । ध्यप्ग्रहणं लेडा ध्यपामबाधनार्थम् ॥

२ अवयवक्रियाणामधिश्रयणादीनां क्रियान्तरैरव्यवहितानां साकल्यं फलातिरेको वा भृशार्थः । आभीक्ष्ण्यं पौनःपुन्यं प्रधानक्रियायाः । भृशे आभीक्ष्ण्ये चार्थे लिट्प्रत्ययो भवति तस्मिन्धातौ तथार्थे उपपदे यथाविधोऽर्थो लेडन्तस्य ॥ सर्वलकारापवादः ॥

३ अनेकधात्वर्थसमुच्चयः प्रचयः । स च त्रिविधः क्रियाप्रचयः कर्मप्रचयः उभयप्रचयश्चेति शब्दार्थचन्द्रिकायामुक्तम् ॥

लृटौ भवतः ॥ किं तत्रभवान् अनृतं ब्रूयात् वक्ष्यति ॥

१६६८ **अमर्षाश्रद्धेऽन्यत्रापि** ।४।४।११३। किंवृत्ते अकिंवृत्तेऽप्युपपदे अमर्षे अश्रद्धायां लेङ्लृटौ भवतः ॥ न क्षमे न श्रद्दधे किं तत्रभवान् अदत्तं गृह्णीयात् ग्रहीष्यति । न क्षमे न श्रद्दधे तत्रभवान्नाम अदत्तं गृह्णीयात् ग्रहीष्यति ॥

१६६९ **यच्चदियदाजातौ लेङ्** ।४।४।११५। यदादिषु उपपदेषु अमर्षाश्रद्धयोर्लेङ् भवति ॥ न क्षमे न श्रद्दधे यत्तत्रभवान् अकल्प्यं सेवेत । यदि गुरुरसत्यं ब्रूयात् । यदा संयतो हिंस्यात् । जातु धर्मः सुखं व्यभिचरेत् ॥

१६७० **गर्हे च यच्चयत्रे** ।४।४।११६। यच्चयत्रयोरुपपदयोः गर्हे अमर्षाश्रद्धयोश्च लेङ् भवति ॥ धिग्गर्हा न क्षमे न श्रद्दधे यच्च तत्रभवानाक्रोशेत । यत्र गुरुरसत्यं ब्रूयात् ॥

१६७१ **चित्रे** ।४।४।११७। यच्चयत्रयोरुपपदयोश्चित्रे विस्मये लेङ् भवति ॥ चित्रमिदं यच्च तत्रभवान् अकल्प्यं सेवेत । यत्र गुरुं प्रतारयेत् ॥

१६७२ **बाढेऽप्युते लेङ्** ।४।४।११९। बाढार्थयोरप्युतयोरुपपदयोर्लेङ् भवति ॥ अपि कुर्यात् उत कुर्यात्

१६७३ **सम्भाव्येऽलम्यर्थात्** ।४।४।१२०। सम्भाव्येऽर्थे धातोर्लेङ् भवति अलम्यर्थाच्छक्तौ गम्यमानायाम् ॥ अपि पर्वतं शिरसा भिन्द्यात् ॥

१६७४ **सतीच्छार्थात्** ।१।४।१२२। इच्छार्थाद्धातोस्सति वर्तमाने लेङ् वा भवति ॥ पक्षे लट् । इच्छेत् इच्छति । उश्याद्वृष्टिः ॥

१६७५ **वत्स्यति फलकारणे** ।४।४।१२३। भविष्यति फले

---

१ अमर्षो अक्षमा । अश्रद्धा असम्भावना । अमर्षाश्रद्धयोर्गम्यमानयोः ॥ अन्यत्र अकिंवृत्ते । अपिशब्दात्किंवृत्तेऽप्युपपदे । वचनभेदाद्यथासंख्यं न भवति ॥

२ यत् यदि यदा जातु इत्येतेषूपपदेषु । अमर्षो मे । न श्रद्दधे न प्रत्ययो मे । लेङ्निमित्तमत्रास्तीति । अवृत्तौ लट् भवति । यदि तत्रभवानकल्प्यमसेविष्यत न क्षमे न श्रद्दधे इति प्रत्येकं सम्बन्धः कर्तव्यः । अकल्प्यमयोग्यम् ॥

कारणे चार्थे वर्तमानाद्धातोर्लेङ् वा भवति ॥ पक्षे लृट् । यदि गुरून् उपासीत उपासिष्यते शास्त्रान्तं गच्छेत् गमिष्यति ॥

**१६७६ कामाविष्कारेऽकच्चिति** ।४।४।१२४। कामाविष्कारे इच्छाप्रकाशने धातोर्लेङ् भवति न कच्चित्युपपदे ॥ इच्छामो भुञ्जीत भवान् । कच्चिति । कच्चिज्जीवति ते पिता ॥ विध्यादौ लेङ् प्रागेव दर्शितः ॥

**१६७७ लेङ्यदि** ।४।४।१३२। यदि सति कालवेलासमयेषूपपदेषु[1] अवसरे धातोर्लेङ् भवति ॥ कालो वेला समयो यद् भुञ्जीत भवान् ॥

**१६७८ तृध्यप् चार्हे** ।४।४।१३३। अर्हे धातोर्लेङ् तृध्यपौ च भवन्ति ॥ भवान् खलु कन्यां विवहेत् ॥

**१६७९ शक्तौ लेङ्ध्यप्** ।४।४।१३५। शक्तौ गम्यमानायां धातोर्लेङ्ध्यपौ भवतः ॥ भवान् खलु भारं वहेत् ॥ आशिषि लिङ् पच्यात् ॥ परोक्ष इति लिट् ॥ पपाच किल ॥

**१६८० अत्यन्तापह्नवे लिट्** ।४।३।२११। अत्यन्तापह्नवे सर्वथापलापे[2] भूतानद्यतने लिड् भवति ॥ किं त्वं कलिङ्गेषु स्थितोऽसि? नाहं कलिङ्गान् जगाम ॥ भूते लुङ् अपाक्षीत् ॥

**१६८१ माङि लुङ्** ।४।४।१३७। माङ्युपपदे धातोर्लुङ् भवति ॥ अमाङेति नाट् । मा भवान् पाक्षीत् ॥ परिदेवने लुट् पक्ता ॥ लेङ्निमित्ते इति लृङ् यद्यपक्ष्यत् तदा अभोक्ष्यत ॥

**१६८२ वा शेषात्** ।४।४।१०९। लृट्च्छेषेऽयदाविति सूत्रं यावत् येऽर्था वक्ष्यन्ते तेषु लृङ् वा भवति ॥ कथं नाम तत्रभवान् भूतान् अहिंसिष्यत् । किं तत्रभवान् अनृतमवक्ष्यत् । न क्षमे न श्रद्दधे तत्रभवान् नामाद-

---

१ कालवेलासमयावसरे तुं वा ।४।४।१३१। इत्यधिकृत्य ॥

२ अपह्नवो निह्नुतिरपलापोऽनभ्युपगमो वा । अन्त्यमपह्नवो यत्सदसद्वा नैं किञ्चिदभ्युपैति सर्वं मूलतोऽपलपति तत्र भूतानद्यतनेऽर्थे वर्तमानाद्धातोः । लङोऽपवादः । अत्यन्तग्रहणादेकदेशस्यापह्नवे लुङेव नाहं कलिङ्गेष्ववतिष्ठं । मा भूत् । तन्मा जनि खपुष्पवत् ॥

समग्रहीष्यत् । यत्तत्रभवानकल्प्यमसेविष्यत । यत्तत्रभवानाक्रोक्ष्यत् ॥ भविष्यति लृट् पक्ष्यति ॥

**१६८३ स्मृत्यर्थेऽयदि लृट्** ।४।४।२०९। स्मृत्यर्थे उपपदे भूतानद्यतने लृट् भवति न यदि ॥ अभिजानासि देवदत्त काश्मीरेषु वत्स्यामः । यदि । अभिजानासि देवदत्त यत्कलिङ्गेष्ववसाम ॥

**१६८४ साकाङ्क्षे वा** ।४।३।२१०। साकाङ्क्षे वाक्यान्तरे सति स्मृत्यर्थे उपपदे भूतानद्यतने लृट् वा भवति । स्मरसि देवदत्त काश्मीरेषु वत्स्यामस्तत्र भोजनं च भोक्ष्यामहे । स्मरसि देवदत्त काश्मीरेष्ववसाम तत्रौदनं च अभुञ्ज्महि ॥

**१६८५ किंकिलास्त्यर्थयोर्लृट्** ।४।४।११४। किंकिलशब्दसमवाये अस्त्यर्थे चोपपदे अमर्षाश्रद्धयोर्धातोर्लृट् भवति॥ न क्षमे न श्रद्दधे किंकिल नाम तत्रभवानकल्प्यं सेविष्यते । अस्ति नाम तत्र भवानकल्प्यं सेविष्यते॥

**१६८६ लृट् शेषेऽयदौ** ।४।४।११८। शेषे यच्चयत्राभ्यामन्यस्मिन् उपपदे चित्रे धातोर्लृट् भवति न यदौ । आश्चर्यं नाम पङ्गुः पर्वतमारोक्ष्यति । यदौ आश्चर्यं यदि पङ्गुः पर्वतमारोहेत् ॥

॥ इति तिङन्तसङ्ग्रहः ॥

जयति जगदीशमस्तकमणिकिरणकलापकल्पितार्घ्यविधि ।
जिनचरणकमलयुगलं गणधरगणनीयनखरकेशरकम् ॥

॥ श्रीरस्तु ॥



१ अपेक्षा आकांक्षा तद्वान् साकांक्षस्तस्मिन् साकांक्षे वाक्यान्तरापेक्षे सति ॥

२ वाक्यार्थो नामशब्दः ॥ बधिरो नाम व्याकरणं श्रोष्यति । मूको नाम धर्मं कथयिष्यति । शेष इति किं? यच्चयत्रयोर्लिङ् । अयदौ पूर्वयोगः सावकाशः । यदभावे तु यच्चयत्रयोरपि परत्वादयमेव स्यादिति शेषग्रहणं ।

॥ श्रीरस्तु ॥

# ॥ अथ कृत्संग्रहः ॥



प्रणम्रजनतापुण्यकृतं प्रहतदुष्कृतम् ।
श्रीवर्धमानमाराध्य कृत्संग्रहमहं ब्रुवे ॥

अथ धातुभ्यः कृत्प्रत्ययाः प्रदर्श्यन्ते ॥

**१६८७ घ्याद्यतिङ् कृत्** ।१।१।४३। घ्यणादिप्रत्ययरूपं कृत्संज्ञं भवति न तिङ् ॥

**१६८८ कृद् बहुलम्** ।४।३।५८। कृत्प्रत्यया निर्दिष्टे अनिर्दिष्टे चार्थे बहुलं प्रयोगानुसारेण भवन्ति ॥

**१६८९ घ्यण्** ।४।३।६०। धातोर्घ्यण् प्रत्ययो भवति ॥ साप्याना-प्यादिति सकर्मकात् कर्मण्यकर्मकाद् भावे । घणावितौ । अर्हे शक्तौ वा । एध्यं देवदत्तेन । अनुपान्त्यत्वान्नात आत् । वन्द्यः । स्वाद्यः । लोचृञ् दर्शने । लोच्यं त्राप्यं पान्यः पाण्यः सेव्यः । शिक्षि विद्योपादाने । शिक्ष्यः आशंस्यः ॥

**१६९० जनाप्ल्वापतो घ्यण्** ।४।३।५१। जनादिभ्यो घ्यण्प्र-त्ययो भवति कर्तरि वा ॥ आप्लाव्योऽयम् आप्लाव्यमनेन आपात्योऽयम् आपात्यमनेन । धार्यं द्योत्यं सार्यं तार्यं निगाद्यं नाद्यं । जल्प रप लप व्यक्तायां वाचि । राप्यं लाप्यम् आचाम्यं वाप्यं ॥

**१६९१ क्तेऽनिट्चजः कुर्घिति** ।४।१।१७१। क्तेऽनिटश्चजान्तस्य धातोर्घिति प्रत्यये कुर्भवति ॥ आसन्नः पाक्यं ॥

**१६९२ घ्यण्यावश्यके** ।४।१।१७६। आवश्यके घ्यणि चजोः कुर्न भवति ॥

**१६९३ लुग्घ्यप्यवश्यमः** ।२।२।६८। अवश्यमो घ्यपि लुक् भवति ॥ अवश्यपाच्यं । त्यज हानौ । घ्यणि ॥

**१६९४ त्यज्यजः** ।४।१।१७९। त्यज्यजोर्घ्यणि कुर्न भवति ॥ त्याज्यः । अत एव यजो वा[१] घ्यण् । याज्यः । भाग्यः रङ्ग्यः याच्यः हार्यम् ॥ अथादादिः । आद्यं वेद्यं घात्यः ॥

**१६९५ वाक्यार्घ[२]निदाघावदाघं नाम्नि** ।४।१।१७२। वाक्यादयो यण्घञन्ता निपात्यन्ते नाम्नि विषये ॥ वाक्यं पदसमुदायः । अन्यत्राकुत्वं । वाच्यं । जागर्यं यात्यम् आशास्यं ॥ दीव्यं बोध्यं । जन्योऽयं । मजन्वध इति नात् जन्यमनेन । कार्यं शार्यं सेक्यं मोक्यं मार्यं ॥

**१६९६ पाणिसमवात् सृजः** ।४।३।६१। पाणेः समवाच्च सृजेर्घ्यण् भवति ॥ क्यपोऽपवादः । पाणिना सृज्यत इति पाणिसर्ग्या रज्जुः । स्वकृतास्युक्तमिति समासः समवसर्ग्यं संसृज्यः । अञ्णीति अङित्त्वादेङ् । कोट्यं । तान्यः म्रान्यं रोध्यं रेक्यं वेक्यं योग्यं ॥

**१६९७ निप्राद्युजः शकि** ।४।१।१७७। निप्राभ्यां युजो घ्यणि कुर्न भवति शक्यर्थे ॥ नियोक्तुं शक्यो नियोज्यः प्रयोज्यः । अन्यत्र । योग्यः प्रयोग्यः ॥

**१६९८ भुजोऽद्रौ** ।४।१।१७८। भुजो घ्यण्यद्यर्थे कुर्न भवति ॥ भोज्यमन्नम् । अन्यत्र । भोग्यो देशः । पाल्यः व्यङ्ग्यः ॥

**१६९९ वा[३]धारेऽमावस्या** ।४।३।६३। आधारे अमावस्येति वा निपात्यते ॥ पक्षे घ्यण् । अमा वसतोऽस्यां तिथौ सूर्याचन्द्रमसौ इति अमावस्या अमावास्या ॥

---

१ यजो यप्रत्यय एव भवेत् प्वचसकील्यादिना । तथापि यजो घ्यणि परे कुत्वनिषेधवचनात् यजो घ्यणपि सिद्धः । अन्यथा तद्वचनं व्यर्थं स्यात् । अतो घ्यण् वा भवतीति भावः ॥ घ्यणभावपक्षे प्वचकील्यादिना वक्ष्यमाणप्रत्ययो योज्यः ॥

२ वक्तुं योग्यं वाक्यं । अर्हणमर्घः । निदहनं निदाघः । अवदहनं अवदाघः । नाम्नीति किं? वाच्यं अर्हः निदाहः अवदाहः ॥ वचेर्नियमार्थं वाक्यमिति निपातनम् ॥

३ अमा सहेत्यर्थः । अमा सह समं साकमिति धनञ्जयः ।

**१७०० प्राक्क्ति प्राप्तोऽसमः** ।४।३।५९। स्त्रियां क्तिन्नित्यतः प्राक् यः प्रत्ययो वक्ष्यते स एकस्मिन्नर्थे असरूपो विसदृशः प्राप्तो भवति नापवादी ॥

**१७०१ तव्यानीयौ** ।४।३।६७। धातोस्तव्यानीयौ प्रत्ययौ पर्यायेण भवतः ॥ एधितव्यम् एधनीयं देवदत्तेन । बीभत्सितव्यं बीभत्सनीयं । वन्दितव्यो वन्दनीयः । हत्तव्यं हदनीयं । तितिक्षितव्यं तितिक्षणीयं । तेजितव्यं तेजनीयं । जुगुप्सितव्यं जुगुप्सनीयं गोपितव्यं गोपनीयं । त्रप्तव्यं त्रपितव्यं त्रपणीयं । मीमांसितव्यं मीमांसनीयं । पनायितव्यं पनितव्यं पनायनीयं । पणायितव्यं पणितव्यं पणायनीयं पणनीयं । क्षन्तव्यं क्षमितव्यं क्षमणीयं । कामयितव्यं कामनीयं । कमितव्यं कमनीयं । सेवितव्यं सेवनीयं । गाढव्यं गाहितव्यं गाहनीयं । स्मेतव्यं स्मयनीयं । कोतव्यं कवनीयं धर्तव्यं धरणीयं । मातव्यं मानीयं । पवितव्यं पवनीयं । डयितव्यं डयनीयं । वर्तितव्यं वर्तनीयं । स्यन्तव्यं स्यन्दितव्यं स्यन्दनीयं । कल्प्तव्यं कल्पितव्यं कल्पनीयं । स्मर्तव्यं स्मरणीयं । सोढव्यं सहितव्यं सहनीयं । रन्तव्यं रमणीयं । बोद्धव्यं बोधनीयं । सत्तव्यं सदनीयं । क्रोष्टव्यं क्रोशनीयं । रोढव्यं रोहणीयं । भवितव्यं भवनीयं । श्रोतव्यं श्रवणीयं ॥

**१७०२ प्रब्रूपस्थोऽनीयः** ।४।३।५०। प्रब्रूपस्थाभ्यामनीयः कर्तरि वा भवति ॥ पक्षे कर्मणि । उपस्थातव्यो गुरुः शिष्येण । उपस्थानीयो गुरोश्शिष्यः । उपस्थानीयो गुरुश्शिष्येण । ध्यातव्यं ध्यानीयं । तरितव्यं तरीतव्यम् तरणीयम् । ऋतीयितव्यम् ऋतीयनीयम् । अर्तितव्यम् अर्तनीयं। चिकित्सितव्यं चिकित्सनीयं । नन्दितव्यं नन्दनीयं । सङ्क्तव्यं सञ्जनीयं । गोपायितव्यं गोपायनीयं । गोप्तव्यं गोपितव्यं गोपनीयं । धूपायितव्यं धूपायनीयं । धूपितव्यं धूपनीयं । गन्तव्यं गमनीयं । स्रप्तव्यं सर्प्तव्यं सर्पणीयं । नन्तव्यं नमनीयं । यन्तव्यं यमनीयं । क्रमितव्यं क्रमणीयं भ्रमितव्यं भ्रमणीयम् । अष्टव्यम् अक्षितव्यम् अक्षणीयं । द्रष्टव्यं

१ प्राक्क्ति प्राप्तोऽसम इत्यारभ्य 'स्त्रियां क्तिन' इति सूत्रपर्यन्तमित्यर्थः ॥

दर्शनीयं । श्वयितव्यं श्वयनीयं । वस्तव्यं वसनीयं । यष्टव्यं यजनीयं । वोढव्यं वहनीयं । पक्तव्यं पचनीयं । रङ्क्तव्यं रञ्जनीयं । दीदांसितव्यं दीदांसनीयं । शीशांसितव्यं शिशांसनीयं । शप्तव्यं शपनीयं । गोढव्यं गूहितव्यं गूहनीयं । श्रयितव्यं श्रयणीयं । हर्तव्यं हरणीयं । कर्तव्यं करणीयं । नेतव्यं नयनीयम् ॥

अथ अदादिः ॥ अत्तव्यम् अदनीयं । वेदितव्यं वेदनीयं । हन्तव्यं हननीयं । मार्ष्टव्यं मार्जितव्यं मार्जनीयं । वक्तव्यं वचनीयं । रोदितव्यं रोदनीयं । स्वप्तव्यं स्वपनीयं । जागरितव्यं जागरणीयं । दरिद्रितव्यं दरिद्रणीयं । रवितव्यं रवणीयम् । एतव्यम् अयनीयम् । ईशितव्यम् ईशनीयं । सोतव्यं सवितव्यं सवनीयं । शयितव्यं शयनीयं । दोग्धव्यं दोहनीयम् ॥

अथ ह्वादिः ॥ होतव्यं हवनीयम् ॥ अथ दिवादिः ॥ देवितव्यं देवनीयं । नर्तितव्यं नर्तनीयं । शोष्टव्यं शोषणीयं । शक्तव्यं शकनीयं । शमितव्यं शमनीयं । रोष्टव्यं रोषितव्यं रोषणीयं । लोब्धव्यं लोभितव्यं लोभनीयं । रद्धव्यं रधितव्यं रन्धनीयं । नंष्टव्यं नशितव्यं नशनीयं । त्रप्तव्यं तर्प्तव्यं तर्पितव्यं तर्पणीयं । द्रोग्धव्य द्रोढव्यं द्रोहितव्यं द्रोहणीयं । बहुलवचनात् कर्तृकरणयोरप्यनीयः ॥ मोहयत्यात्मानं मुह्यत्यनेनात्मेति वा मोहनीयं कर्म । एवं ज्ञानावरणीयादयः । मन्तव्यं मननीयं । स्रष्टव्यं सर्जनीयम् ॥ अथ स्वादिः ॥ सोतव्यं सवनीयम् । अष्टव्यम् अशितव्यम् अशनीयम् ॥ अथ क्र्यादिः ॥ क्रेतव्यं क्रयणीयं । ग्रहीतव्यं ग्रहणीयं । ज्ञातव्यं ज्ञानीयं । वरितव्यं वरीतव्यं वरणीयम् ॥ अथ तुदादिः ॥ तोत्तव्यं तोदनीयं । भ्रष्टव्यं भर्ष्टव्यं भ्रज्जनीयं भर्जनीयं । क्रष्टव्यं कर्ष्टव्यं कर्षणीयं । कर्तितव्यं कर्तनीयं । करितव्यं करीतव्यं करणीयं । मङ्क्तव्यं मज्जनीयम् । एष्टव्यम् एषितव्यम् एषणीयं । कुटितव्यं कुटनीयं । कुवितव्यं कुवनीयम् । उद्विजितव्यम् उद्वेजनीयम् । आरब्धव्यं रम्भणीयं । लब्धव्यम् लम्भनीयम् ॥ अथ तनादिः ॥ तनितव्यं तननीयं । मनितव्यं

मननीयम् ॥ अथ रुधादिः ॥ रोद्धव्यं रोधनीयं । भङ्क्तव्यं भञ्जनीयम् । अङ्क्तव्यं अञ्जितव्यम् अञ्जनीयम् ॥ अथ चुरादिः ॥ चोरयितव्यं चोरणीयं ॥

१७०३ **पवर्चत्ताकिशक्शासियत्सहियजोऽय्वासुंवपरपलपापत्रपडिपद्भचमुर्यः** ।४।३।६८। पवर्गान्तादजन्ताच्चतादेश्च धातोर्यो भवति न य्वादेः ऋवर्णान्ताच्च ॥ घ्यणोऽपवादः । बीभत्स्यं । यतैङ् प्रयत्ने । यत्यं । गोप्यं । लबुङ् अवस्रंसने । लम्ब्यं । वल्भि भोजने वल्भ्यं । क्षम्यं काम्यं कम्यं स्मेयम् । एङ्वौ । कव्यं ॥

१७०४ **ये** ४।२।८८। आदन्तस्य यप्रत्यये ईद्भवति ॥ एङ् । मेयं देयं । पव्यं क्षोभ्यं सह्यं वम्यं ॥

१७०५ **भूगो यो वा** ।४।३।४९। भूगाभ्यां यः कर्तरि वा भवति ॥ भव्यो देवदत्तः । भव्यं देवदत्तेन । स्रव्यं जेयं धेयं पेयं घ्रेयं ध्मेयं स्थेयं म्नेयं देयं । गेयं । गेयो गाथानां चैत्रः । गेया गाथा चैत्रेण । देयं गोप्यं धूप्यं तप्यं गम्यं नम्यं क्रम्यं भ्रम्यं शस्यं श्वेयं यज्यं वेयं ह्वेयं । चतेङ् याचने ॥ चत्यं शप्यं श्रेयं नेयं ॥ अथ अदादिः ॥ स्वप्यं दरिद्र्यं रव्यम् आस्येयं सव्यं शेयम् अध्येयम् ऊर्णव्यम् ॥ अथ ह्वादिः ॥ हव्यं हेयं मेयं धेयम् देयं ॥ अथ दिवादिः ॥ क्षेप्यं शक्यम् शम्यं दम्यं तम्यं श्रम्यं क्षम्यं सेयं सव्यम् ॥ अथ स्वादिः ॥ श्रव्यं ॥ क्र्यादिः ॥ क्रेयं प्रेयं लव्यं ज्ञेयम् । णू स्तवने । कुटादित्वान्नैङ् । प्रणूयः आरभ्यं लभ्यं ॥

१७०६ **य्याङः** ।४।२।२०४। आङो लभो यादौ प्रत्यये नम् भवति ॥ आलम्भ्यः क्रोधः ॥

१७०७ **स्तुतावुपात्** ।४।२।२०५। उपाल्लभः यादौ प्रत्यये स्तुतौ नम् भवति ॥ उपलम्भ्यो देवः । अन्यत्र उपलभ्यं धनं । चौर्यं मृग्यम् इत्यादि ॥

---

१ य्वादिप्रतिषेधः किं? याव्यं आसाव्यं वाप्यं राप्यं लाप्यं आपत्राप्यं दाभ्यं आचाम्यं कार्यं तार्यं ॥

१७०८ **गन्मद्यमोऽनुपसर्गात्** ।४।३।६९। अनुपसर्गेभ्यो गदादिभ्यो यो भवति ॥ गद्यं मद्यं यम्यम् । अनुपसर्गादिति किं? । निगाद्यं प्रमाद्यं नियाम्यं ॥

१७०९ **चरः** ।४।३।७०। अनुपसर्गाच्चरो यो भवति ॥ चर्यं व्रतम् । उपसर्गात्सञ्चार्योऽक्षः ॥

१७१० **आङोऽगुरौ** ।४।३।७१। आङश्चरेर्यो भवति न गुरौ ॥ आचर्यो धर्मः । गुरौ आचार्यः समन्तभद्रः ॥

१७११ **पणोपसृव्रवदाद्विक्रेयर्तुमत्युपेयागर्ह्ये** ।४।३।७२। पणादिभ्यो यथासङ्ख्यं विक्रेयादिष्वर्थेषु यो भवति ॥ पण्यं विक्रेयम् । उपसर्या ऋतुमती । वर्या उपेया वेश्या । अवद्यं गर्ह्यं पापम् । अन्यत्र । पाण्यो गुरुः । उपसार्यस्साधुः । वृत्या गौः । अवाद्यो जनवादः ॥

१७१२ **स्वामिवैश्येऽर्तेः** ।४।३।७३। अनुपसर्गादर्तेर्यो भवति स्वामिवैश्ययोः ॥ अर्यः स्वामी । अर्यो वैश्यः । अन्यत्र आर्यः ॥

१७१३ **क्षय्यजय्यौ शक्तौ** ।४।२।१०७। एतौ यान्तौ शक्तौ निपात्येते ॥ क्षेतुं शक्यः क्षय्यः । जेतुं शक्यः जय्यः ॥

१७१४ **क्रय्यः क्रयार्थे** ।४।२।१०८। क्रयविषये क्रय्य इति निपात्यते ॥

१७१५ **सङ्गतेऽजर्यम्** ।४।३।४७। सङ्गते विशेष्ये अजर्यमिति कर्तरि निपात्यते ॥ अजर्यं सङ्गतम् ॥

१७१६ **ओरावश्यके** ।४।३।६२। उवर्णान्तादावश्यके द्योत्ये घ्यण् भवति ॥ भाव्यम् अवश्यभाव्यं काव्यम् अवश्यकाव्यं । पाव्यम् अवश्य-

---

१ उपपूर्वकसृ गतौ । वृञ् वरणे । नञ्पूर्वाद्वदः ॥ पण्यः कम्बलः । पण्या गौः विक्रेया इत्यर्थः । उपसर्या गौ । उपसर्या बडवा ऋतुमती काल्या प्रजन इत्यर्थः । काल्योपसर्या प्रजने ॥ शतेन वर्या सहस्रेण वर्या स्त्री उपेया सम्भक्तव्या मिश्रीकर्तव्या इत्यर्थः । नाम्नि सति वदः क्यप् च इति क्यपोऽपवादः । अवाद्यमित्यत्र निरुपसर्गात् घ्यणि पश्चात् नञ्समासः ॥

पाव्यं । लाव्यम् अवश्यलाव्यं । साव्यम् अवश्यसाव्यं । धाव्यम् अवश्यधाव्यम् ॥

**१७१७ वदः सुपः क्यप् च** ।४।३।७४। सुबन्तादनुपसर्गाद् वदः क्यप् यश्च भवतः ॥ कपावितौ क्यपीक् । ब्रह्मोद्यं ब्रह्मवद्यं ॥

**१७१८ हत्याभूयं भावे** ।४।३।७५। सुपोऽनुपसर्गात् हत्या भूयमिति भावे निपात्यते ॥ ब्रह्मणो हननं ब्रह्महत्या स्त्रियामेव । बन्धोर्भावः बन्धुभूयं नपुंसक एव ॥

**१७१९ अग्निचित्या** ।४।३।७६। स्त्रियां भावे इदं निपात्यते ॥ अग्नेश्चयनमग्निचित्या ॥

**१७२० खेयमृषोद्यम्** ।४।३।७७। खनः क्यपि खेयमिति निपात्यते मृषाद्वदो मृषोद्यमिति । न भावे ॥

**१७२१ कुप्याज्यभिद्योद्ध्यसिध्ययुग्यं नाम्नि** ।४।३।७८। एते नाम्नि क्यबन्ता निपात्यन्ते ॥ कुप्यं धनम् । आज्यं घृतं । भिद्योद्ध्यौ नदौ । सिध्यः पुष्यनक्षत्रं । युग्यं यानं ॥

**१७२२ शासॄवृदृजुषस्त्वेत्यृदुपान्त्यादनृचृक्लृपचृतः** ।४।३।७९। शासादिभ्यः ऋदुपान्त्येभ्यश्च क्यप् भवति न ऋचृक्लृपचृतिभ्यः ॥ शिष्यं ॥

**१७२३ ह्रस्वस्य तक् पिति कृति** ।४।१।४२। ह्रस्वान्तस्य धातोः पिति कृति तग् भवति ॥ अकावितौ । आवृत्यं जुष्यं स्तुत्यम्

---

१ हत्येति हन्तेः स्त्रीभावे क्यप् तकारश्चान्त्यादेशः । भ्रूणहत्या दरिद्रहत्या स्वहत्या । भूयेति भवतेर्नपुंसके भावे क्यप् । ब्रह्मभूयं देवभूयं ब्रह्मत्वं देवत्वं गत इत्यर्थः । भावे धात्वर्थे ॥

२ गोपायते इति कुप्यं । अज क्षेपणे अज्यते इति आज्यम् । भिनत्ति कूलमिति भिद्यो नदः । उज्झत्युदकमिति उद्ध्यो नदः । उज्झ उत्सर्गे । सिध्यन्त्यर्था अस्मिन्निति सिध्यः पुष्यनक्षत्रं । युज्यते गमने इति युग्यं । युग्यं पत्रं च धोरणं । युजृन् योगे ॥

इत्यम् अधीत्यं वृत्यं वृध्यं नृत्यं कृत्यं कृष्यमित्यादि । ऋचादेः । अर्च्यं क्लृप्यं चर्त्यं ॥

१७२४ **ग्रहः पदास्वैरिबाह्यापक्ष्ये** ।४।३।८१। पदादिष्वर्थेषु ग्रहः क्यप् भवति ॥ प्रगृह्यं पदं । कर्मगृह्यः आत्मा कर्मपरतन्त्रः । कुलगृह्या स्त्री कुलबाह्या । बाह्येति स्त्रीनिर्देशात् न पुंनपुंसकयोः । धर्मगृह्यः साधुः । धर्मपक्ष्यः ॥

१७२५ **भृञोऽनाम्नि** ।४।३।८२। भृञः क्यप् भवति न नाम्नि ॥ भृत्योऽनुजीवी । भृत्यं कुलं । नाम्नि भार्या वधूः ।

१७२६ **समो वा** ।४।३।८३। समो भृञः क्यप् भवति वा ॥ सम्भृत्यः सम्भार्यः ॥

१७२७ **कृमृजवृषशान्सगुहदुहजपः** ।४।३।८४। कादिभ्यो वा क्यप् भवति ॥ कृत्यं कार्यं मृज्यं मार्ग्यं । वृषू सेवने । वृष्यं वर्ष्यं शस्यं शंस्यं गुह्यं गोह्यं दुह्यं दोह्यं जप्यं जाप्यं ।

१७२८ **रुच्याव्यथ्यौ** ।४।३।४८। एतौ क्यबन्तौ कर्तरि निपात्येते ॥ रोचत इति रुच्यः मोदकः । न व्यथते इति अव्यथ्यश्चैत्रः ॥

१७२९ **ण्वुतृज्लिहादिभ्यश्च** ।४।३।८५। धातोर्लिहादिभ्यश्च ण्वु तृ अच् प्रत्यया भवन्ति ॥ णचावितौ । बोरकः । एधत इति एधकः एधिता एधः । बीभत्सकः बीभत्सिता बीभत्सः । वन्दकः वन्दिता वन्दः । ह्रादकः ह्रत्ता ह्रदः । तितिक्षकः तितिक्षिता तितिक्षः । तेजकः तेजिता तेजः । जुगुप्सकः जुगुप्सिता जुगुप्सः । गोपकः गोपिता गोपः । त्रापकः त्रपिता त्रप्ता त्रपः । मीमांसकः मीमांसिता मीमांसः । पनायकः पनायिता पनायः । पानकः पनिता पनः । मजन्वध इति नात् । क्षमकः क्षन्ता क्षमिता क्षमः । कामकः कामयिता कमिता कामः कमः । सेवकः सेविता सेवः । गाहकः

---

१ सुबन्तं पद । स्वयमीर्ते इति स्वैरी न स्वैरी अस्वैरी स्वेच्छाचारी न भवतीत्यर्थः । बहिर्भवो बाह्यः । पक्षे भवः पक्ष्यः वर्ग्यः । घ्यणोऽपवादः ॥

२ भृत्यः पोष्य इत्यर्थः । भार्यानाम्नी क्षत्रिया काचिन्नारी ॥

गाढा गाहिता गाहः । स्मायकः स्मेता स्मयः । कावकः कोता कवः । धारकः धर्ता धरः । मायकः माता मायः । पावकः पविता पवः । वर्तकः वर्तिता वर्तः । स्यन्दकः स्यन्दिता स्यन्ता स्यन्दः । कल्पकः कल्प्ता कल्पिता कल्पः । स्मारकः स्मर्ता स्मरः । साहकः सोढा सहिता सहः । रामकः रन्ता रमः । बोधकः बोद्धा बोधः । क्रोशकः क्रोष्टा क्रोशः । रोहकः रोढा रोहः । भावकः भविता भवः । स्रावकः स्रोता स्रवः । तारकः तरिता तरीता तरः । चिकित्सकः चिकित्सिता चिकित्सः । नन्दकः नन्दिता नन्दः । सञ्जकः सङ्क्ता सञ्जः । गोपायकः गोपायिता गोपायः । गोपकः गोप्ता गोपिता गोपः । गामकः गन्ता गमः । सर्पकः स्रप्ता सर्प्ता सर्पः । नामकः नन्ता नमः । क्रमकः क्रमिता क्रमः । भ्रमकः भ्रमिता भ्रमः । अक्षकः अष्टा अक्षिता अक्षः । दर्शकः द्रष्टा दर्शः । श्वायकः श्वयिता श्वयः । वासकः वस्ता वसः । याजकः यष्टा यजः । वाहकः वोढा वहः । पाचकः पक्ता पचः । रञ्जकः रङ्क्ता रञ्जः । त्रापकः त्रप्ता त्रपः । गूहकः गोढा गूहिता गूहः । श्रायकः श्रयिता श्रयः । हारकः हर्ता हरः । कारकः कर्ता करः । नायकः नेता नयः ॥

अथ अदादिः ॥ आदकः अत्ता घसः । वेदकः वेदिता देवः । घातकः हन्ता हनः । मार्जकः मार्ष्टा मार्जिता मार्जः । वाचकः वक्ता वचः । स्वापकः स्वप्ता स्वपः । जागरकः जागरिता जागरः । दरिद्रायकः दरिद्रिता दरिद्रः । रावकः रविता रवः । आयकः एता अयः । ईशकः ईशिता ईशः । सावकः सोता सविता सवः । शायकः शयिता शयः । दोहकः दोग्धा दोहः । लेहकः लेढा लेहः ॥

अथ ह्वादिः ॥ ह्वावकः होता हवः ॥ अथ दिवादिः ॥ देवकः देविता देवः । नर्तकः नर्तिता नर्तः । शोषकः शोष्टा शोषः । श्लेषकः श्लेष्टा श्लेषः । शाककः शक्ता शकः । शमकः शमिता शमः । रोषकः रोष्टा रोषिता रोषः । कोपकः कोपिता कोपः । लोभकः लोब्धा लोभिता लोभः । रन्धकः रधिता रद्धा रन्धः । नाशकः नंष्टा नशिता नशः । तर्पकः तर्पिता त्रप्ता तर्प्ता तर्पः ।

द्रोहकः द्रोग्धा द्रोढा द्रोहिता द्रोहः। मानकः मन्ता मनः। योधकः योद्धा योधः। सर्जकः स्रष्टा सर्जः। अथ स्वादिः॥ सावकः सोता सवः। आशकः अष्टा अशिता अशः॥ अथ क्र्यादिः॥ क्रायकः क्रेता क्रयः। ग्राहकः ग्रहीता ग्रहः। ज्ञायकः ज्ञाता ज्ञः। वारकः वरिता वरीता वरः॥ अथ तुदादिः॥ तोदकः तोत्ता तोदः। भ्रज्जकः भर्जकः भ्रष्टा भर्ष्टा भ्रज्जः भर्जः। कर्षकः क्रष्टा कर्ष्टा कर्षः। कारकः कारिता करीता करः। मज्जकः मङ्क्ता मज्जः। एषकः एष्टा एषिता एषः। कोटकः कुटिता कुटः। कावकः कुविता कुवः। उद्वेजकः उदेजिता उद्वेजः। आरम्भकः आरब्धा आरम्भः। लम्भकः लब्धा लम्भः॥ अथ तनादिः॥ तानकः तनिता तनः। मानकः मनिता मनः॥ अथ रुधादिः॥ रोधकः रोद्धा रोधः। भञ्जकः भङ्क्ता भञ्जः। अञ्जकः अङ्क्ता अञ्जिता अञ्जः॥ अथ चुरादिः॥ चोरकः चोरयिता चोरः इत्यादि॥

१७३० **नन्द्यादिभ्योऽनः** ।४।३।८६। नन्द्यादिभ्यः अनप्रत्ययो भवति कर्तरि॥ नन्दयतीति नन्दनः वासनः वामनः दूषणः भूषणः साधनः वादनः शोभनः रोचनः सहनः तपनः मदनः जनार्दनः मधुसूदनः वित्तनाशनः कुलदमन इत्यादयः शिष्टप्रयोगानुसारेण नेयाः॥

१७३१ **ग्रहादिभ्यो णिन्** ।४।३।८७। ग्रहादिभ्यो णिन् भवति कर्तरि॥ गृह्णातीति ग्राही उत्साही उद्वाही उद्भासी स्थायी मन्त्री सम्मर्दी विसारीत्यादयः प्रयोगगम्याः॥

१७३२ **नेर्वपश्रुशाविशरक्षः** ।४।३।८८। नेर्वपादिभ्यो णिन् भवति कर्तरि॥ निवापी निश्रावी निशायी निवेशी निरक्षी॥

---

१ नन्द्यादयो धातुपाठे न निर्दिष्टाः किन्तु नन्दनरमणेत्यादिप्रातिपदिकग्रहणे प्रोध्दृत्य ये पठ्यन्ते तेऽत्र गृह्यन्ते इत्याहुः॥ दूषणः अत्र 'ऊदुपधो णौ' इत्यूत्॥ रोचनः अत ण्यन्तेभ्यः॥ मदयतीति मदनः एते सञ्ज्ञायां स्त्रीपुंसौ मदयतीति मदनः॥ जनानर्दयतीति जनार्दनः अर्द गतियाचनयोः॥ षूदिक्षरणे मधुसूदनः अत्राणिष्यते॥

२ ग्रहादयः प्रातिपदिकपाठादेवापोध्दृताः। ग्रहादिराकृतिगणः तेन विसारीत्यादि सिद्धम्॥

**१७३३ नञो याचृव्याहृसंव्याहृव्रजवद्वसः** ।४।३।८९। नञो यान्त्रादिभ्यो णिन् भवति ॥ अयाची अव्याहारी असंव्याहारी अव्राजी अवादी अवासी ॥

**१७३४ अचोऽचित्ते** ।४।३।९०। नञोऽजन्तेभ्यो णिन् भवत्यचित्ते कर्त्तरि ॥ अकारी परशुः । अहारी गन्धः । सचित्ते । अकर्ता चैत्रः ॥

**१७३५ रुधराधोऽपात्** ।४।३।९१। अपाद्रुधराधिभ्यां णिन् भवति ॥ अपरोधी अपराधी ॥

**१७३६ इन् च परिभ्वः** ।४।३।९२। परेर्भुवः इन्णिनौ भवतः ॥ परिभवी परिभावी ॥

**१७३७ ज्ञाकॄगॄप्रीगुपान्त्यात् कः** ।४।३।९४। ज्ञादिभ्यः इगुपान्त्येभ्यश्च कर्तरि को भवति ॥ अचोऽपवादः । क इत् । इटि चातो लुगित्यातो लुक् । प्रज्ञः किरः अवकिरः गिरः निगिरः गिलः निगिलः प्रियः विलिखः बुधः युधः विकृषः ॥

**१७३८ उपसर्गादातोऽनिक्** ।४।३।९५। उपसर्गादादन्तात् को भवति के च यञो नेक् ॥ प्रस्थः ॥

**१७३९ प्रष्ठोऽग्रगामी** ।२।२।१४६। अग्रगामिन्यर्थे प्रष्ठ इति निपात्याते ॥ सुम्लः सुम्लः सुत्रः सुरः व्यालः । अनिगिति किम् । आह्वः प्रह्वः प्रज्यः ॥

**१७४० पाघ्राध्माधेड्दृशश्शः** ।४।३।९६। उपसर्गात् पादिभ्यः शो भवति ॥ कापवादः । श इत् । शित्त्वात् पिबादि । उत्पिबः उज्जिघ्रः विधमः विधयः उत्पश्यः ॥

---

१ इक् आगमः । उपसर्गादिति किं? त्राता ॥ आत इति किं? प्रहर्ता । अन्यथा इगयमः स्यात् । यथा जुहुवतुः ॥

२ पा इति पिबतेर्ग्रहणं न पातेः । केचिदुपसर्गादिति नानुवर्तयन्ति पश्य इति हि दृश्यते इत्याहुः । व्याघ्र इति व्याघ्रादिभिर्गौणैस्तदनुक्तौ इति निर्देशात्सिद्धः ॥

**१७४१ धारिपारिवेद्युदेजिचेतिसातिसाहिलिम्पविन्दोऽनुपसर्गात्** ।४।३।९७। अनुपसर्गेभ्यो धार्यादिभ्यो ण्यन्तेभ्यो लिम्पविन्दाभ्यां च शो भवति ॥ धारयः पारयः वेदयः उदेजयः चेतयः सातयः साहयः लिम्पः विन्दः । उपसर्गात् । संन्धारयिता प्रलिपः प्रविदः ॥

**१७४२ धुन्भ्यो णः** ।४।३।९८। अनुपसर्गाभ्यां धुनीभ्यां णो भवति॥ धावः नायः । उपसर्गात् । प्रधवः प्रणयः ॥

**१७४३ सहादिग्रहाद्वा** ।४।३।९९। अनुपसर्गेभ्यस्सहादिभ्यो ग्रहेश्च णो वा भवति ॥ साहः सहः रामः रमः बोधः बुधः ज्वालः ज्वलः चालः चलः हालः हलः पातः पतः पादः पदः मादः मदः वामः वमः क्षारः क्षरः सादः सदः शादः शदः भावः भवः ग्राहः ग्रहः । उपसर्गात् । विबुधः उज्ज्वलः प्रभवः इत्यादि ॥

**१७४४ श्यात्तन्व्यधास्रुसंस्रवसावहृतीण्श्वसः** ।४।३।१००। श्यैङः आदन्तात्तनादिभ्यश्च णो भवति ॥ प्रतिश्यायः धायः दायः ग्लायः म्लायः तानः उत्तानः व्याधः आस्रावः संस्रावः अवसायः अवहारः अत्यायः श्वासः उच्छ्वासः ॥

**१७४५ नृतंखनञ्जो वुट् च्छिल्पिनि** ।४।३।१०१। नृतादिभ्यो

---

१ चितै सञ्ज्ञाने । चृतै हिंसायां ग्रथने च सौत्रो धातुः ॥ सातं करोतीति णिच् सातीति सुब्धातुः ॥ अथवा " सादेरगतौ तः" इति कातन्त्रसूत्रनियमात् तादेशः ॥

२ अनुपसर्गाभ्याम् ॥ छत्रधारः कुड्यलेपः इति मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरानित्यण् भवति। निलिम्पाः निलिम्पा नाम देवाः। गोविन्दः अरविन्दः कुविन्दः कुरुविन्दः इति सञ्ज्ञा एताः, अत्र लिपिविदिभ्यां प्रत्ययः। पश्चाद्गतादिषु इति समासः ॥

३ तनूञ् व्यध आङ्पूर्वस्रु गतौ सम्पूर्वस्रु गतौ अवपूर्वस्रु गतौ षो अन्तकर्मणि अवपूर्वहृञ् हरणे अतिपूर्वइण् श्वस प्राणने ॥ अदन्तग्रहणेनैव सिद्धे पुनः श्यादिग्रहणं, अन्यथा सोपसर्गत्वे उपसर्गाद्धातोरिति कप्रत्ययः। प्रतिशयः॥ अनुपसर्गात् वेति चेह निवृत्तम् ॥

४ रञ्जि रागे। शिल्पं क्रियासु कौशल्यं तद्वान् शिल्पी तस्मिन् शिल्पिनि ॥

वुड् भवति शिल्पिनि कर्तरि ॥ टित्त्वात् स्त्रियां ङी । नर्तकः नर्तकी खनकः खनकी । अत एव निपातनात् न्लुक् । रजकः रजकी ॥

**१७४६ पाणिघद् ताडघद्** ।४।३।१०२। एतौ शिल्पिनि कर्तरि निपात्येते ॥ पाणिना हन्तीति पाणिघः पाणिघी मार्दङ्गिकादि । तालं हन्तीति तालघः तालघी ॥

**१७४७ गस्थकः** ।४।३।१०३। गायतेः शिल्पिनि कर्तरि थको भवति । गाथकः ॥

**१७४८ टनण्** ।४।३।१०४। गायतेः शिल्पिनि कर्तरि टनण् भवति। टणावितौ । यम् । गायनः गायनी ॥

**१७४९ हो व्रीहिकाले** ।४।३।१०५। जहातेष्टनण् भवति व्रीहौ काले चार्थे ॥ हायना व्रीहयः । हायनः कालः ॥

**१७५० प्रसृल्वः साधौ वुच्** ।४।३।१०६। प्रवादिभ्यः साधुत्वविशिष्टेऽर्थे वुच् भवति ॥ च इत् । साधु प्रवते प्रवकः एवं सरकः लवकः । अन्यत्र ण्वुः । प्रावकः सारकः लावकः ॥

**१७५१ आशिषि वुन्** ।४।३।१०७। आशिषि धातोर्वुन् भवति ॥ न इत् । जीवतादित्याशास्यमानो जीवकः जीवका । नित्त्वान्नेत् । एवं भवकः शयकः ॥

**१७५२ नाम्नि क्तिः** ।४।३।१०८। आशिषि धातोः क्तिर्भवति नाम्नि ॥ शमयतात् पापानीत्याशास्यमानः शान्तिः । क्रिजलीति दीर्घः । ग्रहादिनियमान्नेट् । भूतिरित्यादि ॥

**१७५३ कर्मणोऽण्** ।४।३।१०९। कर्मणः पराद्धातोरण् भवति ॥

---

१ पाणिताड्शब्दस्य हन्तेः शिल्पिनि कर्तरि अट्प्रत्ययो घादेशश्च निपात्यते । डकारो ड्यर्थः । पाणिं हन्तीति वा । शिल्पिनीति किं? पाणिघातः ॥

२ ओहाक् त्यागे जहात्युदकमिति हायनो व्रीहिः । जहाति भावानिति हायनः संवत्सरः ॥

३ अभीष्टस्य प्रार्थना आशीस्तस्यां गम्यमानायामित्यर्थः । त्यायदायत इति नेत् ॥

अजाद्यपवादः ॥ कुम्भं करोतीति कुम्भकारः काण्डलावः वेदाध्यायः चर्चापाठः छत्रधारः द्वारपालः भारवाहः गोदोहः। स्त्रियां कुम्भकारी इत्यादि ॥

**१७५४ सत्यागदास्तोः कारे** ।२।२।७३। सत्यादीनां कारशब्दे मम् भवति ॥ सत्यं करोतीति सत्यंकारः। अगदं करोतीत्यगदंकारः। अस्तुंकारः ॥

**१७५५ भ्राष्ट्राग्न्योरिन्धे** ।२।२।७४। भ्राष्ट्राग्न्योरणन्ते इन्धशब्दे परे मम् भवति ॥ भ्राष्ट्रमिन्धः अग्निमिन्धः ॥

**१७५६ शीलिकामिभक्ष्याचरीक्षिक्षमो णः** ।४।३।११०। कर्मणः शील्यादिभ्यो णो भवति ॥ धर्मशीलः धर्मशीला धर्मकामः पायुभक्षः कुशलाचारः परापेक्षः। क्लेशक्षमः ॥

**१७५७ गोऽनुपसर्गात् टक्** ।४।३।१११। कर्मणोऽनुपसर्गात् गायतेष्टक् भवति ॥ टकावितौ। इटि चातो लुक्। वक्त्रगः वक्त्रगी ॥

**१७५८ सुराशीधोः पिबात्** ।४।३।११२ सुराशीधुभ्यामनुपसर्गात् पिबतेष्टक् भवति ॥ सुरापः सुरापी शीधुपः शीधुपी ॥

**१७५९ आतोऽह्वावामोऽड्** ।४।३।११३। कर्मणोऽनुपसर्गादादन्ताद्धातोरड् भवति न ह्वावामाभ्यः ॥ ड इत्। अन्त्याजादिलुक्। धनदः तनुत्रमित्यादि। ह्वावामाभ्योऽण। जिनह्वायः तन्तुवायः धान्यमायः ॥

**१७६० दाज्ञः प्रे** ।४।३।११४। कर्मणः प्रपराभ्यां दाज्ञाभ्यामड् भवति ॥ सुखप्रदः वचनप्रज्ञः ॥

**१७६१ क्लेशतमसोऽपे** ।४।३।११७। क्लेशतमोभ्यामपाद्धन्तेरड् भवति ॥ क्लेशापहः तमोऽपहः ॥

**१७६२ अमनुष्ये टक्** ।४।३।११९। कर्मणो हन्तेष्टक् भवति

---

१ सदभिधानं नित्यं ॥ नास्ति गदो व्याधिर्यस्यासावगदो नीरोग इत्यर्थः ॥ अभ्युपगमे वर्तमानो निपातः अस्त्विति उच्यते। अस्तुंकारोऽभ्युपगमे इति कोशात् ॥

२ वक्त्रं छन्दोभेदः। अनुपसर्गादिति किं? वक्त्रसंगायः ॥

३ अन्यस्मात् क्षीरपा बाला। पिबादिति किं? सुरां पातीति सुरापा ॥

अमनुष्ये कर्तरि ॥ वातघ्नमाविकं क्षीरं पित्तघ्नं माहिषं पयः । पतिघ्नी पाणिरेखा । मनुष्ये कर्तरि । आखुघातः वृषलः । पापघातः मुनिः ॥

**१७६३ जायापतेर्लक्षणे** ।४।३।१२०। जायापतिभ्यां हन्तेष्टक् भवति मनुष्ये कर्तरि लक्षणे गम्यमाने ॥ जायाघ्नो वरः । पतिघ्नी कन्या ॥

**१७६४ राजघः** ।४।३।१२२। राजानं हन्तीति राजघ इति निपात्यते ॥

**१७६५ अर्होऽः** ।४।३।१२३। कर्मणोऽर्हः अप्रत्ययो भवति ॥ अणोऽपवादः । पूजार्हो जिनः । पूजार्हा प्रतिमा ॥

**१७६६ शक्तिलाङ्गलाङ्कुशयष्टितोमरधनुर्घटाद् ग्रहः** ।४।३।१२४। शक्त्यादिभ्यो ग्रहेरड् भवति ॥ शक्तिग्रहः लाङ्गलग्रहः अङ्कुशग्रहः यष्टिग्रहः तोमरग्रहः धनुर्ग्रहः घटग्रहः । अन्यस्मात् । पाशग्राहः ॥

**१७६७ सूत्राद्धारणे** ।४।३।१२५। सूत्राद् ग्रहेरड् भवति धारणेऽर्थे ॥ सूत्रग्रहः ॥

**१७६८ हृञो वयोऽनुद्यमे** ।४।३।१२६। कर्मणो हृञोऽद् भवति वयस्यनुद्यमे च कर्तरि ॥ कवचहरः कुमारः । विषहरो मणिः । उद्यमे भारहारः ॥

**१७६९ आङि शीले** ।४।३।१२७। कर्मणः आङो हृञोऽद्

---

१ लक्षणं शुभाशुभसूचकं शरीरस्थं किञ्चित्तिलकालकादि ॥ मनुष्यार्थ आरम्भः ॥

२ अर्थं सूचयति संक्षेपतो गमयतीति सूत्रं तस्मात् ॥ कालान्तरादिस्मरणशक्तिर्धारणं तस्मिन् । धारण इति किं? यो हि सूत्रमुपादत्ते स सूत्रग्राहः ॥

३ प्राणिनां कालकृताऽवस्था यौवनादिर्वयः । उद्यम उत्क्षेपणं आकाशस्थस्य वा धारणं वयसि क्रियमाणः सम्भाव्यमानो वा उद्यम उच्यमानो वयो गमयतीत्युद्यमार्थं वयोग्रहणम् ॥ अस्थिहारः श्वा अस्थ्युत्क्षेपणसमर्थे वयसि वर्तते इत्यर्थः । वयोग्रहणस्य उद्यमार्थत्वादंशहर इत्यस्य अंशं भागं स्वीकरोति न तूत्क्षिपतीत्यर्थः ॥

४ शील्यते इति शीलं स्वभाव इत्यर्थः तस्मिन् । यस्य कर्तुः पुष्पाद्याहरणे न स्वभावादन्यो हेतुरस्ति स एवमुच्यते ॥ आङीति किं? पुष्पाणि हर्ता । शीलेति किं? पुष्पाहारः ॥

भवति शीले स्वभावे द्योत्ये ॥ पुष्पाण्याहर्तुं शीलमस्य पुष्पाहरः सुखाहरः ॥

**१७७० दृतिनाथयोः पशाविः** ।४।३।१२८। दृतिनाथाभ्यां हृञ इङ् भवति पशावर्थे ॥ दृतिहरिः नाथहरिः पशुरित्यर्थः

**१७७१ फलेग्रह्यात्मम्भरिकुक्षिम्भरि** ।४।३।१२९। फलेग्रह्यादयः इदन्ता निपात्यन्ते ॥ फलेग्रहिः वृक्षः । आत्मम्भरिः कुक्षिम्भरिः । एतौ स्वोदरपूरके ॥

**१७७२ शकृत्स्तम्बाद्वत्सव्रीहौ कृञः** ।४।३।१३०। शकृत्स्तम्बाभ्यां कृञ इङ् भवति यथासङ्ख्यं वत्से व्रीहौ चार्थे ॥ शकृत्करिर्वत्सः । स्तम्बकरिर्व्रीहिः । अन्यत्र कर्तरि । शकृत्कारः स्तम्बकारः ॥

**१७७३ किंयत्तद्बहोरः** ।४।३।१३१। किमादिभ्यः कृञोऽङ् भवति ॥ किंकरः यत्करः तत्करः बहुकरः । स्त्रियां किंकरेत्यादि ॥

**१७७४ दिवाविभानिशाप्रभाभास्काराऽरुष्कर्त्रन्तानन्तादिनान्दीलिपिलिबिबलिचित्रक्षेत्रजङ्घाबाह्वहर्धनुर्भक्तसङ्ख्याट्टः** ।४।३।१३२। दिवादिभ्यः कृञष्टो भवति । दिवाकरः विभाकरः निशाकरः प्रभाकरः भास्करः कारकरः अरुष्करः कर्तृकरः अन्तकरः अनन्तकरः आदिकरः नान्दीकरः लिपिकरः लिबिकरः बलिकरः चित्रकरः क्षेत्रकरः जङ्घाकरः बाहुकरः अहस्करः धनुष्करः भक्तकरः एककरः द्विकरः इत्यादि । स्त्रियां चित्रकरीत्यादि ॥

---

१ शृङ्गी दृतिहरिर्नाथहरिस्तिर्यश्चपक्षिणः ॥

२ अहेलाद्यर्थोऽयमारम्भः । सूत्रे भास्कराऽरुष्करस्य निपातनात् जिह्वामूलीयविसर्जनीयौ न भवतः ॥ अरुष्करधनुष्कर इति समासे समस्तस्येति विसर्जनीयस्य सः शास्यसीति षत्व च ॥ अहस्कर इति कृकमिकंसेत्यादिना सिः । दिवाशब्दोऽव्ययानव्ययरूपो वर्तते ॥ संख्यावाचिनः संख्येत्यर्थग्रहणं तेनैकादिपरिग्रहः ॥ देवद्विजनृपादीनामाशीर्नान्दीति कीर्तिता । नान्दीवादी नान्दीकरः समौ ॥ लिपिकारोऽक्षरचणः करचञ्चुश्च लेखके ॥ लिपिर्लिपिरुभे स्त्रियाम् ॥ प्रत्ययान्तरकरणं स्त्रियां ङ्यर्थं भक्तकरी ॥

**१७७५ हेतुतच्छीलानुकूलेऽशब्दश्लोककलहगाथावैर-चाटुसूत्रमन्त्रपदात्** ।४।३।१३३। कर्मणः कृञः हेतौ तच्छीलेऽनुकूले च कर्तरि टो भवति न शब्दादेः ॥ यशस्करी विद्या । पूजाकरः प्रैषकरः । शब्दादेः । शब्दकारः श्लोककारः कलहकारः गाथाकारः वैरकारः चाटुकारः सूत्रकारः मन्त्रकारः पदकारः ॥

**१७७६ भृतौ कर्मणः** ।४।३।१३४। कर्मणः कृञष्टो भवति भृतौ द्योत्यायाम् ॥ कर्मकरः । अन्यत्र । कर्मकारः ॥

**१७७७ क्षेमप्रियमद्रात् खाण्** ।४।३।१३५। क्षेमादिभ्यः कृञः खाणौ भवतः ॥

**१७७८ खित्यरुर्द्विषतश्चानव्ययस्य** ।२।२।७८। अजन्तस्यारुर्द्विषतोश्च खिदन्ते उत्तरपदे मम् भवति नाव्ययस्य ॥ अमावितौ क्षेमंकरः क्षेमकारः प्रियंकरः प्रियकारः मद्रंकरः मद्रकारः ॥

**१७७९ मेघर्तेः खच्** ।४।३।१३६। मेघर्तिभ्यां कृञः खच् भवति॥ खचावितौ । मेघंकरः ऋतिंकरः ॥

**१७८० भयात्** ।४।३।१३७। भयात् कृञः खच् भवति ॥ भयंकरः अभयंकरः ॥

**१७८१ प्रियवशाद्वदः** ।४।३।१३८। प्रियवशाभ्यां वदः खच् भवति ॥ प्रियंवदः वशंवदः ॥

**१७८२ द्विषत्परात्तापेः** ।४।३।१३९। द्विषत्पराभ्यां तापेः खच् भवति ॥

---

१ अथवाग्रहणं कर्तव्यं किमण्ग्रहणेन? । खो हि विकल्पिते पक्षे कर्मणोऽणित्यणेव भवतीति चेत् विकल्पिते पक्षे यथाप्राप्तं स्यात्तर्हि हेत्वादिविवक्षितेषु कृञो हेतुत्वात् शीलेत्यादिना टः स्यात् । अतो हेत्वादिविवक्षायामपि अणेव स्यात टो मा भूत् । मद्रंकरः मद्रकरः । हेत्वादिविवक्षायामपि इमावेव प्रत्ययौ ॥ योगक्षेमकरी लोकस्येति तदन्तविज्ञानाभावात् भवति । खकारो ममर्थः ॥

२ इह कर्मण इत्येतद्भयादित्यनेन विशेष्यते तेन भयाद्भयान्ताच्च कर्मणः परात् कृञः खच्प्रत्ययो भवति । अभयंकरः ॥

**१७८३ खचि** ।४।१।२०८। ण्यन्तस्य खचि ह्रस्वो भवति ॥ मम् द्विषन्तपः[1] परन्तपः ॥

**१७८४ मितनखपरिमाणात् पचः** ।४।३।१४०। मितनखाभ्यां परिमाणवाचिनश्च पचः खच् भवति ॥ मितम्पचा ब्राह्मणी । नखम्पचा यवागूः । प्रस्थम्पचं कुलं ॥

**१७८५ ह्रस्वः** ।२।२।७९। अनव्ययस्याजन्तस्य खिदन्ते उत्तरपदे ह्रस्वो भवति ॥ खारिंपचं कुलं ॥

**१७८६ करीषाभ्रकूलात् कषः** ।४।३।१४१। करीषादेः कषः खच् भवति ॥ करीषंकषः अभ्रंकषः कूलंकषः ॥

**१७८७ सर्वात् सहश्च** ।४।३।१४२। सर्वात् कषः सहश्च खच् भवति ॥ सर्वंकषः सर्वंसहः ॥

**१७८८ भृतॄवृधारिजिदमितपश्च नाम्नि** ।४।३।१४३। कर्मणो भ्रादिभ्यः सहश्च खच् भवति नाम्नि ॥ विश्वम्भरा भूः । रथन्तरं साम । पतिंवरा कन्या । वसुन्धरा भूः । शत्रुञ्जयो गिरिः । अरिन्दमः शत्रुंतपः शत्रुंसहः इत्येते क्षत्रियाः ॥

**१७८९ वाचंयमो व्रती** ।४।३।१४४। वाचंयम इति निपात्यते व्रतिन्यर्थे ॥

**१७९० मन्याण्णिन्** ।४।३।१४५। कर्मणो मन्यतेर्णिन् भवति ॥ पण्डितं मन्यते इति पण्डितमानी ॥

**१७९१ कर्तुः श्वः** ।४।३।१४६। कर्मणो मन्यतेः श्वो भवति कर्तरि कर्मणि ॥ शित्त्वात् श्यः । पण्डितमात्मानं मन्यते पण्डितंमन्यः विद्वन्मन्यः । अनव्ययस्येति न मम्ह्रस्वौ । दोषामन्यो दिवसः ॥

**१७९२ एजेः** ।४।३।१४७। कर्मण एजेर्ण्यन्तात् श्वो भवति ॥ अङ्गमेजयः ॥

---

१ द्विषंतपः । जरि जरः स्वे वा इति लुक् । पदस्येति वा तकारस्य नित्यं लुक् ॥

**१७९३ शुनीस्तनात्खेटः** ।४।३।१४८। शुनीस्तनाभ्यां धेटः खो भवति ॥ शुनिन्धयः स्तनन्धयः ॥

**१७९४ कूलादुदि रुज्वहः** ।४।३।१५१। कूलादुदो रुजिवहिभ्यां खो भवति ॥ खित्त्वान्नेङ् । कूलमुद्रुजः कूलमुद्वहः ॥

**१७९५ वहाभ्राल्लिहः** ।४।३।१५२। वहाभ्राभ्यां लिहः खो भवति ॥ वहंलिहः अभ्रंलिहः ॥

**१७९६ विध्वरुस्तिलात्तुदः** ।४।३।१५३। विध्वरुस्तिलेभ्यस्तुदः खो भवति ॥ विधुन्तुदः । सस्य जश्त्वचर्त्वे । अरुन्तुदः तिलन्तुदः ॥

**१७९७ शर्धललाटवातात् हाक्तपाजः** ।४।३।१५४। शर्धात् हाकः खो भवति ललाटात्तपः वातादजः ॥ शर्धजहः ललाटंतपः वातमजः ॥

**१७९८ पुरन्दरभगन्दरेरम्मदोग्रंपश्यासूर्यंपश्याः** ।४।३। ।१५५। एते खान्ता निपात्यन्ते ॥ पुरन्दरः शक्रः । भगन्दरो व्रणम् । इरम्मदो मेघाग्निः । उग्रंपश्यः शत्रुः । असूर्यम्पश्याः राजदाराः ॥

**१७९९ सुभगाढ्यस्थूलपलितनग्नान्धप्रियात् सुपोऽच्वेश्च्वौ खिष्णुखुकञ्भुवः** ।४।३।१५६। अच्व्यन्तेभ्यः सुभगादिभ्यः सुबन्तेभ्यो भुवश्च्व्यर्थे खिष्णुखुकञौ भवतः ॥ खञावितौ खाविद् ञित्यात् । असुभगः सुभगो भवतीति सुभगंभविष्णुः सुभगम्भावुकः । आढ्यंभविष्णुः आढ्यम्भावुकः । स्थूलम्भविष्णुः स्थूलम्भावुकः पलितम्भविष्णुः पलितम्भावुकः । नग्नम्भविष्णुः नग्नम्भावुकः । अन्धम्भविष्णुः अन्धम्भावुकः । प्रियम्भविष्णुः प्रियम्भावुकः ॥

**१८०० कृञः करणे खनट्** ।४।३।१५७। अच्व्यन्तेभ्यः सुभगादिभ्यः कृञः च्व्यर्थे खनट् भवति करणे वाच्ये ॥ असुभगं सुभगं करोति

1 पूःशब्दपूर्वाद्धारयतेः ख अमधालक् निपात्यते । पुरशब्दात्तु पुरंदर इति न भवति ॥ भगं धारयतीति भगन्दरो व्याधिः अत्र खः । इरा सुरा तया माद्यतीति इरम्मदः इराकरणपूर्वान्माद्यतेः खः । उग्रं पश्यतीत्युग्रंपश्यः कर्मणो दृशेः खः ॥ सूर्यं न पश्यन्तीति असूर्यं पश्यन्तीति वा असूर्यंपश्या राजदाराः । असूर्यंपश्यानि मुखानि । नञो दृशिनाऽत्राभिसम्बन्धः न सूर्येण ॥

अनेनेति सुभगंकरणं धनं। सुभगंकरणी विद्या। आढ्यंकरणं स्थूलंकरणं पलितंकरणं नग्नंकरणम् अन्धंकरणं प्रियंकरणम् ॥

१८०१ **भावे चाशितंभवः** ।४।३।१५८। भावे करणे चाशितंभव इति निपात्यते ॥ आशितस्य भवनं आशितो भवत्यनेनेति वा आशितंभवः ओदनः ॥

१८०२ **गमः खखड्डाः** ।४।३।१५९। सुबन्ताद्गमः खखड्डा भवन्ति ॥ डित्यन्त्याजादिलुक्। भुजङ्गमः तुरङ्गमः भुजङ्गः तुरङ्गः दूरगः सर्वगः इत्यादि बहुलं योज्यम् ॥

१८०३ **विहायसो विहश्च** ।४।३।१६०। विहायसो गमः खखड्डा भवन्ति विहायसो विहश्चादेशः॥ विहङ्गमः विहङ्गः विहगः ॥

१८०४ **उरगः** ।४।३।१६१। उरसा गच्छतीत्युरग इति शिष्टम् ॥

१८०५ **सुगदुर्गमाधारे** ।४।३।१६२। आधारे एतौ निपात्येते ॥ सुखेन गम्यते अस्मिन्निति सुगः देशः। दुःखेन गम्यते अस्मिन्निति दुर्गः ॥

१८०६ **नाम्न्यः शमः** ।४।३।१६४। शमोऽव्ययाद्धातोरद् भवति नाम्नि ॥ शम्भवः शङ्करः शंवदः इत्यादि ॥

१८०७ **आधारात्** ।४।३।१६५। आधारात् सुपः शीङोऽद् भवति ॥

१८०८ **तत्पुरुषे कृति बहुलम्** ।२।२।१४। हलन्तादन्ताच्च सप्तम्याः कृदन्ते उत्तरपदे श्लुग् बहुलं भवति तत्पुरुषसमासे ॥ बिले शेते बिलशयः बिलेशयः। खे शेते खशयः खेशयः इत्यादयः ॥

१८०९ **भिक्षासेनादायाच्च चरष्टः** ।४।३।१६८। भिक्षादेराधाराच्च चरष्टो भवति ॥ भिक्षां चरतीति भिक्षाचरः सेनाचरः आदायचरः। आदायेति प्यान्तः। कुरुषु चरतीति कुरुचरः ॥

---

१ आशितम्भव इत्याशितशब्दादश्नातिभवत्योः कर्तृवचनात्सुबन्तात्पराद्भवतेः खप्रत्ययो भावे करणे च निपात्यते। आशितस्य भवनमाशितम्भवो वर्तते आशितत्वमित्यर्थः। आशितो भवत्यनेन आशितम्भव ओदनः ॥ अत एव निपातनात् कर्तरि क्तः दीर्घश्च ॥

२ टकारो ङ्यर्थः। आदायेति प्यान्तः, स्वीकृत्य चरतीत्यर्थः ॥

**१८१० कृदन्ते वा मम् रात्रेः** ।२।२।७२। रात्रेः कृदन्ते उत्तरपदे मम् वा भवति ॥ रात्रिं चरतीति रात्रिंचरः रात्रिचरः । स्त्रियां भिक्षाचरीत्यादि ॥

**१८११ पुरोऽग्रतोऽग्रेः सर्तेः** ।४।३।१५९। पुरसादिभ्यः सर्तेष्टो भवति ॥ पुरस्सरः अग्रतस्सरः अग्रेसरः । पुरस्सरीत्यादि ॥

**१८१२ स्थः कः** ।४।३।१७१। सुपस्तिष्ठतेः को भवति॥ कित्त्वादातो लुक् । समे तिष्ठतीति समस्थः । एवं विषमस्थः स्वस्थः ॥

**१८१३ गोऽम्बाम्बसव्यापद्वित्रिभूम्यग्निमञ्जिपुञ्जिशेकुशङ्कुकङ्गुबर्हिर्दिविपरमेः ष्ठः** ।२।२।१४५। गवादिभ्यः स्थस्य षत्वष्टुत्वे निपात्येते ॥ गोष्ठम् अम्बाष्ठः अम्बष्ठः सव्यष्ठः अपष्ठः द्विष्ठः त्रिष्ठः भूमिष्ठः अग्निष्ठः मञ्जिष्ठः पुञ्जिष्ठः शेकुष्ठः शङ्कुष्ठः कुष्ठः अङ्गुष्ठः बर्हिष्ठः दिविष्ठः परमेष्ठः

**१८१४ दुहो घश्च** ।४।३।१७२। सुपो दुहः को भवति । हो घश्च ॥ कामदुघा ॥

**१८१५ शोकापनुदतुन्दपरिमृजस्तम्बेरमकर्णेजपास्सुखाहरालस्यहस्तिसूचकाः** ।४।३।१७३। शोकापनुदादयः कान्ता यथासङ्ख्यं सुखाहराद्यर्थेषु निपात्यन्ते ॥ शोकापनुदः सुखहरः । तुन्दपरिमृजोऽलसः । स्तम्बेरमो हस्ती । कर्णेजपः सूचकः ॥

**१८१६ मूलविभुजादयः** ।४।३।१७४। मूलविभुजादयः कान्ताः शिष्टप्रयोगानुसारेण साधवो वेदितव्याः ॥ मूलानि विभुजतीति मूलविभुजो रथः । नखान् मुञ्चन्तीति नखमुचानि धनूंषि । कौ मोदते कुमुदं । द्वाभ्यां पिबतीति द्विपः । एवमनेकपः कच्छपः पादपः मधुपः इत्यादयः ॥

---

१ शोकादयः कप्रत्ययान्ता निपात्यन्ते यथासंख्यं सुखाहरालस्यहस्तिसूचकाश्चेत्कर्तारो वाच्या भवन्ति । शोकमपनुदतीति शोकापनुदः । सुखस्याहर्ता सुखाहरः । अलस एवालस्यः । स्तम्बे रमतीति स्तम्बेरमो हस्ती ॥

१८१७ विण् भजः ।४।३।१७५। सुपो भजो विण् भवति ॥ स सर्वोऽप्रयोगी । गुणभाक् देहभाक् कर्मभाक् शोभाविभाग्जि ॥

१८१८ स्पृशोऽनुदकात् क्विप् ।४।३।१७६। सुपः स्पृशः क्विप् भवति नोदकात् ॥ स सर्वोऽप्रयोगी । घृतस्पृक् । उदकात् उदकस्पर्शः ॥

१८१९ अदोऽनन्नात् ।४।३।१७७। सुपोऽदः क्विप् भवतिनान्नात् ॥ प्रासुकमत्तीति प्रासुकात् भक्तात् । अनन्नादिति किम् । अन्नादः ॥

१८२० क्रव्यात्क्रव्यादावामपक्वादौ ।४।३।१७८। क्रव्याद-दः आममांसभक्षे क्रव्यादिति क्विबन्तो निपात्यते । पक्वमांसभक्षे क्रव्याद इति अण् निपात्यते ॥

१८२१ मन्[1]वन्क्वनिब्विच्च दृश्यते ।४।३।१७९। सुबन्ताद्धातोः मन् वन् क्वनिप् विच् क्विप् च प्रत्ययो दृश्यते ॥ मनि । शर्म वर्म कर्म हे-म धाम दामेत्यादि । वनि ॥

१८२२ वन्यनुनासिकस्याः ।४।१।२६६। धातोरनुनासिकस्य आद् भवति वनि प्रत्यये परे ॥ विजावा[2] अग्रेगावा सुखावा अतिक्रावा । क्वनिपि ह्रस्वस्येति तक् । कृत्वा परिकृत्वा । ईहल्यघ्वे इतीत् । धीवा पीवा स्त्रियां ङी ॥

१८२३ ङ्यां वनो रः ।१।३।७७। वनो रो भवति ङ्यां परतः ॥ कृत्वरी धीवरी पीवरीत्यादि । विचि । विश प्रवेशने । वेट् । जागः

---

१ दृशिग्रहणं प्रयोगानुसरणार्थं तेन सर्वस्मादेते प्रत्यया भवन्ति निरुपपदादपि भवन्ति ॥ भाः द्यूः विद्युत् हूः प्रावस्तुत् । विध्यन्तरं भवति क्वचिद्दीर्घश्च जूः स्रूः श्रीः आयतस्तूः कटप्रूः । क्वचित् द्विर्वचनं च दाधृत् जगत् । जुहोतेर्द्विर्वचनदीर्घत्वे च जुहूः । द्रूणोतेः ह्रस्वत्वं द्विर्वचनं च दद्रुत् । ददातेर्ध्यायतेर्वा धिरिति दृश्यते इत्यपि बहुलमित्येव स्मार्यते । शॄ हिंसायां शृणाति दुःखमिति शर्म सुखम् । वृञ् वरणे वृणोति शरीरमिति वर्म तनुत्रम् । आत्मानं परतन्त्रं करोतीति कर्म । हि गतौ हिनोति गच्छति व्यवहारमिति हेम ॥

२ विजायते इति विजावा । गम्लृ गतो अग्रेगावा । खनूञ् अवधारणे । बहुलाधि-कारात्लुब्विकल्पः । अतिक्रावा क्रमू पादविक्षेपे ॥

शुभंयाः । सोमं पिबतीति सोमपाः । क्विपि । अन्तरिक्षसत् दिविषत् द्युसत् सुकृत् शतसूः मित्राद्विट् द्विट् मित्रध्रुक् मित्रध्रुट् ॥

**१८२४ नहिवृतिवृषिव्यधिसहितनिरुचि कौ तिकारकस्य** ।२।२।९०। अजन्तस्य तेः कारकस्य च क्विबन्ते नह्यादावुत्तरपदे दीर्घो भवति ॥ उपानत् नीवृत् प्रावृट् मर्मावित् जलासट् ॥

**१८२५ गमादीनां कौ** ।४।१।२६४। हनादीनां गमादीनां च क्विपि लुग् भवति ॥ परीतत् नीरुक् । गोधुक् कामधुक् अश्वयुक् । युङ् तत्त्ववित् काष्ठभित् भित् छित् भवच्छित् शत्रुजित् प्रजित् अनन्तजित् अग्रणीः । ग्रामं नयतीति ग्रामणीः । नीः पक् । विराट् सम्राट् स्वाराट् मित्रभूः प्रतिभूः स्वयम्भूः । उखायाः स्रंसते उखास्रत् पर्णध्वत् विभ्राट् प्राङ् प्रत्यङ् सम्यङ् सध्यङ् ऋत्विक् इत्यादयः दृश्यत इति वचनात् यथासम्भवं केवलादपि धातोः शिष्टप्रयोगेषु लक्षणीयाः ॥ बहुलाधिकारात् कर्तृकर्मकरणादिकारकविशिष्टार्थाः प्रयोज्याः ॥

**१८२६ त्यदाद्यन्यसमानाद् गौणाद् दृशेराप्ये क्विकट्क्साः** ।४।३।१८०। उपमानवाचिनस्त्यदादेरन्यसमानाभ्यां च दृशेः कर्मणि क्विकट्क्सा भवन्ति ॥ क्विः सर्वोऽप्रयोगी । कटावितौ । स इव दृश्यत इति विगृह्य आत्वादि । तादृक् तादृशः तादृशी तादृक्षः तादृक्षा यादृक् यादृशः यादृक्षः अमूदृक् अमूदृशः अमूदृक्षः ईदृक् एतादृक् युष्मादृक् त्वादृक् भवादृक् मादृक् कीदृक् अन्यादृक् सदृक् ॥

**१८२७ शीलेऽजातेः** ।४।३।१८२। सुबन्ताद्धातोः शीले णिन् भवति न जातेः ॥ उष्णं भोक्तुं शीलमस्य उष्णभोजी । प्रस्थायी प्रबोधी प्रयायी । जातेः । ब्राह्मणानामन्त्रयिता ॥

---

१ वचनभेदादयाथासंख्यं । त्यदाद्यन्यसमानादिति किं? वृक्ष इव दृश्यते । गौणादिति किं? दृश्यते ॥

२ कर्तुर्णिनित्यधिकृत्य । शील इति किं? उष्णभोजः । अजातेरित्यस्याजातिवाचिन इत्यर्थः ॥ शालीन् भोक्ता प्रभोक्ता उपभोक्ता सम्भोक्ता इत्यनभिधानान्न भवति ॥

**१८२८ व्रताभीक्ष्ण्ये** ।४।३।१८३। सुपो धातोर्व्रताभीक्ष्ण्ययोर्णिन् भवति ॥ स्थण्डिलशायी अम्बुपायी ॥

**१८२९ साधौ** ।४।३।१८४। सुपो धातोस्साधौ णिन् भवति ॥ साधुकारी साधुदायी ॥

**१८३० ब्रह्मवादी** ।४।३।१८५। साधु ब्रह्माणं वदतीति ब्रह्मवादी ॥

**१८३१ व्यभेर्भुवो भूते** ।४।३।१८६। व्यभिभ्यां भुवो भूतेऽर्थे णिन् भवति ॥ विभूतवानिति विभावी । अभिभूतवान् अभिभावी ॥

**१८३२ करणाद्यजः** ।४।३।१८७। करणाद्यजो भूते णिन् भवति ॥ महामहेनायाक्षीत् महामहयाजी ॥

**१८३३ घ्नो णिन्** ।४।३।१८९। कर्मणो हन्तेर्भूते णिन् भवति कुत्सायाम् ॥ मातृघाती ॥

**१८३४ ब्रह्मभ्रूणवृत्रात् क्विप्** ।४।३।१९०। ब्रह्मादिभ्यो हन्तेर्भूते क्विप् भवति ॥ ब्रह्माणं हन्तिस्म ब्रह्महा । एवं भ्रूणहा वृत्रहा ॥

**१८३५ सुकर्मपापमन्त्रपुण्यात् कृञः** ।४।३।१९१। स्वादिभ्यः कृञो भूते क्विप् भवति ॥ सुष्ठु अकार्षीत् सुकृत् । कर्मकृत् पापकृत् मन्त्रकृत् पुण्यकृत् ॥

**१८३६ दृशः कनिप्** ।४।३।१९५। भूते कर्मणो दृशः कनिप् भवति ॥ ककपेत इतः । विश्वं दृष्टवान् विश्वदृश्वा ॥

**१८३७ राजसहात् कृञ्युधिभ्याम्** ।४।३।१९६। राजसहाभ्यां कृञो युधेश्च भूते कनिप् भवति ॥ राजानं कृतवान् राजकृत्वा । एवं राजयुध्वा सहकृत्वा सहयुध्वा ॥

---

१ व्रतं शास्त्रतो नियमः । आभीक्ष्ण्यं पौनःपुन्यम् ॥ कषायपायिणो गान्धाराः । क्षीरपायिणो उशीनराः । सौवीरपायिणो बाह्लीकाः ॥ अश्लीलार्थजात्यर्थं वचनम् ॥

२ कुशलो योग्यो हितश्च साधुरित्युच्यते ॥

३ ब्रह्मकर्मपूर्वाद्वदेर्णिन्प्रत्ययो निपात्यते । अश्लीलार्थमसमनिवृत्त्यर्थं चेदं वचनम् ॥

४ सुकर्मपापमन्त्रपुण्यादेवेति धातुनियमो नेष्यते । शास्त्रकृत् तीर्थकृत् इत्यपीह भवति । केचिदिह धातुनियममपीच्छन्ति शास्त्रकृत् तीर्थकृदित्यभूते इत्याहुः ॥

**१८३८ जनोऽनौ डः** ।४।३।१९७। कर्मणोऽनौ जनो भूते डो भवति ॥ ड इत् । पुमांसमनुजाता पुमनुजा । एवं स्त्र्यनुजः ॥

**१८३९ सप्तम्याः** ।४।३।१९८। सप्तम्यन्ताज्जनो भूते डो भवति ॥ तनौ जातः तनुजः ॥

**१८४० यँयोनिमतिचरजेऽपः** ।२।२।१५। अप्शब्दात् सप्तम्याः यप्रत्यये योनिमतिचरजे च श्लुग् न भवति तत्पुरुषे ॥ अप्सुजं सरसिजं । बहुलाधिकाराद‍ब्जं सरोजम् इत्यादि ॥

**१८४१ अजातेः पञ्चम्याः** ।४।३।१९९। पञ्चम्यन्तात् जनो भूते डो भवति न जातिवाचिनः ॥ ज्ञानाज्जातं ज्ञानजं सुखम् । इन्द्रियजम् इत्यादि । जातेः । अश्वाज्जात इत्येव ॥

**१८४२ क्वँचित्** ।४।३।२००। अन्यस्मादपि सुपो जनो भूते अन्यस्मिन्नपि विषये डो भवति ॥ किं जातेन किंजः । द्विर्जातो द्विज : न जातः अजः । परिजाः केशाः । प्रजायते प्रजा । अनुजः बीजमनृतं । पुंसानुजाता पुंसानुजा । ब्राह्मणाच्छंसीत्यश्लुक् ॥

**१८४३ जृषोऽतृ** ।४।३।२०१। जृषो भूते अतृ भवति ॥ ऋदित् । जरन् ॥

**१८४४ सुयजो ङ्वनिप्** ।४।३।२०२। षुञ्यजभ्यां भूते ङ्वनिप् भवति ॥ ङपावितौ । सुत्वा यज्वा ॥

---

१ आन्वित्युपसर्गे उपपदे । अणोऽपवादोऽयम् ॥ पुमांसमनु जातेत्यत्र 'टार्थेऽनुना' इति द्वितीया । 'स्वकृताऽस्युक्तं' इति समासे पदसञ्ज्ञायां पुंसशब्दस्य सकारस्य 'पदस्य' इति लुक् पुमनुजा ॥ प्रत्ययार्थनिवृत्त्यर्थं वचनम् ॥

२ यश्च योनिश्च मतिश्च चरश्च जश्च पुनस्तथोक्तस्तस्मिन् ॥ तत्रोदाहरणानि अप्सव्यं । अप्सुयोनिः । अप्सुमतिः । अप्सुचरः । अप्सुजः ॥ सः स्यादलज्ञः किञ्जश्च यस्य जन्म निरर्थकमिति विदग्धः ॥ क्षत्रियजं युद्धम् । ब्राह्मणजः पशुवधः ॥

३ दन्तविप्राण्डजा द्विजाः । अजोऽग्नी वार्षिको व्रीहिरजो रामपितामहः ॥ अन्यस्माद्धातोरपि भवति वरमाहन्तीति वराहः ॥

**१८४५ भस्मादयः** ।४।३।२०३। भस्मन्नित्यादयो भूते मन्नन्ताः साधवः ॥ भसितं भस्म । एवं चर्म वर्त्म कर्म इत्यादयः प्रयोगगम्याः ॥

**१८४६ क्तक्तवतू** ।४।३।२०४। धातोर्भूते क्तक्तवतू भवतः ॥ कोताविती । साप्यानाप्यादिति सकर्मकात् कर्मण्यकर्मकाद् भावे क्तः । क्तवतुः पुनः कर्तर्येव । एध्यते स्म एधितमनेन । एधते स्म एधितवान् । एवं स्पर्धितं स्पर्धितवान् वन्दितः वन्दितवान् ॥

**१८४७ उँति शपः[१] क्तयोर्भावारम्भे** ।४।१।१५३। शप्भाजो धातोरुकारे उपान्त्ये सति भावारम्भविहितयोरिडाद्योः क्तक्तवत्वोः परतः कित्कार्यं वा भवति ॥ मुदितमनेन मोदितमनेन । प्रमुदितः प्रमुदितवान् प्रमोदितः प्रमोदितवान् ॥

**१८४८ क्तयोर्द्रश्यौदित्सूयत्यादेर्दस्य चामन्मूर्छेः[२]** ।४।१।२४६। दान्तात् रान्तात् श्यैङः ओदितः सूयत्यादेश्च तकाराद्योः क्तक्तवत्वोरादेस्तस्य नो भवति पूर्वस्य दस्य च नः न मन्मूर्छोः ॥ ह्लनमनेन ह्लन्नवान् । ह्लादैङ् सुखे ॥

**१८४९ न डीयश्व्यैदिद्वेटोऽपतः[३]** ।४।२।१४३। डीयश्विभ्यामैदितो विकल्पितेटश्च क्तयोरिड् न भवति न पतः ॥ नत्वं ॥

---

१ शप्वान् शप् तस्य शपः । क्तश्च क्तवतुश्च क्तौ तयोः क्तयोः ॥ आरम्भ आदिकर्म ॥

२ दकारान्ताद्रेफान्तात् ध्यायतेरोदितः सूयत्यादेश्च मद्मूर्च्छिवर्जिताद्धातोः परयोस्तकाराद्योः क्तयोः क्तक्तवत्वोरादेर्दकारादेशो भवति तत्सन्नियोगे पूर्वस्य दकारस्य च नकारादेशो भवति ॥ भिन्नः भिन्नवान् । मदै हर्षग्लपनयोः मत्तः मत्तवान् । मूर्तः मूर्तवान् एङ्लुगिति छस्य लुगत्र । क्तयोरिति किं? भित्तिः चूर्तिः ॥ द्विवचनादर्थवद्ग्रहणानपेक्षं क्तक्तवत्वोर्ग्रहणम् । द्रश्यौदित्सूयत्यादेरिति किं? कृतवान् । रात्परेणाज्भागेन व्यवधानं । ऋकारस्य हि मध्येऽर्धमात्रो रेफः पूर्वं पश्चाच्च तुरीयोऽज्भागः प्रतीयते ॥ सूयतीति श्यनिर्देशः सुतिसूयतिनिवृत्त्यर्थः ॥ अमद्मूर्च्छ इति किं? मत्तः मत्तवान् ॥

३ यकारो दिवादित्वसूचनार्थः । वेट इत्यस्य यत्र कुत्रापि विकल्पितेट इत्यर्थः ॥

**१८५० ह्रादोऽःक्ति** ।४।१।२४४। ह्राद आतस्तादौ कित्यद् भवति ॥ ह्रन्नमनेन ह्रन्नवान् । यतैङ् प्रयत्ने । प्रयत्तः प्रयत्तवान् । स्फुटितं स्फोटितमनेन स्फुटितवान् स्फोटितवान् । त्रस्तः त्रस्तवान् ॥ क्षीवृङ् मदे ॥

**१८५१ अनुपसर्गाः क्षीबोल्लाघकृशपरिकृशफुल्लोत्फुल्लसंफुल्लाः** ।४।१।२५८। अनुपसर्गाः क्षीबादयः क्तान्ता निपात्यन्ते ॥ क्षीबः । मीमांसितः मीमांसितवान् । पनायितः पनायितवान् । क्विजलीति दीर्घः । क्षान्तः क्षान्तवान् कामितः कामितवान् । ल्यूदित इति वेट्त्वान्नेट् । कान्तं कान्तवान् । ऊयैङ् तन्तुसन्ताने ॥ ऐदित्त्वान्नेट् । यलुक् । ऊतः ऊतवान् । स्फायैङ् ओप्यायैङ् वृद्धौ ॥

**१८५२ स्फायः** ।४।१।१२९। स्फायः क्तयोः साचो[3] यत्र इग् भवति ॥

**१८५३ दीर्घोऽचोऽवः** ।४।१।१३५। अजन्तस्य साचो यत्र इग् दीर्घो भवति प्रत्यये परतः न वेत्रः । स्फीतः स्फीतवान् ॥

**१८५४ क्तयोरनुपसर्गस्य** ।४।१।१२७। अनुपसर्गस्य प्यायः क्तयोः साचो यत्र इग् भवति ॥ पीनः पीनवान् ॥

**१८५५ आङोऽन्धूधसोः** ।४।१।१२८। आङः प्यायः क्तयोस्साचो

---

१ ह्रादः अः इत्यत्र ह्रादः परस्य विसर्जनीयस्य रित्वोत्वे पदान्तेत्येङ इति एङादेशे ह्रादोरिति सिध्यति । तकारादौ किति परे इत्यर्थः । ह्रादतेरुपान्त्यस्य क्ति तकारादौ किति प्रत्यये परे अकारादेशो भवति । क्तीति किं? ह्रादित्वा । ककारः किं? जाह्लाति इदमेव लिङ्गं प्रकृतिग्रहणे यङ्लुचोऽपि ग्रहणमित्यस्य । तकारः किं? प्रह्लाद् प्रह्लादः प्रह्लादनः ॥

२ धृङ् सामर्थ्ये । अनुपसर्गा इति किं? प्रक्षोभितः प्रोल्लाघितः । अपरे क्षीबवानित्यपि रूपमिच्छन्ति ॥

३ साच इत्यस्य पूर्वेणाचा सहितस्येति चिन्तामणावुक्तम् ॥ क्तयोरिति किं? स्फातिः॥

४ अच इति किं? उप्तः उक्तः उशितः । अव इति वेञ् तन्तुसन्ताने इत्यस्य ग्रहणम् । ऊतं स्यूतमुतं चेति त्रितयं तन्तुसन्ततौ ॥

यत्र इग् भवति अन्धूधसोरर्थयोः ॥ आपीनोऽन्धुः आपीनवान् आपीनमापी-
नवदूधः । अन्यत्रोपसर्गाच्च क्तयोर्यलुक् । प्रप्यानः प्रप्यानवान् ।
शिक्षितः शिक्षितवान् । स्रस्तः स्रस्तवान् । गाढः गाढवान् । स्मितं
स्मितवान् ॥

१८५६ द्रवमूर्तौ श्यः ।४।१।१३१। श्यैङः क्तयोस्तावो यत्र इग्
भवति द्रवमूर्तौ काठिन्येऽर्थे ॥ शीनं शीनवद् घृतम् । अन्यत्र । संश्यानो
वृश्चिकः । शीतमिति निपातनात् सिद्धं । धृतः धृतवान् ॥

१८५७ दोसोमास्थांइक्ति ।४।२।१०९। धत्यादीनां क्तादौ इद्भ-
वति ॥ विनिमितः विनिमितवान् ॥

१८५८ दद् घोर्दः ।४।२।११२। घुसंज्ञस्य दः क्तादौ दद् भवति ॥
दत्तः दत्तवान् ॥ प्यैङ् वृद्धौ ॥ आत्वे ॥

१८५९ हलो यत्र आतोऽध्याख्यः ।४।१।२४७। हलः परायत्रः
आतस्तायोः क्तयोस्तस्य नो भवति न ध्याख्याभ्याम्॥ प्यानः प्यानवान् ॥
त्रैङ् पालने ॥

१८६० ह्रीत्राद्राघ्रोन्दनुदविन्तेः ।४।१।२५४। ह्रियादिभ्यः क्तयो-
स्तस्य नो वा भवति पूर्वस्य दस्य च नः ॥ त्राणः त्राणवान् त्रातः त्रात-
वान् ॥ क्लिशौ विबाधने ॥

१८६१ पूङ्क्लिशो वा ।४।२।१६०। पूङ्क्लिशिभ्यां क्तयोः क्त्वाया-
श्च इड्वा भवति ॥ पूतः पूतवान् ॥

---

१ आपीन इत्यत्र प्याय् इत्यस्य आकारस्य परेण यकारेण सह इकि कृते सति प-
श्चात्पूर्वेण यकारेण सह इक् भवति तेन आपीन इति रूपं सिध्यति ॥

२ दो सो इत्योकारान्त निर्देशात् दो अवखण्डने षो अन्तकर्मणि इत्यनयोः प्रतीतिः ।
दासा इत्यात्वनिर्देशे ध्येतत् न स्यात् । मा इति मामेङ्माङां ग्रहणम् । क्तीति किं?
अवसायः । ककारः किं? अवदाता अवसाता । यतेर्दद्भावस्यापवादः ॥

३ हल इति किं? यातः । अवदातः ॥ यत्र इति किं? प्रभातः ज्ञातं ध्यातं ॥ आत
इति किं? च्युतः च्युतवान् । अध्याख्य इति किं? ध्यातः ध्यातवान् ॥

४ ह्री लज्जायां । त्रैङ् पालने । द्रै स्वप्ने । घ्रा गन्धोपादाने । उन्दै क्लेदने । नुद अव-
क्षेपे । विदि विचारणे । रुधादिरागमम् । रुधादिग्रहणार्थं नम्विकल्पार्थं त्रयाणां ग्रहणम् ॥

**१८६२ शीङ्डीङ्पूङ्स्विद्मिदिक्ष्विद्धृषो न** ।४।१।१५४। शीङादीनां इडाद्योः क्तयोः किद्वन्न भवति ॥ पवितः पवितवान् । डयितः डयितवान् । द्युतितमनेन द्योतितमनेन प्रद्युतितवान् प्रद्योतितवान् । शुभितमनेन शोभितमनेन शुभितवान् शोभितवान् ॥ ञिमिदाङ् स्नेहने ॥

**१८६३ आदितः** ।४।१।१५१। आदितोः धातोः क्तयोरिड् न भवति ॥ मिन्नः मिन्नवान् । ञिष्विदाङ् मोचने च ॥ स्विन्नः स्विन्नवान् ॥

**१८६४ भावारम्भे वा** ।४।२।१५२। आदितः क्तयोरिड् वा भवति भावारम्भयोः ॥ स्विन्नमनेन स्वेदितमनेन प्रास्विन्नवान् प्रस्वेदितवान् । क्षुभि सञ्चलने ॥

**१८६५ क्षुब्धस्वान्तध्वान्तपरिवृढलग्नम्लिष्टविरिब्धफाण्टबाढं मन्थमनस्तमःप्रभुसक्तास्पष्टस्वरानायासभृशे** ।४।२।१५०। क्षुब्धादयः क्तान्ता अनिट्का निपात्यन्ते यथासङ्ख्यं मन्थादिष्वर्थेषु ॥ क्षुब्धः समुद्रः मथित इत्यर्थः । अन्यत्र क्षुभितः क्षुभितवान् समुद्रः सञ्चलित इत्यर्थः । विस्रब्धः विस्रब्धवान् । भ्रष्टः भ्रष्टवान् । ध्वस्तः ध्वस्तवान् । वृत्तः वृत्तवान् । कृत्तः कृत्तवान् ॥

**१८६६ वमरुष्यमत्वरसङ्घुषास्वनः** ।४।२।१५६। वमादिभ्यः क्तयोरिड् वा भवति ॥ त्वरितः त्वरितवान् । अनिट्पूत्त् । तूर्णः तूर्णवान् । स्मृतः स्मृतवान् ॥

**१८६७ ऋल्वादेः क्तक्तिनान्नोऽपः** ।४।१।२४५। ॠदन्तात् ल्वादिभ्यश्च क्तयोः क्तिनश्च तस्य नो भवति न पृ इत्यतः ॥ दीर्णः दीर्णवान् । श्राणः श्राणवान् । अमन्मुर्छ इति न नः मत्तः मत्तवान् । क्षुब्धादित्वात् ध्वान्तं तमः । अन्यत्र ध्वनितवान् । स्वान्तं मनः । अन्यत्र स्वनितं स्वनितवान् । आङ्पूर्वत्वे । वमरुषीति वेट् । आस्वान्तं आस्वनितं । फाण्टमनायासकषायः । अन्यत्र फणितं फणितवान् । सोढः सोढ-

---

१ परिपूर्ववृह वृद्धौ । वृहु शब्दे । म्लेच्छ अव्यक्तायां वाचि । रेजृन् अव्यक्ते शब्दे । पणि व्यवहारे । वाहृन् प्रयत्ने ॥

वान् । हन्मन्येति मलुक् रतः रतवान् । बुद्धः बुद्धवान् । चलितः चलितवान् । अपत इति वचनात् इट् पतितः पतितवान् । वान्तः वान्तवान् । वमितः वमितवान् । आसन्नः आसन्नवान् । क्रुष्टः क्रुष्टवान् ॥

**१८६८ श्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** ।४।३।५२। श्लिषादिभ्यः आदिकर्मार्थेभ्यश्च यः क्तः स कर्तरि वा भवति ॥ आरूढो वृक्षं चैत्रः । आरूढो वृक्षश्चैत्रेण । आरूढवान् वृक्षं चैत्रः ॥

**१८६९ गत्यर्थाकर्मकाधारे च** ।४।३।५३। गत्यर्थादकर्मकाच्च धातोः क्तः कर्तर्याधारे च वा भवति ॥[1] भूतः भूतवान् चैत्रः । भूतं चैत्रेण । जितः जितवान् । पीतः पीतवान् । घ्रातः घ्रातवान् । घ्राणः घ्राणवान् । ध्मातः ध्मातवान् । स्थितः स्थितवान् । इदमस्य स्थितं । स्थितमनेन । दत्तः दत्तवान् । अवदातः अवदातवान् । ग्लानः ग्लावान् । म्लानः म्लानवान् । निद्राणः निद्राणवान् । द्रातः द्रातवान् द्राणः द्राणवान् । गीतः गीतवान् । स्त्यानः स्त्यानवान् ॥

**१८७० स्त्यः प्रपूर्वस्य** ।४।३।१३०। प्रपूर्वस्य स्त्यायतेः क्तयोः साचो यञ इग् भवति ॥

**१८७१ प्रस्त्यो मः** ।४।१।२५५। प्रात् स्त्यः क्तयोस्तो मो वा भवति ॥ प्रस्तीमः प्रस्तीमवान् । प्रस्तीतः प्रस्तीतवान् ॥

**१८७२ क्षः** ।४।१।२५६। क्षायतेः क्तयोः स्तो मो भवति ॥ क्षामः क्षामवान् । ओवै शोषणे । वानः वानवान् । आध्यस्त्य इति वचनात् न नः । ध्यातः ध्यातवान् स्मृतः स्मृतवान् । ऋतः ऋतवान् । तीर्णः तीर्णवान् । चिकित्सितः चिकित्सितवान् । चित्तः चित्तवान् । सिद्धः सिद्धवान् ॥ अर्द गतियाचनयोः ॥

---

१ गतौ अकर्मके चार्थे वर्तमानाद्धातोः क्तः आधारे चकारात्कर्तरि वा भवति । अकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्तीति श्लिष्टादीनां ग्रहणम् । अन्यथा उत्तरसूत्रेणैव सिद्ध्यति ॥ अकर्मणीति यस्य कालादि कर्म नास्ति तन्निर्देशः तेन कृतो देवदत्तः हृतो देवदत्तः इत्यविवक्षितकर्मकात् कर्तरि न भवति । भुक्ता ब्राह्मणाः पीता गावः इत्यत्र मत्वर्थीयोऽकारः ॥

**१८७३ अविदूरेऽभेः** ।४।२।१४५। अभेरर्दः क्तयोरिड् न भवति अविदूरे समीपे ॥ अभ्यर्णम् । अन्यत्र अभ्यर्दितः अभ्यर्दितवान् । वन्दितः वन्दितवान् । स्कन्नः स्कन्नवान् ॥ शुच शोके । शुचितः शुचितवान् ॥

**१८७४ लुभ्यञ्चेर्विमोहार्चे** ।४।२।१५९। लुभ्याञ्चिभ्यां क्तयोः क्त्वायाश्च इड् भवति क्रमेण विमोहे अर्चायां च ॥ अञ्चितः अञ्चितवान् । अन्यत्र उदक्तं जलम् । उदक्तवान् कूपात् । म्लेच्छ अव्यक्तायां वाचि । क्षुब्धेति निपातनात् म्लिष्टमविस्पष्टम् । अन्यत्र म्लेच्छितं । मूर्तः मूर्तवान् । मूर्तमनेन मूर्च्छितमनेन प्रमूर्तः प्रमूर्तवान् प्रमूर्छितः प्रमूर्छितवान् । सक्तः सक्तवान् । गोपायितः गोपायितवान् । गुप्तः गुप्तवान् ॥

**१८७५ जप्तश्वस्तापचितम्** ।४।२।१५५। जप्तादयः क्तयोरनिट्का वा निपात्यन्ते ॥ जप्तः जप्तवान् जपितः जपितवान् । गतः गतवान् । सृप्तः सृप्तवान् । इदमेहः सृप्तं । सृप्तमनेन । कनै दीप्तिकान्तिगतिषु ॥ कान्तः कान्तवान् । यतः यतवान् । आचान्तः आचान्तवान् । क्रान्तः क्रान्तवान् । भ्रान्तः भ्रान्तवान् । ञिफला विशरणे ॥ तिचातोर्ल्युदित्युत् । प्रफुल्तः प्रफुल्तवान् । फुल्ल विकसने । अनुपसर्गा इति निपातनात फुल्लः उत्फुल्लः सम्फुल्लः । चरितः चरितवान् । ऊच् ष्ठ्युतः ष्ठ्यूतवान् । धुर्वै हिंसायाम् । वो लुक् । धूर्तप्रशंसारूढैरिति निपातनान्न नः । धूर्तः धूर्तवान् । कष हिंसायाम् ॥

**१८७६ कषः कृच्छ्रगहने** ।४।२।१४७। कषःक्तयोरिड् न भवति कृच्छ्रे गहने चार्थे ॥ कष्टं याचितं । कष्टं विपिनम् अन्यत्र निकषितं स्वर्णम् ॥

**१८७७ शसिधृषः प्रगल्भे** ।४।२।१४६। शसिधृषिभ्यां क्तयोरिड् न भवति प्रगल्भेऽर्थे ॥ शस्तः प्रगल्भः । अन्यत्र शसितः शसितवान् । धृष्टः धृष्टवान् । मृषू सहने च ॥

**१८७८ मृषः क्षान्तौ** ।४।१।१५५। मृषः इडाद्योः क्तयोः किद्वन्न भवति क्षान्तौ ॥ मर्षितः मर्षितवान् । अन्यत्र अपमृषितं वक्ति । अनिटि मृष्टं मृष्टवान् । कृष्टं कृष्टवान् । हृषू अलीके ॥

१८७९ **हृषेर्लोमविस्मयप्रतिघाते** ।४।२।१५४। हृषेः क्तयोरिड्वा भवति लोमविस्मयप्रतिघातेषु ॥ हृष्टानि हृषितानि लोमानि। हृष्टो हृषितः विस्मितः। हृष्टाः हृषिताः दन्ताः प्रतिहता इत्यर्थ। अन्यत्र हृष्टोऽर्थीकेः ॥ घुषृ शब्दे ॥

१८८० **घुषोऽविशब्दे** ।४।२।१४८। घुषः क्तयोरिड् न भवति, न विशब्दे ॥ घुष्टौ पादौ सम्बद्धावित्यर्थः। विशब्दे विघुषितानि वाक्यानि। दृष्टः दृष्टवान्। शस्तः शस्तवान्। दग्धः दग्धवान। मीढः मीढवान्। रहितः रहितवान्। दृह दृहु पूष बृह वृद्धौ ॥

१८८१ **दृढः स्थूलबलिनोः** ।४।२।१४९। स्थूले बलिनि चार्थे दृढो निपात्यते ॥ अन्यत्र दृहितः दृहितवान् दृंहितः। क्षुब्धेति निपातनात् परिवृढः प्रभुः। अन्यत्र परिवृहितः। बृहु शब्दे च। परिबृंहितः। इग्दीर्घौ शूनः शूनवान् ॥

१८८२ **क्तक्त्वोः क्षुध्वसः** ।४।२।१५८। क्षुधिवसिभ्यां क्तयोः क्त्वायाश्चेड् भवति ॥ उषितः उषितवान्। उदितः उदितवान्। इष्टः इष्टवान्। उप्तः उप्तवान्। ऊढः ऊढवान्। अव इति न दीर्घः। उतः उतवान्। वीतः वीतवान्। आहूतः आहूतवान्। ऊच्यैच् धौतः धौतवान् ॥

१८८३ **शुषपचः कम्** ।४।१।२५७। शुषः क्तयोस्तः को भवति पचो वः ॥ पक्वः पक्ववान्। भक्तः भक्तवान्। रक्तः रक्तवान्। जप्तेति निपातनात्। चायृञ् पूजायां च। अपचितः अपचितवान अपचायितः अपचायितवान् ॥

१८८४ **जनसनखनाम्** ।४।१।२६७। जनादीनां क्ङितिं जलादौ नस्य आद् भवति ॥ खातः खातवान्। दीदांसितः दीदांसितवान्। गूढः गूढवान्। श्रितः श्रितवान्। हृतः हृतवान्। कृतः कृतवान्। नीतः नीतवान् ॥

अथादादिः ॥

१८८५ **जग्धदः प्ये च** ।४।२।११८। अदः तादौ क्किति प्ये च

जग्ध् भवति ॥ जग्धः जग्धवान् । अदोऽनन्नादिति निपातनादन्नमित्यपि ॥

**१८८६ वित्तं धनप्रतीतम्** ।४।१।२६०। धनप्रतीतयोर्वित्तमिति निपात्यते ॥ वित्तः प्रख्यातः । वित्तं धनम् । अन्यत्र विदितः विदितवान् । हतः हतवान् । मृष्टः मृष्टवान् । उक्तः उक्तवान् । सुप्तः सुप्तवान् । प्राणितः प्राणितवान् । विश्वस्तः विश्वस्तवान् । विश्वसितः विश्वसितवान् । जागरितः जागरितवान् । दरिद्राणः दरिद्राणवान् । शिष्टः शिष्टवान् । उशितः उशितवा । कित्युगिति नेट् रुतः रुतवान् । इतः इतवान् यातः यातवान् ॥

**१८८७ निर्वाणोऽवाते** ।४।१।२५०। अवाते कर्तरि निर्वाण इति निपात्यते ॥ निर्वाणो मुनिः । वाते निर्वातोऽवातः । दातं बर्हिः । ख्यातः ख्यातवान् । मितः मितवान् । ईशितः ईशितवान् । आसितः आसितवान् । अध्यासितो ग्रामम् । इदमध्यासितं । वसितः वसितवान् । पृचैङ् सम्पर्चने । संपृक्तः सम्पृक्तवान् । सूतः सूतवान् । शयितः शयितवान् । अतिशयितो गुरुम् । अधीतः अधीतवान् । द्विष्टः द्विष्टवान् । लीढः लीढवान् । उक्तः उक्तवान् ॥ अथ ह्रादिः ॥ हुतः हुतवान् । ह्रीतः ह्रीतवान् । ह्रीणः ह्रीणवान् । हीनः हीनवान् । हानः हानवान् । मितः मितवान् । भृतः भृतवान् दत्तः दत्तवान् ॥

**१८८८ त्तोऽचं उपसर्गात्** ।४।२।११३। अजन्तादुपसर्गात् घुसंज्ञकस्य दस्तादौ किति त्तो भवति ॥ अशावितौ शित्त्वात्सर्वस्य । आत्तः आत्तवान् ॥

**१८८९ घाओ हिः** ।४।२।११६। धाञस्तादौ किति हिर्भवति ॥

---

१ वातार्थरहिते । निर्वाणो मुनिवह्न्यादौ निर्वातस्तु गतेऽनिले ॥ निर्वाणः प्रदीपो वातेनेत्यत्र वातो हेतुः करणं वा न कर्ता । केचिन्निर्वाणो वाते नेच्छन्ति तेषां वाते कर्तरि प्रत्यये सति प्रतिषेधः ॥

२ अच इति किं? निर्दत्तं ॥ उपसर्गादिति किं? अधिदत्तं अतिदत्तं । घोरिति किं? अवदातं मुखम् ॥

हितः हितवान्। निक्तः निक्तवान्॥ अथ दिवादिः॥ ऊत्। धूतः धूतवान्। स्यूतः स्यूतवान् नृत्तं नृत्तवान्। त्रस्तः त्रस्तवान्। क्षिप्तः क्षिप्तवान्। विद्धः विद्धवान्। पुष्टः पुष्टवान्। शुष्कः शुष्कवान्। तुष्टः तुष्टवान्। दुष्टः दुष्टवान्। आश्लिष्टः कन्यां देवदत्तः। आश्लिष्टा कन्या देवदत्तेन। आश्लिष्टवान्॥

१८९० **शकेः कर्मणि** ।४।२।१५३। शकेः कर्मणि क्तस्येड्वा भवति॥ शक्तः। शकितः कटः कर्तुं चैत्रेण। अन्यत्र शक्तः शक्तवान्। क्रुद्धः क्रुद्धवान्। क्षुधितः क्षुधितवान्। शुद्धः शुद्धवान्। सिद्धः सिद्धवान्। शान्तः शान्तवान्। अस्तः अस्तवान्। उचितः उचितवान्। भ्रष्टः भ्रष्टवान्। अनुपसर्गादिति निपातनात् परिक्रुशः परिक्रुशवान्। तृषितः तृषितवान्। रुष्टः रुष्टवान्। कुपितः कुपितवान्। लुभिताः केशाः। अन्यत्र लुब्धो देवदत्तेन। क्लिन्नः क्लिन्नवान्। रद्धः रद्धवान्। मुग्धः मुग्धवान्। मूढः मूढवान्। अनुजीर्णो वृषलीं वृषलः॥

१८९१ **शो व्रते** ।४।२।११०। शस्तादौ क्तीड् भवति व्रतशब्दे उत्तरपदे॥ संशितव्रतः॥

१८९२ **छश्च वा** ।४।२।१११। शश्छश्च तादौ क्तीड्वा भवति॥ शितः शितवान्। शातः शातवान्। छितः छितवान्। छातः छातवान्। सितः सितवान्। दितः दितवान्। जातः जातवान्। दीप्तः दीप्तवान्। पूर्णः पूर्णवान्। जूर्णः जूर्णवान्। क्लिशि उपतापे। क्लिष्टः क्लिष्टवान्। क्लिशितः क्लिशितवान। पन्नः पन्नवान। विन्नः विन्नवान। खिन्नः खिन्नवान। मतः मतवान्। युक्तः युक्तवान्। सृष्टः सृष्टवान्। सूनः सूनवान्। दूनः दूनवान्। दीनः दीनवान्। मीनः मीनवान्। रीणः रीणवान्। लीनः लीनवान्। नद्धः नद्धवान्॥ अथ स्वादिः॥ सुतः सुतवान्। स्तृतः स्तृतवान्। वृतः वृतवान्। धूतः धूतवान्। टुदु उपतापे॥

**१८९३ दुग्वोर्दीर्घश्च** ।४।१।२९१। दुगुभ्यां क्तयोस्तो नो भवति दीर्घश्च धातोरचः ॥ दूनः दूनवान् । श्रुतः श्रुतवान् । हितः हितवान् । राद्धः राद्धवान् । प्रगल्भे । धृष्टः धृष्टवान् । अन्यत्र धर्षितः धर्षितवान् । अष्टः अष्टवान् ॥ अथ क्र्यादिः ॥ क्रीतः क्रीतवान् । गृहीतः गृहीतवान् । लूनः लूनवान् । धूनः धूनवान् । स्तीर्णः स्तीर्णवान् । शीर्णः शीर्णवान् । कीर्णः कीर्णवान् । अम इति वचनात् न नः । पूर्तः पूर्तवान् । चीर्णः चीर्णवान् । उदीर्णः उदीर्णवान् । गीर्णः गीर्णवान् । जीनः जीनवान् । ज्ञातः ज्ञातवान् । बद्धः बद्धवान् । मृदितः मृदितवान् ॥

**१८९४ क्तयोः** ।४।२।१४२। निष्कुषः क्तयोरिड् भवति ॥ निष्कुषितः निष्कुषितवान् । अशितः अशितवान् । मुषितः मुषितवान् ॥ अथ तुदादिः ॥ तुन्नः तुन्नवान् । भृष्टः भृष्टवान् । क्षि निवासगत्योः ॥

**१८९५ क्षेरध्ये** ।४।१।२५२। क्षेः क्तयोः तो नो भवति धातोश्च दीर्घः न ध्यणाद्यर्थे भावे कर्मणि च ॥ क्षीणः क्षीणवान् । मृतः मृतवान् । आदृतः आदृतवान् । पृष्टः पृष्टवान् । मग्नः मग्नवान् । रुग्णः रुग्णवान् । भुग्नः भुग्नवान् । स्पृष्टः स्पृष्टवान् । नुन्नः नुन्नवान् नुत्तः नुत्तवान् । वृक्णः वृक्णवान् । उज्झितः उज्झितवान् । लुभितः लुभितवान् । दृब्धः दृब्धवान् । इष्टः इष्टवान् । लिखितः लिखितवान् । स्फुरितः स्फुरितवान् । नूतः नूतवान् । गु पुरीषोत्सर्गे । गूनः गूनवान् । कूतः कूतवान् । गुरैङ् उद्यमने । आगूर्णः आगूर्णवान् । जुष्टः जुष्टवान् । विग्नः विग्नवान् । लग्नः

---

१ टुदु उपतापे । गु पुरीषोत्सर्गे । द्विवचनं किमर्थं? षष्ठ्यभिव्यक्त्यर्थम् । दुगोरित्येकवचने किमियं षष्ठी पञ्चमीति सन्दिह्येत । तत्र पञ्चमीप्रतिपत्तौ तयोरिव दीर्घो नकारश्च स्यात् स दोषः । द्विवचने षष्ठ्यभिव्यक्तिः ॥ सप्तम्यनुपपत्तिः अन्यस्याधेयस्यात्राभावात् । दुग्वोर्दीर्घः ताभ्यां परयोः क्तयोर्नकार इत्यर्थवशाद्विभक्तिविपरिणाम इति पञ्चमी च ॥

२ क्षि क्षये । क्षिप् हिंसायामित्यस्यात्र ग्रहणं न भवति सानुबन्धकादित्येके । श्रुतपाल इति शाब्दिकं तु ग्रहणं मन्यन्ते ॥

लग्नवान् । त्यक्तः त्यक्तवान् । रब्धः लब्धवान् । लब्धः लब्धवान् ॥ अथ तनादिः ॥ ततः ततवान् । सातः सातवान् । क्षतः क्षतवान् । घृतः घृतवान् । मतः मतवान् ॥ अथ रुधादिः ॥ रुद्धः रुद्धवान् । भिन्नः भिन्नवान् ॥

**१८९६ भित्तं शकलम्** ।४।१।२५९। शकले खण्डे भित्तमिति निपात्यते ॥ छिन्नः छिन्नवान् । रिक्तः रिक्तवान् । क्षुण्णः क्षुण्णवान् । युक्तः युक्तवान् । इद्धः इद्धवान् । वित्तः वित्तवान् । विन्नः विन्नवान् । शिष्टः शिष्टवान् । भग्नः भग्नवान् । भुक्तः भुक्तवान् ॥ उन्दै क्लेदने । उत्तः उत्तवान् । उन्नः उन्नवान् । अक्तः अक्तवान् ॥ अथ चुरादिः ॥ णेरिक्तेति णिलुक् । चोरितः चोरितवान् । कथितः कथितवान् इत्यादि ॥ णिजन्तेभ्योऽप्येवम् ॥

**१८९७ दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ता वा** ।४।२।१०२। एते ण्यन्ताः क्ते वा निपात्यन्ते ॥ दान्तः दमितः । शान्तः शमितः । पूर्णः पूरितः । दस्तः दासितः । स्पष्टः स्पाशितः । छन्नः छादितः । ज्ञप्तः ज्ञापितः ज्ञपितः । शेषं सर्वं चुरादिवत् । भावितः भावितवान् । कारितः कारितवान् । आदितः आदितवानित्यादि ॥

**१८९८ वयःशक्तिशीले** ।४।३।२१९। धातोः सति वर्तमानेऽर्थे शानो भवति वयःशक्तिशीलेषु गम्येषु ॥ शिस्त्वाच्छबादि । वयसि शिखण्डं वहमानः । शक्तौ द्विपमभिभवमानः । शीले वितरमाणः इत्यादि नेयम् ॥

**१८९९ धारीङः शत्रकृच्छ्रे** ।४।३।२२०। धारीङ्भ्यां सति कर्तरि शतृ भवति अकृच्छ्रे अक्लेशे गम्ये ॥ व्याकरणं धारयन् । प्रवचनमधीयन् ॥

---

१ अन्यत्राशकलपर्याये भिन्नं शकलं भिन्नं भित्तं । अन्यभिन्नशब्दः क्रियाविशिष्टकारकवाची । अत एव शकलं भित्तमिति च विशेष्यमुपादीयते ॥

**१९०० तृ साधुधर्मशीलेषु** ।४।३।२२२। धातोः सति तृप्रत्ययो भवति साधुधर्मशीलेषु ॥ साधौ दानं कर्ता । धर्मे जिनमर्चिता । शीले हसिता इत्यादि नेयम् ॥

**१९०१ भूवृतूवृधुभ्राजसहचररुचापत्रपालङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोत्पदोन्मदादिष्णुः** ।४।३।२२३। भूवादिभ्यः सति इष्णुर्भवति साधुधर्मशीलेषु ॥ भविष्णुः वर्तिष्णुः वर्धिष्णुः भ्राजिष्णुः सहिष्णुः चरिष्णुः रोचिष्णुः अपत्रपिष्णुः अलङ्करिष्णुः निराकरिष्णुः प्रजनिष्णुः उत्पचिष्णुः उत्पतिष्णुः उत्पदिष्णुः उन्मदिष्णुः ॥

**१९०२ भूजेः स्नुक्** ।४।३।२२४। भूजिभ्यां सति स्नुक् भवति साधुधर्मशीलेषु ॥ कित्त्वान्नेड् । भूष्णुः जिष्णुः ॥

**१९०३ ग्लास्थः स्नुः** ।४।३।२२५। ग्लास्थाभ्यां सति स्नुर्भवति साध्वादिषु ॥ ग्लास्नुः स्थास्नुः ॥

**१९०४ गृधिधृषिक्षिपत्रसः क्नुः** ।४।३।२२६। गृधादिभ्यः सति क्नुर्भवति साध्वादिषु ॥ क इत् । गृध्नुः धृष्णुः क्षिप्नुः त्रस्नुः ॥

**१९०५ सनंभिक्षाशंसविन्दिच्छादुः** ।४।३।२२७। सनन्तात् भिक्षादिभ्यश्च सत्युर्भवति साध्वादिषु ॥ बुभूषुः चिकीर्षुः भिक्षुः आशंसुः वेत्तीति विन्दुः निपातनान्नम् । इच्छुः ॥

**१९०६ शॄवन्दादारुः** ।४।३।२२८। शॄवन्दिभ्यां सत्यारुर्भवति साध्वादिषु ॥ शरारुः वन्दारुः ॥

---

१ कुशलो योग्यो हितश्च साधुरुच्यते । धर्मोऽनुवृत्त आचारः । धर्मे वधूमूढां मुण्डयितारः श्राविष्टायनाः मुण्डनं तेषां कुलधर्म इति कुलाचारः । दानं कर्ता कुल्कामुकस्येति षष्ठी अवृण्लक्षणखार्थादिति निषेधान्न भवति ॥

२ सन्निति प्रत्ययग्रहणं न धातोः । आशंसीति आङः शासूङ् इच्छायामित्यस्य ग्रहणं न शसू स्तुतावित्यस्य । विन्दीति विद ज्ञाने । प्रत्ययसन्नियोगे निपातनान्नकारः । इच्छेति इच्छतेःच्छकारः ॥

**१९०७ निद्रातन्द्राश्रद्धास्पृहिगृहिपतिशीङ्दयादालुः** ४।३।२३०। निद्रादिभ्यः सत्यालुर्भवति साध्वादिषु ॥ निद्रालुः तन्द्रालुः श्रद्धालुः स्पृहयालुः गृहयालुः पतयालुः शयालुः दयालुः ॥

**१९०८ भूवृषस्थागृहनकमुगमादुकण्** ।४।३।२३३। भूवादिभ्यः सत्युकण् भवति साध्वादिषु ॥ ण इत् । भावुकः वर्षुकः स्थायुकः शारुकः घातुकः कामुकः गामुकः ॥

**१९०९ लषपत्पदः** ।४।३।२३४। लषादिभ्यः सत्युकण् भवति साध्वादिषु ॥ लापुकः पातुकः पादुकः ॥

**१९१० क्रुद्भूषार्थसृगृधज्वलजुशुभश्चानः** ।४।३।२३५। क्रोधार्थात् भूषार्थात् स्रादिभ्यो लषादिभ्यश्च सत्यनो भवति साध्वादिषु ॥ क्रोधनः कोपनः भूषणः मण्डनः सरणः गर्धनः ज्वलनः जवनः शोभनः लषणः पतनः पदनः ॥

**१९११ हलाद्यन्ताद् ङिदितः** ।४।३।२३७। हलादिहलन्तादकर्मकात् ङितः इदितश्च सत्यनो भवति साध्वादिषु ॥ वर्तनः स्पर्धनः मीमांसनः चेतनः । अविवक्षितकर्मकस्याकर्मकत्वम् ॥

**१९१२ यङ्वद्दशजपादूकः** ।४।३।२४०। यङन्तेभ्यो यजादिभ्यस्सत्यूको भवति साध्वादिषु ॥ यायजूकः वावदूक दन्दशूकः जञ्जपूकः ॥

---

१ निद्रा तन्द्रा इति नितत्पूर्वो द्रायतिः द्रै स्वप्ने द्रा कुत्सायां गतौ च । तन्द्रेत्यत्र दकारस्य नकारो निपातनात् ॥

२ हल् आद्यन्ते यस्य स हलाद्यन्तस्तस्मात् । ङितो हलाद्यन्तात् इदितश्च हलाद्यन्तादकर्मकादिति यावत् ॥ हलाद्यन्तादिति किं? एधिता धर्ता । ङित इति किं? पक्ता हलाद्यन्त एक एव विज्ञायते तेन याथासंख्यं च न भवति ॥ अकर्मकादिति किं? वसिता वस्त्रम् । एके अत्राकर्मकादिति नापेक्षन्ते ॥

३ यायजूकः अभ्याचेकाजित्यादिना यङि ऐङिमिदहाकोरिति पूर्वस्य दीर्घः । यजः अकारस्य अत इति लुचि हलो य इति यलुक् ॥ इज्यार्शाल्ये यायजूको वावदूकोऽति वक्तरि ॥

**१९१३ जागुः** ।४।३।२४१। जागुः सत्यूको भवति साध्वादिषु ॥ जागरूकः ॥

**१९१४ शमष्टकदुषद्विषद्रुहदुहयुजत्यजरजभजाभ्याहनानुरुधो घिनञ्** ।४।३।२४२। शमष्टकाद्दुषादिभ्यश्च सति घिनञ् भवति साध्वादिषु ॥ अद्घञ इतः ॥ शमी दमी तमी श्रमी भ्रमी क्षमी क्लमी मादी दोषी द्वेषी द्रोही दोही योगी त्यागी रागी भागी अभ्याघाती अनुरोधी ॥

**१९१५ समः पृच्सृजज्वरोऽकर्मकात्** ।४।३।२४४। अकर्मकेभ्यः समः पृचादिभ्यस्सति घिनञ् भवति साध्वादिषु ॥ सम्पर्की संसर्गी संज्वारी ॥

**१९१६ वौ विचकषकत्थस्रम्भलसः** ।४।३।२४५। वेर्विचादिभ्यः सति घिनञ् भवति साध्वादिषु ॥ विवेकी विकाषी विकत्थी विस्रम्भी विलासी ॥

**१९१७ लपोऽपे च** ।४।३।२४६। अपविभ्यां लपः सति घिनञ् भवति साध्वादिषु ॥ अपलापी विलापी ॥

**१९१८ चरोऽतौ च** ।४।३।२४७। अत्यपाभ्यां चरस्सति घिनञ् भवति साध्वादिषु ॥ अतिचारी अपचारी ॥

**१९१९ लप्सृद्रुमथवद्वसः प्रे** ।४।३।२४८। प्राल्लपादिभ्यः सति घिनञ् भवति साध्वादिषु ॥ प्रलापी प्रसारी प्रद्रावी प्रमाथी प्रवादी प्रवासी ॥

**११२० परेः सृवददहमुहः** ।४।३।२४९। परेः सादिभ्यस्सति घिनञ् भवति साध्वादिषु ॥ परिसारी परिवादी परिदाही परिमोही ॥

---

१ शमामष्टकं शमष्टकं दिवादिषु शमू दमू उपशमने इति क्रमपठितम् ॥ युजेति युज्यतियुनक्त्योर्ग्रहणमविशेषात् ॥

२ विइत्युपसर्गे उपपदे सति । विजृङ् पृथग्भावे । कत्थि श्लाघायाम् । लस श्लेषणक्रीडनयोः ॥

१९२१ **क्षिपरटः** ।४।३।२५१। परेः क्षिपरटाभ्यां सति धिनञ् भवति साध्वादिषु ॥ परिक्षेपी परिराटी ॥

१९२२ **वादेश्च वुञ्** ।४।३।२५२। परेर्वादेः क्षिपरटाभ्यां च सति वुञ् भवति साध्वादिषु ॥ परिवादकः परिक्षेपकः परिराटकः ॥

१९२३ **निन्दहिंसक्लिशखादविनाशिव्याभाषासूयात्** ।४।३।२५३। निन्दादिभ्यस्सति वुञ् भवति साध्वादिषु ॥ निन्दकः हिंसकः क्लेशकः खादकः विनाशकः व्याभाषकः असूयकः ॥

१९२४ **कुट्टिलुण्टिवृज्जल्पिभिक्षादाकट्** ।४।३।२५५। कुट्टादिभ्यः सत्याकट्प्रत्ययो भवति साध्वादिषु ॥ ट इत् । कुट्टाकः लुण्टाकः वराकः जल्पाकः भिक्षाकः । स्त्रियां कुट्टाकीत्यादि ॥

१९२५ **दृक्षीण्वमज्यव्यथाभ्यम्परिभूविश्रेरिन्** ।४।३।२५६। द्रादिभ्यस्सतीन् भवति साध्वादिषु ॥ आदरी क्षयी उदयी वमी जयी अव्यथी अभ्यमी परिभवी विश्रयी ॥

१९२६ **प्रात् सृजोः** ।४।३।२५७। प्रात् सृजुभ्यां सतीन् भवति साध्वादिषु । प्रसवी प्रजवी ॥

१९२७ **मरक् सृद्घसः** ।४।३।२५८। सृादिभ्यः सति मरक् भवति साध्वादिषु ॥ क इत् । सृमरः अद्मरः घस्मरः ॥

१९२८ **भञ्जभासमिदो घुरः** ।४।३।२५९। भञ्जादिभ्यस्सति घुरो भवति साध्वादिषु ॥

१९२९ **घुरकेलिमकृष्टपच्यं कर्मणि** ।४।३।४६। घुरकेलिमौ प्रत्ययौ कृष्टपच्यश्च कर्मणि कर्तरि भवति ॥ भज्यते स्वयमेव भङ्गुरं वपुः। अत एव वचनाद्धातोः केलिमः पचेलिमः उद्भिदेलिम इत्यादि । भासादेः कर्तरि भासुरः मेदुरः ॥

१९३० **वेत्तिच्छिद्भिदः कित्** ।४।३।२६०। विदादिभ्यः सति

१ दृ आदरे । क्षीति निरनुबन्धकग्रहणं न क्षिपः । इण् गतौ । नञ्पूर्वव्यथिष् भयचलनयोः । अभिपूर्वःअम रोगे । श्रि निवासगत्योः ॥ जयी जिजि अभिभवे ॥

घुरो भवति साध्वादिषु स च कित् ॥ बहुलाधिकारात् कर्तर्यपि । विदुरः कर्माच्छिदुरः भिदुरः ॥

१९३१ सर्तीण्नग्जेष्वरप् ।४।३।२६१। सर्त्यादिभ्यः सति ट्वरप् भवति साध्वादिषु स च कित् ॥ टपावितौ । तक् । सृत्वरः इत्वरः नश्वरः जित्वरः । स्त्रियां सृत्वरी ॥

१९३२ गत्वरः ।४।३।२६२। सति साध्वादिषु गत्वर इति निपात्यते ॥

१९३३ नंकम्यजस्कम्पास्मिहिंसदीपो रः ।४।३।२६३। नमादिभ्यस्सति रो भवति साध्वादिषु ॥ नम्रः कम्रः अजस्रं कम्प्रः स्मेरः हिंस्रः दीप्रः ॥

१९३४ स्वप्तृषिधृषो ङ्नज् ।४।३।२६४। स्वपादिभ्यः सति ङ्नज् भवति साध्वादिषु ॥ ङ इत् । स्वप्नक् तृष्णक् धृष्णक् ॥

१९३५ भ्यःक्रुकुक्लुकाः ।४।३।२६५। बिभेतेस्सति क्रुकुकक्लुका भवन्ति साध्वादिषु ॥ क इत् । भीरुः भीरुकः भीलुकः ॥

१९३६ स्थेशभासपिसकसो वरः ।४।३।२६६। स्थादिभ्यः सति वरो भवति साध्वादिषु ॥ स्थावरः ईश्वरः भास्वरः पेस्वरः विकस्वरः ॥

१९३७ यायावरश्च ।४।३।२६७। सति साध्वादिषु यायावर इति निपात्यते ॥

१९३८ संविप्राद् भुवोऽनाम्न्युड् ।४।३।२६८। चानुकृष्टत्वात् साधुधर्मशीलेष्विति निवृत्तम् । संविप्रेभ्यो भुवः उड् भवति न नाम्नि ॥ सम्भुः विभुः प्रभुः । नाम्नि । विभूरित्यादि ॥

१९३९ मितद्र्वादयः ।४।३।२६९। सति मितद्रु इत्यादयो निपात्यन्ते ॥ मितद्रुः शम्भुः इत्यादयः शिष्टप्रयोगेषु लक्ष्याः ॥

१९४० इत्र[१] प्वो दैवते ।४।३।२७०। प्व इत्रो भवति दैवते कर्तरि ॥ पूयात् पवित्रो भगवान् मनो मे ॥

---

१ गत्वर इति गमः त्वरप् मलुक्चेति निपात्यते । गत्वर्यो यवनस्त्रियः ॥

**१९४१ संज्ञर्षौ करणे** ।४।३।२७१। पुवः करणे इत्रो भवति संज्ञायाम् ऋषौ चाभिधेये ॥ पवित्रा नदी । पवित्रो जिनमुनिः ॥

**१९४२ लूधूसूखनसहचरत्रैः** ।४।३।२७२। ल्वादिभ्यः करणे इत्रो भवति ॥ लूयते अनेनेति लवित्रम् । एवं धवित्रं[1] सवित्रं खनित्रं सहित्रं चारित्रम् अरित्रं ॥

**१९४३ प्वो हलक्रोडमुखे त्रट्** ।४।३।२७६। प्वस्त्रट् भवति हलमुखे क्रोडमुखे च करणे ॥ ट इत् । अत्रवपुणादेरिति नेट् । पोत्रं ॥

**१९४४ दाम्नीशस्युज्युसिचसिस्तुतुदमिहनहदंशपतः**[2] ।४।३।२७७। दावादिभ्यः करणे त्रट् भवति ॥ दात्रं नेत्रं शस्त्रं योक्त्रं योत्रं सेक्त्रं सेत्रं स्तोत्रं तोत्रं मेढ्रः नद्धी । दंष्ट्रा अजादित्वादाड् । पत्रं ॥

**१९४५ धात्री** ।४।३।२७८। धेटो धाञश्च कर्मणि त्रटि धात्रीति निपात्यते ॥

**१९४६ मतिपूजार्थञीच्छील्यादिभ्यः क्तः** ।४।३।२७९। इच्छार्थेभ्यः ज्ञानार्थेभ्यः पूजार्थेभ्यः ञीभ्यः शील्यादिभ्यश्च सत्यर्थे क्तो भवति ॥ सतां मतः । सतामिष्टः । सतां ज्ञातः । सतां विदितः । सतां पूजितः । सतामर्चितः । मिन्नः स्विन्नः इद्धः ॥

शीलितो रक्षितः क्षान्तः आक्रुष्टो जुष्ट उद्यतः ।
संयतश्शायितस्तुष्टो रुष्टो रुषित आशितः ॥
क्रान्तोऽभिव्याहृतो हृष्टो दसलृप्तो मृतस्तथा ।
लिप्तस्स्निग्धश्च दयित इत्याद्याः सति लक्षिताः ॥

**१९४७ उणादयः** ।४।३।२८०। धातोः सत्यर्थे उणादयो बहुलं[3] भवन्ति ॥ कारुः वायुः करण्डः वरण्ड इत्यादयः उणादिवृत्तौ ज्ञातव्याः ॥

---

१ धवित्रं व्यजनं तच्चद्रचितं मृगचर्मणा ॥ खनित्रमुपधारणम् । अरित्रं के निपातकः ॥

२ दाव् नी शस् यज् यु सिच् सि स्तुत् तुद् मिह नह दंश पत् इत्येतेभ्यो धातुभ्यः ॥

३ बहुलग्रहणं प्रयोगानुसरणार्थं । तेन ये येभ्यो धातुभ्यो यस्मिन्नर्थे यथा दृश्यन्ते तेभ्यस्तस्मिन्तथा भवन्तीति धात्वर्थकार्यनियमः सिद्धो भवति ॥

**१९४८ गम्यादिर्वर्त्स्यति** ।४।३।२८१। वर्त्स्यति भविष्यति गम्यादयो निपात्यन्ते ॥ गमिष्यतीति गमी आगमी भावी प्रस्थायी प्रतिबोधी प्रमायी ॥

इति घ्यणादिपरिच्छेदः ॥

**१९४९ पद्रुजो घञ्** ।४।४।१। पदिरुजिभ्यां कर्तरि घञ् भवति ॥ घञावितौ । पद्यत इति पादः । रुजतीति रोगः ॥

**१९५० सुः स्थिरव्याधिमत्स्यबले** ।४।४।२। स्थिरव्याधिमत्स्यबलेषु कर्तरि सर्तेर्घञ् भवति ॥ स्थिरे । चन्दनसारः वज्रसारः ॥

**१९५१ घञ्युपसर्गस्य च** ।२।२।८८। उपसर्गस्याचो घञन्ते परे बहुलं दीर्घो भवति ॥ अतिसारः अतीसारः । मत्स्ये विसारः वीसारः । बले सारः ॥

**१९५२ अकर्तरि** ।४।४।३। अकर्तरि कारके भावे च धातोर्घञ् भवति ॥ भवनं भावः । पचनं पाकः । आयः । एवं त्यागः । प्रास्यत इति प्रासः । दायः लाभः आहारः ॥

**१९५३ घञि भावकरणे** ।४।१।२२७। रञ्जो नस्य भावकरणयोर्घञि लुग् भवति ॥ रञ्जनं रज्यते अनेनेति वा रागः । अन्यत्र रज्यत इति रङ्गः ॥

**१९५४ स्यदो जवे** ।४।१।२२८। स्यन्दतेर्घञि जवे स्यद इति निपात्यते ॥ अन्यत्र । स्यन्दः ॥

**१९५५ प्रश्रथहिमश्रथघावोदोद्मदशनम्** ।४।१।२२९। एते घञन्ता निपात्यन्ते ॥ श्रन्थेर्घञि प्रश्रथः । हिमश्रथः । इन्धेरेधः । अवा-

---

१ गम्यादिः शब्दगणः इनादिप्रत्ययान्तो वर्त्स्यतिधात्वर्थे साधुर्वेदितव्यः । पदे सामान्यवृत्तावप्यर्थात्प्रकरणाच्छब्दाद्वाऽन्तरसन्निधेर्वा विशेषप्रतिपत्तिर्भवति ॥ श्वो गमी ग्राममिति वाक्यार्थः ॥

२ घञीति किं? रजनं । भावकरणे इति किं? रज्यत्यस्मिन्निति रङ्गः । रजनी रजनं रजः इत्युणादयः ॥

दुन्देरवोदः । उन्देर्मनि ओद्म । दंशेरनटि दशनम् ॥

**१९५६ विश्रमो घञि** ।४।१।२३४। विश्रमो घञ्याद्वा भवति ॥ विश्रमः विश्रामः ॥

**१९५७ नोद्यमोपरमः** ।४।१।२३५। उदो यम उपाद्रमश्च घञ्याद् न भवति ॥ उद्यमः उपरमः । अन्यत्र नियामः विरामः । मजन्निति नात् । शमः जनः वधः । यमादेरात् । नामः वामः कामः चामः प्रसादः प्रासादः अतिचारः अतीचारः ॥

**१९५८ घञ्खे चोपसर्गात्** ।४।२।२०७। उपसर्गाल्लभो घञि खे ञ्यमि च नम् भवति ॥ प्रलम्भः उपलम्भः । वाक्येति नाम्नि कुत्वम् अर्घः निदाघः अवदाघः । अनाम्नि अर्हः निदाहः अवदाहः । अदो घस् घासः ॥

**१९५९ स्फुरस्फुलोर्घञि** ।४।१।२८२। स्फुरस्फुलोर्धात्वोरचो घञ्याद् भवति ॥ विस्फारः विस्फालः ॥

**१९६० इङः** ।४।४।४। इङोऽकर्तरि घञ् भवति ॥ अध्यायः उपाध्यायः ॥

**१९६१ पूल्वूनीरोर्निरभ्यवोपसर्गे** ।४।४।६। निसः प्वः अभेर्ल्वः अवान्नियः उपसर्गसामान्याद्रोश्चाकर्तरि घञ् भवति ॥ निष्पावः अभिलावः अवनायः विरावः संरावः ॥

**१९६२ भूश्र्यदोऽच्** ।४।४।७। उपसर्गात् भूश्र्यादिभ्योऽकर्तरि अच् भवति ॥ च इत् । प्रभवः परिभवः विभवः प्रश्रयः परिश्रयः प्रघसः विघसः ॥

**१९६३ नौ णश्चादः** ।४।४।८। नेरदो णोऽच्च भवति ॥ न्यादः निघसः ॥

---

१ श्रमू तपसि । घटादिकगे इत्यादिना उपान्त्यस्येत्यनुवृत्तिः । विपूर्वग्रहणं किं? श्रमः आश्रमः । घञीति किं? विश्रमी ॥

२ घञीति किं? स्फारः । ग्ःवृगंवश्नृरणह्ग्रहोऽजिति वक्ष्यमाणस्याचोऽपवादः ॥

३ भूश्र्योरुपसर्ग एव नियमार्थं ग्रहणम् । अद भक्षणे घञोऽपवादः । चकारः वसृङ् घञ् इति प्रतिग्रहणार्थः । उपसर्ग इति किं? भावः श्रावः घासः ॥

**१९६४ स्वनगदनदक्वणपठो वा** ।४।४।९। नेः स्वनादिभ्योऽकर्तरि अज् वा भवति ॥ पक्षे घञ् । निस्वनः निस्वानः । निगदः निगादः । निनदः निनादः । निक्वणः निक्वाणः । निपठः निपाठः ॥

**१९६५ यमः सन्निव्युपे** ।४।४।१०। सन्निव्युपेभ्यो यमोऽकर्तर्यज्वा भवति ॥ संयमः संयामः । नियमः नियामः । वियमः वियामः । उपयमः उपयामः ॥

**१९६६ क्वणो वैणे** ।४।४।११। उपसर्गात् क्वणो वैणेऽर्थे अज्वा भवति ॥ प्रक्वणः प्रक्वाणः ॥

**१९६७ घोः किः** ।४।४।१२। घुसंज्ञादकर्तरि किर्भवति ॥ कित्त्वादातो लुक् । आदिः प्रधिः विधिः सन्धिः । असमत्वात् घञपि । आदायः ॥

**१९६८ आप्यादाधारे** ।४।४।१३। आप्याद् घोराधारे किर्भवति ॥ जलानि धीयन्तेऽस्मिन्निति जलधिः इषुधिः ॥[1]

**१९६९ य्वृगमवशवृरणदग्रहोऽच्** ।४।४।१४। इवर्णान्तादुवर्णान्तादृदन्तात् गमादिभ्यश्च अकर्तर्यच् भवति ॥ अयः प्रत्ययः नयः प्रणयः जवः प्रजवः आस्रवः लवः पवः दरः तरः गमः अधिगमः वशः वरः संवरः रणः आदरः ग्रहः प्रतिग्रहः ॥

**१९७० समुदोऽजः पशौ**[2] ।४।४।१५। समुद्भ्यामजोऽकर्तर्यच् भवति पशुसम्बन्धे ॥ समजः उदजः पशूनाम् । अन्येषां । समाजः उदाजः ॥

**१९७१ प्रमदसम्मदौ हर्षे** ।४।४।१७। एतौ हर्षे अजन्तौ निपात्येते ॥ प्रमदः सम्मदः हर्ष इत्यर्थः । अन्यत्र प्रमादः सम्मादः ॥

**१९७२ प्रघणप्रघाणौ कोष्ठकांशे** ।४।४।१९। एतौ कोष्ठकांशे

---

१ आप्यात्कर्मणः परात् घोराधारे प्रत्ययो भवति । शरधिः जालधिः ॥

२ अज भक्षणे । पशुविषयश्चेत्स धात्वर्थो भवति । समजः पशूनां समवाय इत्यर्थः । उदजः पशूनां प्रेरणमित्यर्थः । समुदिति किं? व्याजः पशूनां । पशूनां समजोऽन्येषां समाजः ॥

निपात्येते । प्रघणः प्रघाणः । अन्यत्र प्रघातः ॥

**१९७३ घनोद्घनापघनोपघ्ननिघोद्घसङ्घा मूर्त्यत्याधानाङ्गासन्ननिमितप्रशस्तगणाः** ।४।४।२०। घनादयो यथासङ्ख्यं मूर्त्यादिषु निपात्यन्ते ॥ घनो मूर्तिः उद्घनोऽत्याधानं तक्षणे आधारकाष्ठम् । अपघनोऽङ्गम् । उपघ्नः आसन्नः । निघः निमितः परिणाहः । उद्घः प्रशस्तः । सङ्घो गणः । अन्यत्र उद्घातः अपघातः इत्यादि ॥

**१९७४ ह्वो वश्चोश्विन्यभ्युपे** ।४।४।२१। विन्यभ्युपेभ्यो ह्वयतेरच् भवति वा इत्यस्य च उश् ॥ विहवः निहवः अभिहवः उपहवः । अन्यस्मात् संह्वायः ॥

**१९७५ आङि युद्धे** ।४।४।२२। आङो ह्वयतेरज् भवति वश्च उश् युद्धेर्थे ॥ आहवः । अन्यत्र आह्वायः ॥

**१९७६ निपानेमाहावः** ।४।४।२३। निपाने आहाव इति निपात्यते ॥ पश्वादीनां पानार्थो जलाधार आहावः ॥

**१९७७ भावेऽनुपसर्गात्** ।४।४।२४। अनुपसर्गात् ह्वेञो भावे अच् भवति वश्चोश् ॥ ह्वानं हवः ॥

**१९७८ मदव्यधजपः** ।४।४।२५। अनुपसर्गेभ्यो मदादिभ्योऽकर्तर्यच् भवति ॥ मदः व्यधः जपः । उपसर्गाद्धञ् । उन्मादः अनुव्याधः । उपजापः ॥

---

१ घन उद्घन अपघन उपघ्न निघ उद्घ संघ इत्येते शब्दाः अजन्ता निपात्यन्ते यथासंख्यं मूर्त्यादिषु वाच्येषु । अभ्रघनः दधिघनः । घनं दधीति धर्म्यभिधानं गुण" शब्दोऽयं गुणिन्यपि वर्तते ॥ यस्मिन् काष्ठे स्थापयित्वा काष्ठानि तक्ष्यन्ते स उद्घनः ॥ अपहन्यते अनेनेति अपघनोऽङ्गं पाणी पादौ वा न सर्वम् ॥ उपहन्यते समीपमिति ज्ञायत इत्युपघ्नः । अच् घ्नभावश्च ॥ आसन्नः समीपमुच्यते पर्वतोपघ्नः ग्रामोपघ्नः । स्यादुपघ्नोऽन्तिकाश्रये ॥ निहन्यते निर्विशेषं निश्चयेन ज्ञायत इति निघः । निघा वृक्षाः निघाः शालयः ॥ उद्धन्यते उत्कर्षेण ज्ञायते इत्युद्घः ॥ संहतिः संघः गणः समुदायः ॥

२ नियमेन पिबन्त्यस्मिन्निति निपानं । आहूयन्ते पशुभिः पशवः पानायात्रेति आहावः । आहवस्तु निपानं स्यात् ॥

**१९७९ क्वण्यंहस्स्वन्न्यो वा** ।४।४।२६। अनुपसर्गेभ्योऽकर्तर्यञ्वा भवति ॥ क्वणः क्वाणः । यमः यामः । हसः हासः । स्वनः स्वानः । नयः नायः । उपसर्गात् । प्रक्वाणः प्रयामः प्रहासः विष्वाणः प्रणयः ॥

**१९८० आङि रुप्लोः** ।४।४।२७। आङो रुप्लुभ्याम् अकर्तर्यञ्वा भवति ॥ आरवः आरावः आप्लवः आप्लावः । अन्यस्मात् । विरावः विप्लवः ॥

**१९८१ ग्रहोऽवे वर्षे** ।४।४।२८। अवाद् ग्रहोऽञ्वा भवति वर्ष-सम्बन्धे ॥ अवग्रहः अवग्राहः । वर्षस्य विघात इत्यर्थः । अन्यत्र अवग्रहः ॥

**१९८२ प्रे युग्यतुलासूत्रे** ।४।४।२९। प्राद् ग्रहोऽकर्तर्यञ्वा भवति युग्यसूत्रतुलासूत्रयोः ॥ प्रग्रहः प्रग्राहः । अन्यत्र । प्रग्रहः ॥

**१९८३ वृर्वस्त्रे** ।४।४।३०। प्राद्वृञोऽकर्तर्यञ्वा भवति वस्त्रेऽर्थे ॥ प्रवरः प्रावारः वस्त्रविशेषः । अन्यत्र । प्रवरो मुनिः ॥

**१९८४ उदि नीश्रिञः** ।४।४।३१। उदो नीश्रिभ्यां अकर्तर्यञ्वा भवति ॥ उन्नयः उन्नायः । उच्छ्रयः उच्छ्रायः ॥

**१९८५ पूद्रुयौतेर्घञ्** ।४।४।३२। उदः पूद्रुयौतिभ्योऽकर्तरि घञ् भवति ॥ उत्पावः उद्द्रावः उद्यावः ॥

**१९८६ ग्रहः** ।४।४।३३। उदो ग्रहोऽकर्तरि घञ् भवति ॥ उद्ग्राहः ॥

**१९८७ समि मुष्टौ** ।४।४।३४। समो ग्रहोऽकर्तरि घञ् भवति मुष्टिविषयेऽर्थे ॥ अहो मल्लस्य सङ्ग्राहः । मुष्टेर्दार्ढ्यमित्यर्थः । अन्यत्र सङ्ग्रहः ॥

**१९८८ युद्रुदोः** ।४।४।३५। समो युद्रुदुभ्योऽकर्तरि घञ् भवति संयावः संद्रावः सन्दावः ॥

---

१ प्राप्तकालस्य वर्षणस्य कुतश्चिन्निमित्तादभावो धात्वर्थः । वर्ष इति किं? अवग्रहः ज्ञानमित्यर्थः । अत्र नित्यमेवाप् ॥

२ युगं वहतीति युग्यः अश्वो बलीवर्दो वा । प्रग्रहोरथादिनियुक्ताश्वादिसंयमनरज्जुः तुलादिसूत्रं चाभिधीयते ॥

३ नित्यमचि प्राप्ते विकल्पः । द्वौ प्रवारोत्तरासङ्गौ । उत्तरीयवस्त्रम् ॥

४ अंगुलिसन्निवेशो मुष्टिः न परिमाणम् । परिमाणस्य मानमिति सिद्धत्वात् ॥

**१९८९ स्तोर्यज्ञे** ।४।४।३६। समस्तोरकर्तरि घञ् भवति यज्ञविषये ॥ संस्तावो[1] यागभूमिः । अन्यत्र संस्तवः ॥

**१९९० द्रुस्तुस्रोः** ।४।४।४०। प्राद्द्रुस्तुस्रुभ्योऽकर्तरि घञ् भवति ॥ प्रद्रावः प्रस्तावः । प्रस्रावः ॥

**१९९१ स्त्रोऽयज्ञे** ।४।४।४१। प्रात् स्तृञोऽकर्तरि घञ् भवति न यज्ञविषये ॥ नयप्रस्तारः विगानप्रस्तारः । यज्ञे शान्तिप्रस्तरः ॥

**१९९२ वौ प्रथनेऽशब्दे** ।४।४।४२। वेः स्तृञोऽकर्तरि प्रथने विशालत्वे घञ् भवति न शब्दविषये ॥ विस्तारः पटस्य । विस्तरः प्रवचनस्य ॥

**१९९३ क्षुश्रोः** ।४।४।४३। वेः क्षुश्रुभ्यां अकर्तरि घञ् भवति ॥ विक्षावः विश्रावः ॥

**१९९४ व्युपे शीङः क्रमे** ।४।४।४४। व्युपाभ्यां शीङोऽकर्तरि घञ् भवति ॥ क्रमविषये ॥ विशायः उपशायः[2] क्रमप्राप्तं शयनम् । अन्यत्र विशयः उपशयः ॥

**१९९५ हस्तादेयेऽस्तेयेऽनुदश्चेः** ।४।४।४५। अनुदश्चिञोऽकर्तरि घञ् भवति हस्तादेयविषये न स्तेये[3] ॥ पुष्पप्रचायः क्रियते वधूभिः । स्तेये पुष्पप्रचयः क्रियते चोरेण । उदः पुष्पोच्चयः ॥

**१९९६ चित्युपसमाधानावासदेहे कश्चादेः** ।४।४।४६।

---

१ संस्तावस्तु क्रतुषु या स्तुतिभूमिर्द्विजन्मनाम् । स्तुवन्त्यत्रेति संस्तावश्छन्दोगानां यत्र देशे छन्दोगाः समेत्य स्तुवन्ति स देशः संस्ताव उच्यते । यज्ञ इति किं? संस्तावोऽन्यदृष्टिः ॥

२ उपशायो विशायश्च पर्यायशयनार्थकौ ॥ वितर्को विशयः शङ्का सन्देहः ॥

३ हस्तेनोपायान्तरनिरपेक्षं यथा तथा तु शक्यते । स्तेये चौर्ये । हस्तादेये इति च प्रत्यासत्तिरुच्यते । तेन तत्प्रत्यासन्नकर्मविषये धात्वर्थे माने नियमार्थं चेदं विज्ञेयमस्तेये एवेति ॥ हस्तादेयमिति हि प्रमाणमुच्यते यद्धस्ते सम्भवति न तद्धस्तादतिरिच्यत इति । तेन हस्तादेये चेति स्तेये मानेऽपि पुष्पप्रचाय इत्येव भवति ॥

४ चीयते इति चित्यग्न्याधारः । प्रकीर्णानामेकत्रोपरि उपराशिभावेन करणमुपसमाधानम् । आवसन्त्यत्रेत्यावासो निवासः ॥

चित्यादिविषयेऽर्थे चिञोऽकर्तरि घञ् भवति आदेश्चस्य कश्च ॥ चितौ आकायः । उपसमाधाने गोमयनिकायः । आवासे मुनिनिकायः । देहे कायः ॥ अन्यत्र चयः ॥

**१९९७ सङ्घेऽनुपरौ** ।४।४।४७। सङ्घेऽर्थे चिञोऽकर्तरि घञ् भवति आदेश्च कः नोपरिभावे ॥ देवाश्चतुर्निकायाः । उपरिभावे सूकरनिचयः ॥

**१९९८ माने** ।४।४।४८। माने सङ्ख्यापरिमाणयोरकर्तरि घञ् भवति ॥ एको निघासः । द्वौ निघासौ । तण्डुलसंग्राह इत्यादि ॥

**१९९९ न्युदि ग्रः** ।४।४।४९। न्युद्र्यां गिरतेरकर्तरि घञ् भवति ॥ निगारः उद्गारः । न्युदीति किं? । गरः सङ्गरः ॥

**२००० क्रो धान्ये** ।४।४।५०। न्युद्र्यां किरतेरकर्तरि घञ् भवति धान्यविषये ॥ निकारस्तण्डुलानामुत्कारः राशिरित्यर्थः । अन्यत्र फलानां निकरः । गुणोत्करैः । करैः ॥

**२००१ नौ वुः** ।४।४।५१। नेर्वृञोऽकर्तरि घञ् भवति धान्ये ॥ नीवारः । अन्यत्र निवरः ॥

**२००२ इणोऽभ्रेषे** ।४।४।५२। नेरिणोऽकर्तरि घञ् भवति न भ्रेषे ॥ न्यायः । भ्रेषे न्ययो नाशः ॥[1]

**२००३ परौ क्रमे** ।४।४।५३। परेरिणोऽकर्तरि घञ् भवति क्रमेऽर्थे। पर्यायः ऋतूनाम् । अन्यत्र पर्ययः ॥[2]

**२००४ भ्वोऽवज्ञाने वा** ।४।४।५५। परेर्भुवोऽकर्तरि घञ् वा भवत्यवज्ञाने ॥ परीभावः परिभावः । अवज्ञाने असति । परिसो भवः परिभवः ॥

**२००५ स्थादिभ्यः कः** ।४।४।५६। स्थादिभ्योऽकर्तरि को भवति ॥ सन्तिष्ठतेऽस्यामिति संस्था । एवं व्यवस्था प्रपिबन्त्यस्यामिति प्रपा । विह-

---

१ अभ्रेषविषये। भ्रेषः स्वरूपाच्चलनं प्रच्युतिः। एषोऽत्र न्याय एतदत्र साधुरित्यर्थः।

२ तव पर्यायो भोक्तुं । क्रमेण पदार्थानां क्रियासम्बन्धः पर्यायः । कोऽस्य पर्यायोऽतिपातः ॥

न्यते अनेन अस्मिन्निति वा विघ्नः। आयुध्यते अनेन इत्यायुधं इत्यादयः प्रयोगगम्याः। बहुलाधिकारात् विघात इत्याद्यपि॥

२००६ **ट्वितोऽथुच्**[1] ।४।४।५७। ट्वितोऽधातोरकर्तरि अथुर्भवति ड्वितः क्त्रिः॥ क इत्। वेपथुः श्वयथुः स्फूर्जथुः नन्दथुः भरथुः वमथुः॥

२००७ **क्त्रेर्मम्**[2] ।३।२।२०। क्त्रिरिमपर एव प्रयोज्यः॥ पाकेन निर्वृत्तं पक्त्रिमम्। उप्त्रिमं कृत्रिमं विहित्रिमं याचित्रिमं भृत्रिमं दत्त्रिमं मक्त्रिमं॥

२००८ **यज्यतुप्रच्छस्वप्रक्षो नः** ।४।४।५८। यजादिभ्योऽकर्तरि नो भवति॥ यज्ञः यत्नः। छस्य शः। प्रश्नः स्वप्नः रक्ष्णः॥

२००९ **विच्छेर्नङ्** ।४।४।५९। विच्छेरकर्तरि नङ् भवति॥ विश्नः॥

२०१० **व्याप्तौ भावेऽनञिन्** ।५।४।६०। धातोर्भावे अनो ञिन् च भवतः व्याप्तौ गम्यमानायाम्॥

२०११ **अञिनोऽण्** ।३।४।१३९। आन्तात् ञिनन्ताच्च स्वार्थे अण् भवति॥ सङ्कुटनं साङ्कोटिनमेषां। संरवणं सांराविणं सेनायाः॥

२०१२ **स्त्रियां क्तिन्** ।४।४।६१। धातोरकर्तरि स्त्रीलिङ्गे क्तिन् भवति॥ कृताविती॥

२०१३ **तेर्ग्रहादिभ्यः**[3] ।४।२।१३५। ग्रहादिभ्य एव क्तेरिट् भव-

---

१ टुश्च डुश्च टुडू तौ इतौ यस्यासौ टुड्वित् तस्मात्। टकारानुबन्धादथुप्रत्ययः। डकारानुबन्धात् क्त्रिप्रत्ययः। टुवेपृङ् चलने। टुवोश्वि गतिवृद्ध्योः। टुवोस्फूर्जा वज्रनिर्घोषे। टुनद समृद्धौ। टुडुभृञ् धारणपोषणयोः॥

२ इमेप्रत्यये परे क्त्रिप्रत्ययो भवति। "भावादिमः ।७७०।" यन्ताद्भावप्रत्यया-न्तात् इमो भवतीति तद्धितः॥ पाकेन निर्वृत्तं पाक्त्रिमं। तद्धितसूत्रेण लुक्। डुपचिष् पाके। डुवपि बीजसन्ताने। डुकृञ् करणे। डुधाञ् धारणे। धाञो हीति हिः॥ डुयाचृञ् याचने। टुडुभृञ्। डुदाञ्॥

३ तेर्ग्रहादेरेवेति नियमार्थं वचनं। तेनान्यत्र तेर्न भवति। वान्तिः दीप्तिः पाक्तिः। तेरेव ग्रहादेरिति नियमो न भवति उत्तरत्रालिटीति प्रतिषेधात्॥

ति ॥ इति नियमादन्येभ्यो न भवति । हत्तिः यत्तिः । पचुङ् व्यक्तीकरणे । पङ्क्तिः भ्राष्टिः गुप्तिः ॥

**२०१४ लभादिभ्यः** ।४।४।६२। लभादिभ्योऽकर्तरि क्तिन् भवति ॥ लब्धिः क्षान्तिः कान्तिः । यलुक् । ऊतिः पूतिः तातिः स्रस्तिः ऊढिः गाढिः स्मितिः क्नुतिः च्युतिः धृतिः मितिः दत्तिः प्यातिः मित्तिः स्विन्तिः क्षुब्धिः भ्रष्टिः ध्वस्तिः वृद्धिः स्यत्तिः क्लप्तिः तूर्तिः जूर्तिः स्तृतिः । ऋल्वादेरिति तस्य नः । दीर्णिः मात्तिः राष्टिः रतिः बुद्धिः । ग्रहादित्वादिट् । निपतितिः वान्तिः सत्तिः कृष्टिः । ग्रहादित्वादिट् । निकुचितिः रूढिः भूतिः सुतिः द्रुतिः जितिः भीतिः पीतिः भ्रातिः स्थितिः । लभादित्वात् व्यवस्थितिः दातिः ॥

**२०१५ ग्लाज्याहो निः** ।४।४।७४। ग्लादिभ्योऽकर्तरि स्त्रियां निर्भवति ॥ ग्लानिः ज्यानिः गीतिः ध्यातिः स्नुतिः ऋतिः तीर्णिः चित्तिः । ग्रहादित्वादिट् । अर्चितिः । छलुक् । हूर्तिः मूर्तिः स्फूर्तिः सक्तिः । ग्रहादित्वादिट् । निपठितिः तप्तिः जप्तिः यब्धिः गतिः सृप्तिः भणितिः कान्तिः नतिः यतिः आचान्तिः भ्रान्ति फुल्तिः क्ष्यूतिः ष्ठ्यूतिः ऊतिः वृष्टिः पुष्टिः ह्रष्टिः भ्रष्टिः पृष्टिः हष्टिः दष्टिः शस्तिः दग्धिः शूतिः उषितिः उदितिः ईष्टिः उप्तिः ऊढिः उतिः वीतिः हतिः धौतिः पक्तिः भक्तिः ॥

**२०१६ क्तिन्यपचायः** ।४।१।२४३। अपाचाय उपान्त्यस्य क्तिनीट् भवति ॥ यलुक् । अपचितिः । न आत् । स्वातिः माढिः गूढिः श्रितिः हृतिः भृतिः कृतिः नीतिः ॥ अदादिः ॥ जग्धिः वित्तिः मृष्टिः उक्तिः सुप्तिः उष्टिः रुतिः इतिः ख्यातिः मितिः ईर्तिः आशास्तिः ( शिष्टिः ) पृक्तिः सूतिः शीतिः अधीतिः न्हुतिः द्विष्टिः ॥

ह्वादिः ॥ हुतिः भीतिः हानिः मितिः दत्तिः हितिः निक्तिः ॥ दिवादिः ॥ द्यूतिः स्यूतिः नृत्तिः क्षिप्तिः सिद्धिः शुष्टिः दुष्टिः श्लिष्टिः शक्तिः शुद्धिः सिद्धिः शान्तिः दान्तिः श्रान्तिः क्लान्तिः भ्रष्टिः क्लिष्टिः रुष्टिः

१ षिचिन्तिकथिपूजीत्यादिना आस्सर्वाकेऽपवादः ॥

लुब्धिः ऋद्धिः गृद्धिः रद्धिः नष्टिः तृप्तिः दृप्तिः मुग्धिः मूढिः जीर्णिः शितिः शातिः छितिः छातिः सितिः दितिः जातिः दीप्तिः पूर्तिः क्लिष्टिः पत्तिः वित्तिः युक्तिः सृष्टिः प्रीतिः नाद्धिः शप्तिः ॥

स्वादिः ॥ सुतिः विस्तृतिः वृतिः धूतिः दुतिः श्रुतिः प्रहितिः आप्तिः राद्धिः साद्धिः धृष्टिः ॥ क्र्यादिः ॥ क्रीतिः गृहीतिः । तो नः लूनिः धूनिः स्तीर्णिः कीर्णिः वूर्णिः शीर्णिः मूर्णिः पूर्तिः चीर्णिः ईर्णिः गीर्णिः ज्यानिः लीनिः ज्ञातिः अष्टिः वृत्तिः ॥ तुदादिः ॥ तुत्तिः दिष्टिः लिप्तिः सिक्तिः मुक्तिः लुप्तिः कृत्तिः क्षितिः मृतिः धृतिः पृष्टिः मक्तिः स्पृष्टिः मृष्टिः दृब्धिः इष्टिः गूर्तिः पृतिः जुष्टिः स्वक्तिः रब्धिः लब्धिः ॥ तनादिः ॥ ततिः सातिः क्षतिः मतिः ॥ रुधादिः ॥ रुद्धिः छित्तिः इद्धिः शिष्टिः पिष्टिः भक्तिः भुक्तिः अक्तिः ॥ ण्यन्तात् ॥ पाक्तिः याष्टिः इत्यादि शिष्टप्रयोगानुसारेण ज्ञातव्यम् ॥

**२०१७ स्रिष्यजस्तोः करणे** ।४।४।६३। स्वादिभ्यः करणे स्त्रियां क्तिन् भवति ॥ अनटोऽपवादः । स्रवन्त्यनयेति स्रुतिः । इच्छन्ति यजन्ति वा अनयेति इष्टिः । स्तुवन्त्यनयेति स्तुतिः ॥

**२०१८ गापापचो भावे** ।४।४।६४। गादिभ्यो भावे स्त्रियां क्तिन् भवति ॥ अङोऽपवादः[1] । सङ्गीतिः प्रपीतिः पक्तिः ॥

**२०१९ स्थो वा** ।४।४।६५। स्थो भावे स्त्रियां क्तिन् भवति वा ॥ व्यवस्थितिः । पक्षे अङ् । व्यवस्था ॥

**२०२० व्यतिहारे ञः** ।४।४।६६। व्यतिहारे भावे धातोः स्त्रियां ञो वा भवति ॥ व्याक्रोशी व्याकृष्टिर्वर्तते[2] । व्यावलेपी व्यावलिप्तिः ॥

**२०२१ ण्युक्षः** ।४।४।६७। ण्यन्तादुक्षश्च व्यतिहारे भावे स्त्रियां ञो वा भवति ॥ व्यातिचोरी व्यातिचर्ची व्यात्युक्षी ॥

---

१ उपसर्गादात इति वक्ष्यमाणसूत्रेण अङ् प्राप्तिः । षिच्चिन्तीति प्राप्तिः ॥

२ परस्परमाक्रोशात्स्वेवं प्रयुज्यते । स्त्रियामिति किं? व्यतिहारो वर्तते ॥

**२०२२ व्रज्यजः क्यप्** ।४।४।६८। व्रज्यजिभ्यां भावे स्त्रियां क्यप् भवति ॥ व्रज्या इज्या ॥

**२०२३ कृञः शक्तिन् च** ।४।४।७१। कृञोऽकर्तरि स्त्रियां शः क्तिन् क्यप् च भवति ॥ क्रिया कृतिः कृत्या ॥

**२०२४ सम्पदादिभ्यः क्तिन्क्विप्** ।४।४।७२। सम्पदादिभ्यो कर्तरि स्त्रियां क्तिन्क्विपौ भवतः ॥ संपत्तिः विपत्तिः आपत्तिः प्रपत्तिः संवित्तिः । क्विप् । सम्पत् विपत् आपत् प्रतिपत् आशीः । आङश्शासूङ् इच्छायाम् । शासः क्ङिति इतीत् । संवित् परिषत्

**२०२५ यूतिजूतिसातिहेतिकिर्त्यटाट्यामृगयेच्छायाच्याकृपाः** ।४।४।७३। यूत्यादयः स्त्रियामकर्तरि निपात्यन्ते॥ यूतिः जूतिः सातिः हेतिः कीर्तिः आटाट्या मृगया इच्छा याच्ञा कृपा ॥

**२०२६ णिवेत्त्यासश्रन्थघट्टवन्दो नः** ।४।४।७५। ण्यन्तेभ्योऽवेत्त्यादिभ्यश्च स्त्रियामकर्तरि अनो भवति ॥ एधना भावना पाचना कारणा हापना चोरणा लक्षणा योजना वेदना आसना श्रन्थना घट्टना वन्दना ॥

**२०२७ सृचरो यः** ।४।४।७८। परेः सृचरिभ्यां स्त्रियामकर्तरि यो भवति ॥ परिसर्या परिचर्या ॥

**२०२८ जागुरश्च** ।४।४।७९। जागर्तेरकर्तरि स्त्रियामट् भवति यश्च ॥ जागरा जागर्या ॥

**२०२९ प्रत्ययात्** ।४।४।८०। प्रत्ययान्तात् स्त्रियामकर्तरि अट् भवति ॥ गोपाया चिकित्सा तितिक्षा चिकीर्षा कण्डूया लोलूया पुत्रीया पुत्रकाम्या ॥

---

१ यु मिश्रणे अत्र दीर्घो निपात्यते । जु इति सौत्रो धातुः । षो अन्तकर्मणि अत स्यतेरित्वाभावः । हेतिः हन्तेर्हिनोतेर्वा हे भावः । कृत संशब्दने कीर्तयतेः संज्ञायां क्तिन् ॥ अटतेर्यः यङ्क द्विवचनम् । मृगयतेरिच्छतेश्चरः शप् च । इच्छेति भावे । अकर्तरीति सामान्येनाधिकारेऽप्यभिधानतोऽर्थव्यवस्था ॥

२०३० गुरोश्च हलः ।३।३।१०३। गुरुमतो हलन्ताद्धातोरकर्तरि स्त्रियामङ् भवति ॥ स्पर्द्धा बाधा ईक्षा भिक्षा ईहा चेष्टा ईडा सेवा इत्यादयः ॥

२०३१ षिद्भिदादिभ्योऽङ् ।३।३।१०४। षितश्चिन्त्यादिभ्यश्च स्त्रियामकर्तरि अङ् भवति ॥ ङ इत् । घटा व्यथा प्रथा म्रदा त्वरा । ऋदृशोऽङि गुणः । जरा क्षिया चिन्ता पूजा कथा कुम्भा चर्चा अन्तर्धा ॥ लिङ्गान्तरे प्रत्ययान्तरमपि । चर्चः अन्तर्धिरित्यादि ॥

२०३२ उपसर्गादातः ।३।३।१०६। उपसर्गादादन्तात् धातोः स्त्रियामकर्तरि अङ् भवति ॥ प्रज्ञा प्रदा उपधा ॥

२०३३ भिदादयः क्वचित् ।३।३।१०४। भिदादयः स्त्रियामकर्तरि निपात्यन्ते क्वचिदर्थविशेषे ॥ भिदा विदा खिदा छिदा आरा धारा हारा गुहा इत्यादयः प्रयोगगम्याः ॥

२०३४ संज्ञाभावे ण्वुः ।३।३।१०९। धातोरकर्तरि संज्ञायां भावे च स्त्रियां ण्वुर्भवति ॥ प्रच्छर्दिका प्रवाहिका प्रस्कन्दिका विचर्चिका एवंनामानो व्याधयः । भावे । आसिका शायिका इत्यादि ॥

२०३५ प्रश्नाख्याने वेञ् च ।३।३।११०। प्रश्ने प्रतिवचने च धातोरकर्तरि स्त्रियामिञ् ण्वुश्च वा भवतः ॥ पक्षे यथा प्राप्तं च । कां कारीं कां कारिकां कां क्रियां कां कृतिं कां कृत्यां वा अकार्षीः । सर्वाः कारीः कारिकाः क्रियाः कृतीः कृत्याः अकार्षम् । एवं पाठी पाठिका पठितिः पाचो पाचिका पक्तिः गणी गणिका गणना इत्यादि ॥

२०३६ पर्यायार्हर्णोत्पत्तिषु ण्वुः ।३।३।१११। धातोरकर्तरि स्त्रियां

---

१ गुरोरिति किं? निपतीतिः । निगृहीतिः । हल इति किं? नीति शंसीतिः । अभ्यादित्वादाप्तिः । राद्धिः । दीप्तिः । दप्तिः ॥

२ धर्माद्धेः परिचितपरीक्षणमुपधा । उपसर्गादिति किं? दत्तिः । श्रद्धेति श्रद्धाश्रद्धाञ्चावृत्तेर्णः इति निपातनातिसिद्धम् ॥

३ ऋणेऽर्थे । क्तिनाद्यपवादः । भोपालिकामर्हति भोपालिकामुपभोक्तुं समर्थो भवतीत्यर्थः ॥

ण्वुर्भवति पर्यायादौ ॥ भवतः आसिका । भवतः शायिका । भवतो गामिका आसनादिपर्याय इत्यर्थः । घृतभोजिका उदपादि । गोपालिकामर्हति भवान् । इक्षुभक्षिकां धारयसि ॥

**२०३७ नञोऽनिः शापे** ।४।४।८८। नञो धातोरकर्तरि स्त्रियाम-निर्भवति शापे ॥ अगमानिस्ते वृषल भूयात् इत्यादि ॥

**२०३८ नब्भावे क्तोऽभ्यादिभ्यः** ।४।४।८९। धातोर्नपुंसके भावे क्तो भवति न भ्यादिभ्यः ॥ हसितं जल्पितं शयितम् आसितं नृत्तं स्फुरितं भाषितम् इत्यादि । भ्यादिभ्यः । भयं वर्षमित्यादि ॥

**२०३९ करणाधारे चानट्** ।४।४।९०। करणे आधारे नब्भावे च धातोरनड् भवति न भ्यादिभ्यः ॥ ट इत् । विचयनी इध्मव्रश्चनः फलशा-तनः श्मश्रुकर्तनः । आधारे शयनम् अधिकरणं गोदोहनी तिलपीडनी राज-धानी दशनं । प्रश्नथेति नलुक् । नब्भावे भवनं हसनं जल्पनं शयनं कथ-नं तक्षणमित्यादि । निष्ठीवनं निष्ठेवनं सीवनं सेवनम् इति बहुलाधिकारात् ॥

**२०४० पुन्नाम्नि घः प्रायः** ।४।४।९१। पुन्नाम्नि पुल्लिङ्गे नाम्नि करणाधारयोर्धातोर्घो भवति ॥

**२०४१ घेऽद्ग्याद्युपसर्गस्य** ।४।१।२१०। एकोपसर्गस्य छदेरुपा-न्त्यस्य घपरे णौ ह्रस्वो भवति ॥ प्रच्छाद्यते अनेनेति प्रच्छदः उरश्छदः दन्तच्छदः सितच्छदः प्लवः करः । अधिकरणे । आलीयते अस्मिन्नित्या-लयः आकरः प्रायोग्रहणादनडादिरपि ॥

---

१ क्वचिन्न भवतीत्यपीत्यर्थः । पुन्नाम्नीति किं? हरणो दण्डः । पुंग्रहणं किं? विच-यनी प्रसादनं । प्राय इति किं? दोहनः प्रसादनः । घकारो घेऽद्ग्याद्युपसर्गस्येति विशे-षणार्थः ॥

२ यद्यपि यस्य द्व्यादयः सन्ति तस्य द्वावपि स्तः तथापि सङ्ख्योत्तरोपजायमाना सत्य-पि तत्र संख्यान्तरे संख्यान्तरकृतं वापदेशं निर्वर्तयति । न हि लोके द्विपुत्र आनीयता-मित्युक्ते त्रिपुत्र आनीयते इत्यादिग्रहणम् । द्वि आदिर्येषां ते द्व्यादय उपसर्गा यस्यासौ तथोक्तः पुनर्नञ् ॥ एत्य कुर्वन्त्यस्मिन्निति आकरः ॥

२०४२ **गोचरसञ्चरवहव्रजव्यजापणनिगमम्**[1] ।४।४।९२। गोचरादयः करणाधारयोः पुन्नाम्नि घान्ता निपात्यन्ते ॥ गावश्चरन्त्यस्मिन् इति गोचरः सञ्चरः कषः निकषः खलः भगः वहः व्रजः व्यजः आपणः निगमः ॥

२०४३ **हलो घञ्** ।४।४।९३। हलन्तात् पुन्नाम्नि करणाधारयोर्घञ् भवति ॥ लेखः वेष्टः बन्धः वेगः अपामार्गः मार्गः आरामः प्रासादः ॥

२०४४ **तॄस्त्रोऽवात्** ।४।४।९४। अवात् तॄस्तॄभ्यां पुन्नाम्नि करणाधारयोर्घञ् भवति ॥ अवतारः अवस्तारः ॥

२०४५ **समश्च ह्वः** ।४।४।९५। समवाभ्यां ह्वः पुन्नाम्नि करणाधारयोर्घञ् भवति ॥ संहारः अवहारः ॥

२०४६ **जारदाराध्यायन्यायोद्यावानायाधारावायाः**[2] ।४।४।९६। जारादयः पुन्नाम्नि घञन्ता निपात्यन्ते ॥ जारः दाराः अध्यायः न्यायः उद्यावः आनायः आधारः आवायः ॥

२०४७ **दुस्स्वीषतः कृच्छ्राकृच्छ्रे खः**[3] ।४।४।९९। कृच्छ्रे दुःखे दुसः अकृच्छ्रे स्वीषद्भ्यां च धातोः खो भवति ॥ स च सकर्मकात् कर्मणि अकर्मकाद् भावे ॥ ख इत् । दुःखेन भूयते अनेन दुर्भवं । सुखेन

---

१ हलो घञोऽपवादः । सञ्चरत्यनेनेति सञ्चरः । कषन्त्यस्मिन्निति कषः । खलन्ति सञ्चिन्वतेऽस्मिन्निति खलः । वहः स्कन्दप्रदेशे । व्यजः अज क्षेपणे ॥ आपणन्ति व्यवहरन्त्यस्मिन्नित्यापणः । नियमेन गच्छन्त्यस्मिन्निति निगमः ॥ पदमिति सुड् पदमिति निपातनात्सिद्धम् ॥

२ जीर्यतेऽनेनेति जारः । दीर्यते पुरुष एभिरिति दाराः । अधीयतेऽस्मिन्नित्यध्यायः । नयत्यस्मिन्निति अनेनेति वा न्यायः । उद्युवन्त्यनेनेति उद्यावः । आनीयतेऽनेनेत्यानायः आनायः पुंसि जालं स्यादित्यमरः ॥ आध्रियतेऽस्मिन्नित्याधारः ॥ एत्य वयन्त्यस्मिन्नित्यावायः ॥

३ इतः करणाधारयोरिति निवृत्तम् । कृच्छ्रं दुःखं अकृच्छ्रं सुखम् । घञाद्यपवादः । सम्भवापेक्षं विशेषणम् । दुस्स्वीषत इति किं? कृच्छ्रेण कार्यः । कृच्छ्राकृच्छ्र इति किं? ईषल्लभ्यं अल्पलभ्यमित्यर्थः । खकार उत्तरत्र ममर्थः खार्थेति विशेषणार्थश्च ॥

भूयतेऽनेन सुभवम् । ईषद्भवम् । एवं दुश्शयं सुशयम् ईषच्छयं । दुः-खेन क्रियते दुष्करः । सुखेन क्रियते सुकरः ईषत्करः एवं दुर्बोधः सुबोधः ईषद्बोधः दुर्लभः सुलभः ईषल्लभः इत्यादि सर्वत्र योज्यं ॥

२०४८ च्वौ कर्त्राप्याद् भूकृञः ।४।४।१००। कृच्छ्राकृच्छ्रयो-र्दुस्स्वीषद्भ्यः पराभ्यां च्व्यर्थे वर्तमानाभ्यां कर्तृकर्मभ्यां परात् भुवः कृञश्च खो भवति ॥ खित्त्वात् मम् । दुःखेनानाढ्येनाढ्येन भूयते दुराढ्यंभवं देवदत्तेन । एवं स्वाढ्यंभवम् ईषदाढ्यंभवं । दुःखेनानाढ्यः आढ्यः क्रियते दुराढ्यंकरः स्वाढ्यंकरः ईषदाढ्यंकरः ॥

२०४९ आतोऽनः ।४।४।१०१। कृच्छ्राकृच्छ्रयोर्दुस्स्वीषद्भ्यः आद-न्तात् धातोरनो भवति ॥ खापवादः । दुर्ज्ञानं सुज्ञानं ईषज्ज्ञानम् इत्यादि ॥

२०५० शास्युधिदृशिधृषिमृषः ।४।४।१०२। कृच्छ्राकृच्छ्रयो-र्दुस्स्वीषद्भ्यः शासादिभ्योऽनो भवति ॥ दुःशासनः सुशासनः ईषच्छासनः दुर्योधनः सुयोधनः ईषद्योधनः दुर्दर्शनः सुदर्शनः ईषद्दर्शनः दुर्धर्षणः सुधर्ष-णः ईषद्धर्षणः दुर्मर्षणः सुमर्षणः ईषन्मर्षणः । योगविभागात् खोऽपि । दुर्द्धर्ष इत्यादि ॥

२०५१ निषेधेऽलंखल्वोः क्त्वा ।४।४।१४१। अलमि खलौ चोपपदे धातोः क्त्वा वा भवति निषेधे ॥ क इत् । तस्वदित्यव्ययत्वम् । अलं कृत्वा । खलु कृत्वा । पक्षे । अलं करणेन । अनिषेधे । अलङ्कारः इत्यादि ॥

२०५२ परावरे ।४।४।१४२। परावरतजे गम्ये धातोः क्त्वः प्यो वा भवति ॥

२०५३ क्त्वोऽनञः प्यः ।२।२।१७१। समासान्तस्य क्त्वः प्यो

---

१ निषेधे वर्तमानयोरलं खलु इत्येतयोरुपपदयोर्धात्वोः क्त्वाप्रत्ययो वा भवति ॥ वा-चनाद्यप्राप्तं च ॥ अलं बाले रुदित्वा अलं बाले रुदितेनेत्यर्थः । क्त्वाविषये खलुशब्दो निषेधार्थो द्रष्टव्यः । अलंखल्वोरिति किं? मा भाविनाऽर्थौ रुदितेन ॥

२ अनञ इत्यनेन नञ्सदृशमव्ययं प्राप्तं तेन परमकृत्वा इत्यादौ प्यादेशो न भवति ॥

भवति न नञः ॥ प इत् । पर्वतमतिक्रम्य नदी । नदीमगत्वा पर्वतः ॥

२०५४ प्राक्काले ।४।४।१४४। अपरकालेन धातुनैककर्तृकात् प्राक्काले वर्तमानात् धातोः क्त्वा भवति ॥ भोजनं पूर्वं पश्चाद्व्रजनं । भुक्त्वा व्रजति । एधित्वा वन्दित्वा । यौ हलादेरिति वा कित्त्वं । मुदित्वा मोदित्वा हत्त्वा तितिक्षित्वा तिजित्वा तेजित्वा त्रपित्वा त्रप्त्वा मीमांसित्वा पनायित्वा पनित्वा क्षमित्वा । किजलीति दीर्घः । क्षान्त्वा कामयित्वा ॥

२०५५ क्त्व्यूदितः ।४।२।१६१। ऊदितो धातोः क्त्वाया इड्वा भवति ॥ कामित्वा कान्त्वा क्नूयित्वा गाहित्वा गाढ्वा रिमित्वा च्युत्वा घृत्वा मित्वा दत्त्वा पवित्वा पूत्वा डयित्वा मेदित्वा स्वेदित्वा स्तम्भित्वा स्तब्ध्वा स्रंसित्वा स्रस्त्वा भ्रंशित्वा भ्रष्ट्वा ध्वंसित्वा ध्वस्त्वा ॥

२०५६ स्कि ।४।१।१५६। धातोरिडादौ क्त्वायां किद्वन्न भवति ॥ वर्तित्वा वृत्त्वा स्यन्दित्वा ॥

२०५७ स्कन्दस्यन्दः ।४।१।१५७। स्कन्दस्यन्दोः क्त्वायां किद्वन्न भवति ॥ स्यन्त्वा कल्पित्वा क्लृप्त्वा स्मृत्वा । कित्युगिति नेट् । दीर्त्वा सोढ्वा सहित्वा रत्वा बुध्वा पतित्वा वमित्वा वान्त्वा सत्त्वा शस्त्वा रूढ्वा भूत्वा जित्वा धीत्वा पत्वा भ्रात्वा ध्मात्वा स्थित्वा दात्वा ग्लात्वा मीत्वा ध्यात्वा तीर्त्वा चिकित्सित्वा सेधित्वा सिधित्वा सिध्वा स्कन्त्वा अक्षित्वा अक्त्वा ॥ लुञ्च अपनये ॥

२०५८ थफवञ्चिलुञ्च्यृतितृषिमृषिकृश इटि ।४।१।१५१। नोपान्त्ययोः स्थफान्त्ययोर्वञ्च्यादीनां च इडादौ क्त्वायां किद्वद्वा भवति ॥

---

१ नकार उपान्त्ये सति थकारान्तफकान्तयोर्वाचि लुंचि ऋति तृषि मृषि कृश इत्येतेषां च इडादौ क्त्वाप्रत्यये किद्वत्कार्यं भवति वा ॥ क्तौ नि प्रतिषेधविकल्पः । श्रथित्वा श्रन्थित्वा ग्रन्थित्वा । गुफित्वा गुम्फित्वा । न्युपान्त्य इति किं? कुथ कोथित्वा । पुथ पोथित्वा । रिफ रेफित्वा । न्युपान्त्य इति थफविशेषणं नान्येषां सम्भवव्यभिचारात् । क्त्वायामिति किं? ग्रथितः ग्रथितवान् । इटीति किं? वक्त्वा मृष्ट्वा । वंचु मृषु इत्यूदितौ क्त्वायां विकल्पितेटौ ॥

लुचित्वा लुञ्चित्वा लोचित्वा वक्त्वा त्यक्त्वा ॥

२०५९ नशाजस्ति त्वि न्युपान्त्ये ।४।१।१५०। नशः नोपान्त्यस्य च जान्तस्य तादौ क्त्वायां किद्वद्वा भवति ॥ सक्त्वा सक्त्वा गोपायित्वा गुपित्वा गुप्त्वा गोपित्वा गत्वा नत्वा यत्वा क्रमित्वा ॥

२०६० क्रमस्त्वि ।४।१।१४०। क्रमो जलादौ क्त्वायामचो दीर्घो वा भवति ॥ क्रान्त्वा क्रन्त्वा भ्रमित्वा भ्रान्त्वा शसित्वा शस्त्वा । मृषू सहने । मृषित्वा मर्षित्वा मृष्ट्वा कृष्ट्वा प्लुषित्वा प्लोषित्वा प्लुष्ट्वा दृष्ट्वा दष्ट्वा शंसित्वा शस्त्वा दग्ध्वा । इटि क्त्वीत्यकित्त्वान्नेक् । श्वयित्वा । क्तक्तामितीट् ॥

२०६१ मृड्मृद्गुदकुषक्लिश्वदवसः ।४।१।१५८। मृडादीनामिडादौ क्त्वायां किद्वद् भवति ॥ उषित्वा उदित्वा इष्ट्वा उप्त्वा ऊढ्वा उत्वा वीत्वा हूत्वा धावित्वा धौत्वा पक्त्वा भक्त्वा रक्त्वा रङ्क्त्वा खनित्वा खात्वा शप्त्वा गूहित्वा गूढ्वा श्रित्वा हृत्वा नीत्वा ॥ अथादादिः ॥ जग्ध्वा विदित्वा हत्वा भूत्वा मार्जित्वा मृष्ट्वा उक्त्वा रुदित्वा सुप्त्वा जागरित्वा दरिद्रित्वा शासित्वा शिष्ट्वा वशित्वा रुत्वा इत्वा यात्वा मित्वा ईशित्वा सूत्वा शयित्वा द्विष्ट्वा ऊर्णुत्वा स्तुत्वा उक्त्वा ॥ अथ ह्वादिः ॥

२०६२ हाकस्त्वि ।४।२।११७। हाकस्तादौ क्त्वायां हिर्भवति ॥ हित्वा मित्वा भृत्वा दत्त्वा हित्वा निक्त्वा । अथ दिवादिः ॥ देवित्वा । ऊच् । द्यूत्वा नर्तित्वा क्षिप्त्वा विद्ध्वा पुष्ट्वा क्षुधित्वा क्षोधित्वा शुद्ध्वा शमित्वा शान्त्वा असित्वा अस्त्वा भ्राशित्वा भ्रष्ट्वा तृषित्वा तर्षित्वा रुषित्वा रोषित्वा रुष्ट्वा क्लिदित्वा क्लेदित्वा क्लित्वा गर्धित्वा गृद्ध्वा राधित्वा रद्ध्वा नशित्वा नष्ट्वा नंष्ट्वा द्रुहित्वा द्रोहित्वा द्रुग्ध्वा द्रूढ्वा ॥

---

१ नकार उपान्त्ये सति । नोपान्त्य इति विशेषणं जान्तस्य । तांति किं? विभज्य । त्वीति किं? नंष्ट्वा ॥

२ त्व्यूदितः इति इट् विकल्प्यते । क्लिजलि कित्यनुनासिक इत्यादिना नित्यं दीर्घप्रासावनेन विकल्पः ॥

३ मृड् सुखसहने । मृद क्षोदे । गुद परिवेष्टने । कुष् निष्कर्षे । क्लिशो विबाधने । नेति निर्वृत्तम् । क्तांति निषेधे यौ हलादेरिति विकल्पे च प्राप्ते वचनम् ॥

२०६३ जॄव्रश्च्योः क्त्वि ।७।२।५५। जॄव्रश्चिभ्यां क्त्वायां इड् नित्यं भवति ॥ जरित्वा जरीत्वा शित्वा शात्वा छित्वा छात्वा सित्वा दित्वा ज-नित्वा जात्वा क्लिशित्वा क्लेशित्वा क्लिष्ट्वा युध्वा मत्वा सृष्ट्वा सूत्वा लीत्वा नध्वा ॥ अथ स्वादिः ॥ सुत्वा वृत्वा दुत्वा दूत्वा श्रुत्वा आप्त्वा दम्भि-त्वा दब्ध्वा अशित्वा अष्ट्वा ॥ अथ क्र्यादिः । क्रीत्वा गृहीत्वा पूत्वा पूर्त्वा ईर्त्वा जीत्वा ज्ञात्वा बध्वा । किद्वत्त्वे नलुक् । श्रथित्वा श्रन्थित्वा मथित्वा मन्थित्वा ग्रथित्वा ग्रन्थित्वा मृदित्वा मृडित्वा कुषित्वा क्षुभित्वा क्षोभित्वा क्लिशित्वा क्लिष्ट्वा अशित्वा मुषित्वा ॥ अथ तुदादिः ॥ तुत्त्वा भृष्ट्वा लिप्त्वा सिक्त्वा मुक्त्वा लुप्त्वा कर्तित्वा क्षित्वा मृत्वा कीर्त्वा इत्वा पृष्ट्वा मक्त्वा मङ्क्त्वा रुक्त्वा भुक्त्वा स्पृष्ट्वा मृष्ट्वा विष्ट्वा नुत्वा व्रश्चित्वा उज्झित्वा लुभित्वा लोभित्वा। गुफ गुम्फ ग्रन्थने । गुफित्वा गोफित्वा गुम्-फित्वा इषित्वा एषित्वा इष्ट्वा कुटित्वा गुरित्वा विजित्वा स्वक्त्वा स्वङ्-क्त्वा रब्ध्वा लब्ध्वा ॥ अथ तनादिः । तनित्वा तत्वा सानित्वा सात्वा क्षणित्वा क्षात्वा मनित्वा मत्वा ॥ अथ रुधादिः । रुद्ध्वा भित्त्वा युक्त्वा इन्धित्वा पिष्ट्वा भक्त्वा भङ्क्त्वा अञ्जित्वा अक्त्वा अङ्क्त्वा ॥ अथ चुरा-दिः । चोरयित्वा कथयित्वा इत्यादि ॥ उपसर्गपूर्वत्वे ॥

२०६४ डाच्व्यूर्याद्यनुकरणं च ति ।१।१।२६। डाजन्तं च्व्य-न्तमूर्याद्यनुकरणं उपसर्गाश्च धातोः सम्बन्धि तिसंज्ञं भवति ॥ तिदुस्स्वतीति समासे ॥

२०६५ क्त्वोऽनञः प्यः ।२।२।१७१। समासान्तक्त्वायाः प्यो भवति न नञः ॥ प इत् । तगर्थः । प्रैध्य अभिवन्द्य प्रहृत्य अपत्रप्य प्रक्षम्य । णिलुक् । प्रकाम्य प्रोय्य विगाह्य विस्मित्य प्रच्युत्य विधृत्य ॥

१ जॄ वयोहानौ इति क्र्यादिः । जॄषीति दैवादिकस्य सानुबन्धस्यंट् । क्र्यादौ जीर्त्वा इति चिन्तामणावुक्तत्वात् ॥

२ डाच च्विश्च ऊर्यादि च अनुकरणं चेति द्वन्द्वः । लघ्वध्यजाद्यदल्पाजर्च्यमेकमिति च्वेः पूर्वनिपातः प्राप्नोति । अत्र तु च्विश्च ऊर्यादि च अनुकरणं चेति द्वन्द्वे पुनर्डाचा द्वन्द्वः । श्रूयमाणः शब्दो व्यक्तोऽव्यक्तो वा अभेदोपचारेण कुतश्चित्सादृश्यादनु-क्रियते तदनुकरणम् ॥

२०६६ इ मेङः ।४।२।१०५। मेङः प्ये इद्वा भवति ॥ अपमित्य अपमाय प्रदाय परित्राय प्रपूय उड्डीय अभिद्य प्रस्विद्य विस्रम्य विस्रस्य अवभ्रश्य प्रध्वस्य विवृत्य प्रस्यद्य प्रक्लृप्य विस्मृत्य प्रदीर्य प्रसह्य ॥

२०६७ मो वा ।४।१।२६३। हनादीनां मध्ये मान्तस्य प्ये लुग् वा भवति ॥ विरम्य विरत्य निबुध्य विपत्य प्रवम्य प्रसद्य प्ररुह्य अनुभूय विजित्य प्रधाय प्रपाय आघ्राय आध्माय प्रस्थाय प्रदाय प्रम्लाय सञ्ज्ञाय आध्याय वितीर्य विचिकित्स्य प्रसिध्य प्रस्कद्य प्राछ्य निलुच्य प्रवच्य सन्त्यज्य प्रसज्य प्रगुप्य प्रणत्य प्रणम्य नियत्य नियम्य प्रक्रम्य विभ्रम्य प्रमुच्य विकृष्य सम्पृच्य सन्दश्य विदश्य प्रशस्य प्रदह्य प्रतिशुत्य प्रोप्य अनूद्य समिज्य प्रोप्य । प्ये चेति नेट् । प्रवाय ॥

२०६८ व्यः ।४।१।११३। व्येञः प्ये परे यञ इप्न भवति ॥ संव्याय ॥

२०६९ परेर्वा ।४।१।११४। परेर्व्येञः प्ये यञ इप्वा भवति ॥ परिव्याय परिवीय आहूय प्रधाव्य विपच्य सम्भज्य विरज्य प्रखन्य प्रखाय अभिशस्य विगुह्य आश्रित्य प्रहृत्य प्रकृत्य प्रणीय ॥ अदादिः ॥ प्रजग्ध्य संविद्य ॥

२०७० प्ये ।४।१।२६२। क्नादीनां प्ये लुग् भवति ॥ प्रहत्य प्रमृज्य प्रोच्य प्ररुद्य प्रसुप्य प्रजागर्य प्रदरिद्य अनुशिष्य समुश्य प्ररुत्य समित्य अधीत्य प्रयाय प्रमाय अधीश्य प्रसूय अतिशय्य अधीत्य प्रद्विष्य प्रोर्णुत्य प्रस्तुत्य प्रोच्य ॥ ह्वादिः ॥ आहुत्य विहाय प्रमाय निभृत्य प्रदाय विधाय प्रणिज्य ॥ दिवादिः ॥ दीर्घः । प्रदीव्य प्रनृत्य संक्षिप्य आविद्य प्रपुष्य प्रक्षुध्य संशुध्य प्रशम्य प्रास्य प्रभ्रश्य वितृष्य प्रकुप्य विक्लिद्य अभिगृध्य प्रणश्य अभिद्रुह्य निर्जीर्य निशाय निच्छाय व्यवसाय प्रदाय प्रजाय प्रजन्य संक्लिश्य नियुध्य अभिमत्य उपयुज्य विसृज्य प्रसूय विलीय सन्नह्य ॥ स्वादिः ॥ प्रसुत्य आवृत्य विधूय संश्रुत्य प्राप्य प्रधृष्य प्रदभ्य व्यश्य ॥ क्र्यादिः ॥ विक्रीय प्रगृह्य सम्पूर्य आपूर्य आचीर्य ॥

२०७१ ज्यः ।४।१।११२। ज्यः प्ये यञ इग् न भवति ॥ प्रज्याय विज्ञाय संबध्य प्रश्रथ्य विमथ्य संग्रथ्य प्रमृद्य सम्मृज्य प्रगुध्य निष्कुष्य

संक्षुभ्य संक्लिश्य प्राश्य प्रमुष्य ॥ तुदादिः ॥ वितुद्य प्रभृज्ज्य आलिप्य निषिच्य विमुच्य विलुप्य विकृत्य ॥

२०७२ क्षेरीः ।४।२।१०६। क्षेः प्ये ईद् भवति ॥ प्रक्षीय प्रमृत्य विकीर्य आहत्य आपृच्छ्य निमज्ज्य प्ररुज्य संस्पृश्य आमृश्य निविश्य विनुद्य प्रवृश्च्य प्रोज्झ्य प्रलुभ्य निगुफ्य अभीप्य सङ्कुच्य आगूर्य उद्विज्य अभ्यज्य आरभ्य उपलभ्य ॥ तनादिः ॥ प्रतत्य प्रसत्य प्रसाय प्रक्षत्य विमत्य ॥ रुधादिः ॥ निरुध्य विभिद्य नियुज्य सामिध्य प्रपिष्य विभज्य व्यज्य ॥ चुरादिः ॥ प्रचोर्य प्रचिन्त्य ॥

२०७३ लघोर्हलः प्येऽय् ।४।२।१०३। लघोः परो यो हल् ततः परस्य णेः प्येऽय् भवति ॥[1] प्रकथय्य विगणय्य विघटय्य प्रशमय्य ॥

२०७४ वाऽऽप्नोः ।४।२।१०४। आप्नोतेर्णेः प्ये अय् वा भवति ॥ प्रापय्य प्राप्य । डाच् । पटपटाकृत्य । च्वि । शुक्लीकृत्य । ऊर्यादि । ऊरीकृत्य । अनुकरणं । खात्कृत्य ॥

२०७५ तिरोऽन्तर्धौ ।१।१।३१। अन्तर्धौ विधाने तिरस् इत्यव्ययं धातोः सम्बन्धि तिसंज्ञं भवति ॥ तिरोभूय तिरोधाय ॥

२०७६ नित्यं हस्तेपाणौ स्वीकृतौ ।१।१।३६। हस्ते पाणौ इत्येते अव्यये स्वीकृतौ कृञो धातोः सम्बन्धिनी तिसंज्ञे भवतः ॥ हस्तेकृत्य पाणौकृत्य ॥

२०७७ प्राध्वं बन्धे[2] ।१।१।३६। आनुकूल्ये प्राध्वमित्यव्ययं कृञो धातोस्सम्बन्धि तिसंज्ञं भवति ॥ प्राध्वंकृत्य । शेषं सर्वं शास्त्रे ज्ञेयं ॥

२०७८ पूर्वाग्रे प्रथमेऽभीक्ष्ण्ये[3] खमुञ् ।४।४।१४५। पूर्वादिषूपप-

---

१ धातोर्यो लघुस्ततः परो या हल् तस्मात्परस्य णेः नित्यं अय् इत्यादेशो भवति ॥ लघोरिति किं? प्रतिपाद्य गतः । हल् इति भूतपूर्वगतिव्युदासार्थम् । लघोरिति ह्युच्यमाने हल इत्यसति प्ये लघोर्व्यवहितो णिर्न भवति । तत्र किमेकेन वर्णेन व्यवधानमात्रेऽयं उत भूतपूर्वगतिरिति सन्दिह्येत । तत्र पूर्वगतौ प्रकटय्य इत्यादावेव स्यात् ॥

२ प्राध्वमिति मकारान्तमव्ययं आनुकूल्ये वर्तते । आनुकूल्यार्थकं प्राध्वमित्यमरः ॥ तदानुकूल्यं बन्धहेतुकं बन्ध इत्युच्यते । तथाच बन्धहेतुके आनुकूल्ये मान्तः प्राध्वमिति शब्दः कृञो धातोः सम्बधी तिसंज्ञो भवति ॥ बन्धे इति किं? प्रगतमध्वानं प्राध्वं ॥

३ पूर्वः अग्रे प्रथमः इत्येतेषूपपदेषु आभीक्ष्ण्यधात्वर्थोपाधौ वक्ष्यमाणे तुल्यकर्तृकेऽर्थे

देषु आभीक्ष्ण्ये चार्थविशेषणे प्राक्काले धातोः खमुञ् वा भवति॥ खुतौ जश्चेतः । पूर्वभोजं अग्रेभोजं प्रथमंभोजं दायंदायं । पक्षे त्वा । पूर्वं भुक्त्वा इत्यादि ॥

२०७९ **अन्यथैवंकथमित्थमः कृञोऽनर्थकात्** ।४।४।१४६। अन्यथादिभ्यः स्वार्थरहितात् कृञस्तुल्यकर्तृके खमुञ् वा भवति ॥ अन्यथाकारम् एवंकारं कथंकारम् इत्थंकारं भुङ्क्ते । पक्षे । अन्यथा कृत्वा भुङ्क्ते इत्यादि ॥

२०८० **आप्यादाक्रोशे** ।४।४।१४८। आक्रोशे गम्ये कर्मणः कृञः प्राक्काले खमुञ् वा भवति तुल्यकर्तृके ॥ चोरंकारमाक्रोशति । चोरं कृत्वा आक्रोशति । चोरोऽयमित्याक्रोशतीत्यर्थः ॥

२०८१ **विदृशिभ्यः कात्स्न्र्ये णम्** ।४।४।१५०। कर्मणो विदादिभ्यो दृशेश्च प्राक्काले तुल्यकर्तृके णम् वा भवति कात्स्न्र्ये गम्ये ॥ अतिथिवेदं भोजयति । कन्यादर्शं वरयति ॥

२०८२ **यावतो जीवविन्दात्** ।४।४।१५१। यावतो जीवविन्दाभ्यां णम् वा भवति तुल्यकर्तृके ॥ यावज्जीवमधीते । यावज्जीवति तावदधीते इत्यर्थः । यावद्वेदं गृह्णाति । यावद्विन्दति तावद्गृह्णातीत्यर्थः ॥

२०८३ **चर्मोदरात् पूरेः** ।४।४।१५२। चर्मोदराभ्यां पूरेः प्राक्काले तुल्यकर्तृके णम् वा भवति ॥ चर्मपूरमास्ते । उदरपूरमास्ते । चर्मोदरं च पूरयित्वा आस्ते इत्यर्थः ॥

२०८४ **तृतीयोपदंशः** ।४।४।१५५। तृतीयान्तेन युक्तादुपदंशः प्राक्काले तुल्यकर्तृके णम् वा भवति॥ मूलकोपदंशं भुङ्क्ते मूलकेनोपदश्य भुङ्क्ते इत्यर्थः

२०८५ **हिंसार्थात् तुल्याप्यात्** ।४।४।१५६। तृतीयान्तेन युक्तात्तुल्यकर्मणः तुल्यकर्तृकाच्च हिंसार्थाद्धातोः प्राक्काले णम् वा भवति ॥ खङ्गप्रहारं शत्रुं जयति । खङ्गेन प्रहृत्य शत्रुं जयति इत्यर्थः ॥

---

वर्तमानाद्धातोः ततो खमुम् प्रत्ययो वा भवति । खमुञा मुक्ते क्त्वा ॥ अस्यायं वाक्यार्थो भवति पूर्वं भुज्यते ततो व्रजतीति पूर्वशब्दोऽत्र प्राक्काले न तत्पदे ॥

१ बहुवचनात् त्रयाणामपि विदीनां ग्रहणं । अन्यथा अदायनदायोरदादेरेव ग्रहणं निरनुबन्धकस्येति वा । कात्स्न्र्ये इति किं? अतिथिं विदित्वा भोजयति । कन्यां दृष्ट्वा वरयति । विद विद विद विदः । विदश्च दृशिश्च विदृदृशयस्तेभ्यः इति समासः।

२०८६ तूर्णेऽपादानेन ।४।४।१५९। अपादानेन युक्ताद्धातोः प्राक्काले तुल्यकर्तृके णम् वा भवति तूर्णे गम्ये ॥ शय्योत्थायं धावति । शय्यायाः उत्थाय तूर्णं धावतीत्यर्थः ॥

२०८७ द्वितीयया ।४।४।१६०। द्वितीयान्तेन युक्ताद्धातोः प्राक्काले तुल्यकर्तृके णम् वा भवति तूर्णे गम्ये ॥ यष्टिग्राहं धावति । यष्टिं गृहीत्वा तूर्णं धावतीत्यर्थः ॥

२०८८ तृष्यसः कालेनान्तरे ।४।४।१६३। कालवाचिना द्वितीयान्तेन युक्ताभ्यामन्तरे तृष्यसिभ्यां प्राक्काले तुल्यकर्तृके णम् वा भवति ॥ द्व्यहतर्षं । द्व्यहं तर्षित्वा गावः पिबन्ति । अन्तर्मुहूर्तात्यासम् । अन्तर्मुहूर्तमत्यस्य पर्यासिं लभते इत्यर्थः ॥

२०८९ ग्रहादिशो नाम्ना ।४।४।१६४। द्वितीयान्तेन नामशब्देन युक्तात् ग्रहेरादिशेश्च प्राक्काले तुल्यकर्तृके णम् वा भवति ॥ नामग्राहमाख्याति । नामादेशं वक्ति । नाम गृहीत्वा व्याख्यातीत्यादि ॥

२०९० तूर्ष्णीमा ।४।४।१६८। तूर्ष्णीमित्यव्ययेन युक्ताद् भुवः प्राक्काले तुल्यकर्तृके णम् क्त्वा च भवतः ॥ तूर्ष्णीम्भावं तूर्ष्णीम्भूय तिष्ठति । तूर्ष्णीं भूत्वा तिष्ठतीत्यर्थः ॥

२०९१ स्वाङ्गात् तसा कृभ्वः ।४।४।१६९। तसन्तेन स्वाङ्गवाचिना युक्तात् कृञो भुवश्च णम् क्त्वा च भवतः ॥ मुखतःकारं मुखतःकृत्य मुखतोभावं मुखतोभूय गतः ॥

---

१ ञितृषा पिपासायाम् । असु क्षेपणे । क्रियामन्तरयतीत्यन्तरः क्रियाव्यवधायको विच्छेदकस्तस्मिन् । क्रियाविच्छेदको मध्यस्थः । द्व्यहतर्षं द्व्यहादेः पूर्वापरपानाद्यन्तरे तृष्यति । तृष्यस इति किं? द्व्यहमुपास्य भुङ्क्ते । कालेनेति किं? योजनं तर्पित्वा गावः पिबन्ति । अन्तर इति किं? अहरत्यस्य एष्यन् गतः । क्रिया क्रियामेवान्तर्यतीति क्रियाग्रहणं न क्रियते ॥

२ 'भुवोऽनूचानुलोम्ये ।४।४।१६७। इत्यधिकृत्य । भू इत्येतस्माद्धातोरनूजित्यनेनाव्ययेन योगे आनुलोम्ये गम्यमाने णम्क्त्वाप्रत्ययौ भवतः । आनुलोम्यमानुकूल्यं परचित्ताराधनं । अन्वग्भवं अन्वग्भूय अन्वग्भूत्वा तिष्ठति अनुकूलो भूत्वेत्यर्थः इत्यमोघवृत्तौ ॥

